# आर्य्यप्रभा ।

सुदुर्लभाः सर्व्वमनोरमा गिरः — एकादश संख्या

## मासावतरणिका ।

अस्तापकं ग्रीष्म मपोद मुद्धत माषाढमासः सञ्चाल्यसारथम् ।
आसारसारातिशय प्रसारत आद्यप्रपाताद्धि घनोपतापिनः ॥

## अभिषेकोत्सवः ।

श्रीमन् पञ्चम जर्ज् महोदय ! भवद्राजाभिषेकोत्सव
इंलण्डं परिमण्डय खण्डभवतोब्रह्माण्ड माधावति ।
आनन्दोऽजनि यादृशः श्रवणतोप्यस्मादृशां चेतसि
मन्ये धन्यतमा स्तएव हि जनाः साक्षाच्च यैरीक्षितः ॥ १

राज्ञ्याधिष्ठित मिष्टया निजसुहृद्वर्गैं स्तथा वेष्टितं
मान्यागण्य विभिन्नसैन्यसचिव-व्याप्तं जगन्मोहनं ।
आचार्य्यार्पित राजभूषण युतं तत्ते वपु स्तत्क्षणे
कीदृक् शान्तिमदा स्पदन्तिकजने र्वोवाणि तत्कल्पये ॥ २

नानादेशनिवासिभि र्नृपतिभिः स्वाधीनभावै रपि
यत्ते राजयशुभाभिषेचनमहे सम्मीलनं स्वीकृतं ।
सौजन्यस्य फलं तवैव नृपते ! मन्ये यतो दुर्लभं
सौजन्यं प्रभुता द्वयस्य तुलनाहीने जने कुत्रचित् ॥ ३
ये ये भारतवर्षराजकुलजाः शिक्षागुणग्रास्य ये
कंलक्षेपि निमन्त्रिताः समगमन् ते भाग्यभाजो जनाः।
यस्मादेहिकदृश्यसारसुषमा मालोक्य संलेभिरे
चक्षुःसार्थकतां त्रिकालशुभदां दृष्टिश्च ते दुर्लभां ॥ ४
आवासे स्ववशस्थितानिव सुहृद् यद्भारतीयान्नृपान्
आहूय स्वजनैर्वृतोऽति मधुरैः सम्भाषणे स्तोषयन्।
औदार्य्यं नृपवर्य्य ! राजनिवहेऽलभ्यं समादर्शयत्
तेनातीव महत्त्वमेव भवतो गायन्ति सर्व्वे जनाः ॥ ५
वार्द्धक्ये पि पिता महामहिमतो यद्राजसिंहासन
मध्यारुह्य वशं समस्त ? नयत् स्वल्पै रहो वत्सरैः।
आशासे नृप ! यौवनेऽधिवसता तत्तु त्वया यत्नत
स्तांपन्थानमुपेयुषाति सहसा वाध्याः समस्ता जनाः ॥ ६
सम्राट् भारतमागमिष्यति वचः श्रुत्वेति हृष्टाननैः
सर्व्वैर्दर्श नलालसै रनलसैः संगण्यते वासरः।
आश्चर्यं न विचार्य्यते यदुदितः सूर्य्योपि नो पश्चिमे
दृष्टः शक्यत इत्यहो सुमहतां शक्तिः समाकर्षिणी ॥ ७
राजन् ! स्वीयदयावशंवदतया तस्मात् स्वयं भारते
राज्यासार्द्धमिहैत्य प्राप्ततमया सम्पूरयन्तां वासना।
दुःखानां दुरवस्थतां शमयता कारुण्यमातन्वताम्
सर्व्वेषां प्रबला ऽचलाचभवति प्रीतिश्च वन्दीभवताम् ॥ ८

## कौतुककणा । ( वराकः )

काचित् दरिद्रविधवा वृद्धा आसीत् । सा चकस्मिंश्चित् पर्णकुटीरे एकाकिनी वसतिस्म । एकदा तस्या गृहाभ्यन्तरे चौरः कश्चिदागतः क्षुद्रस्य ज्वलतः मृत्प्रदीपस्य पश्चाद्दन्ति न्यां छायायामुपविष्टः ; अन्यथा कुत्र क्षुद्रगृहस्य उपविशेत् वराकः ।

वृद्धा तु तं दृष्ट्वा प्रदीपं सम्बोध्य आहस्म "प्रदीप ! प्रदीप ! !" ततः- उत्तरमकुर्व्वाणे प्रदीपे साह "प्रतिदिनं त्वयैव साकं उपकथां कृत्वाहं निशां यापयामि, त्वञ्चकथां कथयन् तिष्ठसि, तत्कथमद्य सम्बोधने उत्तरमपि नददासि ।" "तदाकर्ण्य चौर श्चिन्तयामास" दीपः प्रतिदिन मुत्तरं ददाति, अद्यतु मद्दर्शनभीतः नकथयति । भवतु प्रदीप भूत्वा अहमेव उत्तरं करोमि ।" पुनः सम्बोधने चौरेणोक्तं "आदिशतु" इति । ततः सा तं सम्बोध्य कथाः आरेभे

शृणु रे दीप ! तवपितामहस्य ( मत्पतेः ) पूर्व्वं बहुधनान्यासन् । यानि एतानि प्रस्तर-कांस्य-रौप्यद्रव्याणि, एतानि तत्कृतानि । तस्य मरणानन्तरं अधमर्णैरप्रदत्तानि धनानि तैरात्मसात्कृतानि, तेनाह- मिदानीं दरिद्रास्मि । एकदातु तस्य चरण मसेवमानायां मयि शरीर दौर्ब्बल्यात् , नानाविध- विवादवशात् क्रुद्धःस मां ताड़ितवान् । अहन्तु कः कुत्र वर्त्तसे 'कः कुत्र वर्त्तसे मम प्राणायान्ति' इति उच्चैः- चीत्कारमकरवम् । तदाकर्ण्य प्रतिवेशिनः समागताः, ततः

इत्युक्तवत्या मेवतस्यां अनुकृतमाह्वानमाकर्ण्य प्रतिवेशिनः समागताः चौरः मनसि कृतवान् "प्रतिदिनमेवेयमित्थं करोति, तन्नमया भेतव्यम्" । ततःगृहागताः प्रतिवेशिनः किंवृत्तमिति पृष्ट्वा तयाकथितं चौरं दृष्ट्वा सर्व्वे प्रहृत्य धारयामासुः ।

काव्यव्याकरणतीर्थ—श्रीआशुतोष भट्टाचार्य्यः

# हेमप्रभा ।

पूर्व्वतोऽनुवृत्ता

हेमप्रभा (स्वगतं विचिन्त्य) पितः! सम्प्रति मे शिरोरुजा सुतरामेव मनेहसो दशा दृश्यते नोद्वेजनीयं खेदमात्रमिति चिन्तिता भवता ।

नृपतिस्तस्याश्चिकित्सार्थं चिकित्सकवर्य्यं तत्काले संरक्ष्य तद्वचनेन कथञ्चिदाश्वास्तः समस्तामात्यैः समं पुनर्बहिःपुरमसरत् ।

अथ नृपतेः परमानन्दसन्दोहसन्दायिनी सन्ध्या समुपस्थिता उद्भ्रान्तचित्ततया चित्तविनोदनाय सान्ध्यसमीरणसेवनार्थं पद्मासरोवरतीरमगच्छत् परिभ्रमतस्तस्य उद्भ्रान्तस्वान्तं कियत्प्रशान्तं, ततो देवनिवासं समेत्य उपास्य च सन्ध्यामन्तःपुरं प्राविशत् । प्रविश्य स्वकक्षं राज्ञीं प्रभावतीं क्रन्दन्तीमवलोक्य कन्याया विपदमाशङ्कमानः परं विषादमाससाद, वाष्पोपरुद्धकण्ठोऽव्यक्तमवोचत् — प्रभावति ! प्रभावति कथं रोदिषि ? सत्वरमाख्याहि मम जीवनप्रभाया हेमप्रभाया भावुकं, अवसीदतिमे शरीरं वेपते च हृदयं मुखं परिशुष्यति शिरोऽपि घूर्णते तराम्, अहो स्थातुं न पारयामि, सत्वरमाख्याहि सत्वरमाख्याहीति विलपन्नेव मूर्च्छितश्च । राज्ञी नृपतिं धरानिपतितं निरीक्ष्य किंकर्त्तव्यविमूढा उच्चैरुदचरत् — हा हन्त हा हन्त !! आगच्छन्तु भवन्तः, भूपतिर्मूर्च्छितो भूपतितः । अकस्मादुच्चैरुच्चरितमन्तर्विदारकमन्तःपुरनिनादं निशम्य तूर्णं राजकक्षे सर्व्वे समवायन् भिषग्वरस्तत्क्षणं सुश्रूषणार्हं संरक्ष्य नृपतेः शिरः सुशीतलसलिलेन किञ्चिदसिञ्चत् औषधमप्यसेवयत् । हेमप्रभा जनकविनाशं शङ्कमाना नम्रानना नयननीरैश्च पितुः पादपद्ममासिञ्चन्ती तिष्ठति, एवमतिक्रामति कियत्काले नरनाथश्चैतन्यमवाप, ततो हेमप्रभामालोक्य वत्से !

शान्तिः शान्तिः मामजीवय इतिव्याहृत्य तांसमालिङ्ग्य स्वाङ्गशीतलयाञ्चकार, ततःसर्व्वे यथास्थानं प्रस्थिताः।

अथ निशीथे निशीथनाथे भगवति सुधाकरे सुधाकर करनिकरं विकिरति सर्व्वे प्रशान्ताः,जगन्निष्प्रभ , सुशीतलसमीरणेन संवीज्यमानो महीपालोऽपि पर्य्यङ्के निद्रादेव्याः सुकोमलाङ्कमाश्रितः। किन्तु हेमप्रभाया स्तामसं मानसं भृशमुद्वेजितं, नहि तस्या वास्तविकी शिरोरुजा संवृत्ता येनौषधं नोपशमयिष्यति, अपितु कृत्रिमौषधप्रयोगेणा नपहरणीया व्यवस्थापितौषधापनेया मानसिकी पीड़ा प्रादुरभवत्। अमात्यादयः पुनरुत्कण्ठिता एव तां निशा मनैषुः। ततः परेद्यवि प्रत्यूषसि राज्ञा हेमप्रभायाः शयनप्रकोष्ठं प्रविश्य तां तथैव चिन्तासङ्कुल-चित्तां निरीक्ष्य समालोचितं कृत्रिमौषधं नोपकरोति इतो महता गूढ़ेन कारणे नान्यथा भवितव्यं। निरूपयामि तावदित्यालोच्य वहिर्निष्क्रान्त उद्भ्रान्तचित्तो राज्ञो मृणा प्रकृत तत्त्ववेदनाय गुप्तचरी प्रायुङ्क्त।

हेमप्रभा। सखि मृणालिनि! अद्य मे बलवती त्वदावास निवास वासना समजनि, स्मरामि हन्त स्मरामि शशाङ्कसङ्काशं त्वदीय सहोदर विनोद वदनं, विनोद वचनेन विनोदयिष्यामि मानसं सच मे प्राणे-भ्योपि प्रियतमः, नावगच्छामि किमर्थं तदर्थं प्राणा मां प्रणुदन्ति निरन्तरं।

मृणालिनी। अयिहेमप्रभे! ममाग्रज विनोदस्यापि त्वयि असीम-स्नेहः, स त्वां नेतु मेव मां प्रेरीरत्। वर्त्तमानमासस्य पञ्चदश दिवसे तस्य विद्यालयावकाश शेषो भविष्यति सुतरां स परश्वः कलिकाता नगरीं व्रजिष्यति। अहमिदानीमेव तव गमन वार्त्तां राज्ञीं विज्ञापयामि।

ततो मृणालिनी प्रतस्थे।

आगामि भाद्रमासे विनोदः एम्, ए, ( M. A. ) परीक्षां दास्यति सुतरां तज्जनकेन विधुशेखर चतुर्धुरीणेन तदवस्थानव्यवस्था पुष्पवाटिकायां व्यधायि। विनोदः अतिसुधीवणः वि,ए, ( B. A. ) परीक्षायां प्रथमस्थान मधिचकार। चतुर्धुरीणो विधुशेखरस्तु विनोदः एम्,ए, ( M.A. ) परीक्षायामपि प्रथमो भविष्यतीत्यनुक्षणं गणयति। किन्तु विनोदस्य पठनलालसा विलासकवलीकृता पूर्व्वतोमन्दीभूता, परं परीक्षायामनुत्तरतस्तस्य मृत्युरेव श्रेयानिति सम्प्रधार्य्य दुश्चिन्ता मपवार्य्य पठितुं मनःसमादधत तं वलीयसी चिन्ताराक्षसी पुनराक्रामति। विनोदः क्षणं हेमप्रभायाः प्रतिकृतिं विलोकयति क्षणं नयने निमिल्य चिन्तयति क्षणञ्च पठति।

राज्ञी प्रभावती जीवनप्रभाया हेमप्रभाया चित्तविनोदनार्थं विनोदभवनगमनमनुमेने। मृणालिनी गमनानुमति मासाद्य सद्यः हेमप्रभया समं गेहं जगाम। चतुर्धुरीणो विधुशेखरः नृपतितनयां हेमप्रभा मुपस्थिता मालोक्य "एहि वत्से हेमप्रभे"! इति ससम्भ्रमं सम्भाष्य उन्मुक्तगवाक्षे स्वकक्षे पर्य्यङ्के तामुपावेशयत्। समादिदेशश्च दासजनं "त्वरलीकुरुष्व तालवृन्त" मिति।

हेमप्रभा। ( सविस्मयं ) सखि मृणालिनि! भवदीयं नयनाभिराममारामं मालोकयितुं समुत्सहे।

विधुशेखर। वत्से मृणालिनि! नय इमां पुष्पवाटिकां।

मृणालिनी। एहि सखि।

ततोपुष्पवाटिकां प्रविश्य प्राह हेमप्रभा सखि! अतिरमणीयोऽयंभूभागः अतीव कौतुक मातनोति मे अपूर्व्वशान्तिं लभते ममान्तरं।

(सनन्दादवलोकयन्ती ) मृणालिनि! कश्चित् जनःतत्सुरम्यहर्म्यमधिवसतीति प्रतिभाति।

मृणालिनी । निष्प्रत्यूहं पठनाय भगिनि विनोदस्याध्ययनव्यवस्था अप समकारि तातपादेन तातेन ।

"अथार्य्यविनोद" इति व्याहृत्य हेमप्रभा मनोविनोदनाय विनोदप्रासादं द्रुतं मद्रावीत् । मृणालिनी एकाकिनी सरोवरतीरवर्त्तिनी मत्स्यजालविलासं विलोकयन्ती शान्तिं परमविन्दत ।

विनोदो मानस विनोदिनी मनुष्य मनुष्यरणीयां स्नेहमूर्त्तिं हेमप्रभां साक्षात् समीक्ष्य प्रमोदपरिप्लुतमनाः समभवत् । हेमप्रभा तथाविधं न किमपिवक्तुं व्यवस्यन्तं विज्ञाय अनङ्गतापिताङ्गी अधीरा सती तदङ्ग मालिङ्ग्य स्वाङ्गमशीतलयत् । तुलनाभिलाषयो स्तयोर्लालसा तदानीं सफलो भूता । परमानन्दप्रवाहो वहति नितरां तयो र्मानस-सागरे । अनारत मव्यक्तं जल्पतो स्तयोः सहसा मानवसमागमरवः श्रवणगोचरोऽभवत् ततश्चकितौ तौ वहिःप्रकाशित परिशुद्धभावौ पुस्तकं पठितुमारभेतां । चतुर्धुरीणो विधुशेखरो विनोदप्रासाद मासाद्य तौ तथाविधौ विलोकयन् विनोद मवदत् वत्स विनोद ! स्नेहला हेमप्रभा त्वामतीव स्नेहयति सा अध्यासीना पुस्तकं पठति तां कथं न सम्भाषसे साम्प्रतं भगवानालोकं प्रसविता सविता अस्ताचलचूड़ा मवलम्बते एवम्विधसमये पठनं न नीतिवेदिनां सम्मतं । विशुद्धसमीरण सञ्चारे सरस्तीरे तटिनी तटे वा सान्ध्यपवनं सेवमाना रोगहीना दीर्घायुषो भवन्ति । तदधुना अध्ययनं विहाय हेमप्रभया समं सरोवरतटमटन् स्नेहप्रवणवचनकलापेन तां सन्तोषय । हेमप्रभां प्राह वत्से ! अहं यामि त्वया मृणालिनी सहितया आगन्तव्यं ।

हेमप्रभा । भगवन ! तरुलतागुल्मसज्जितोऽयमारामः मामतिरमयति तदत्र यामिन्यामत्रैव स्थातुमभिलषामि ।

विधुशेखरः । वत्से यदि अत्रावस्थानं ते प्रियतमं तर्हि स्थीयतां

तव सहचरी मृणालिनीच पश्चैवस्थास्यति। मातः ! मृणालिनी किमेका-किनी गेहमगमत् ?

हेमप्रभा। मृणालिनी सरोवरतटवर्त्तिनी मत्स्यक्रीड़ामालोकयति।
ततःसर्व्वे सरोवरतटमटन्तः विविध कथां कथयामासुः।

विधुशेखरः। वत्से मृणालिनि ! हेमप्रभा तावदद्य निशायां मत्सकाशमभिशयति तत्त्वयाप्यस्मिन्स्थाने स्थातव्यं

मृणालिनी। पितः ! हेमप्रभया यत्र स्थातव्यं मह्यमपि तत्रैवावस्थानं रोचतेतरां। ततश्चतुर्धुरीणो विधुशेखरः स्वकं प्रति प्रतस्थे, विनोदोऽपि स्वप्रकोष्ठं प्रति प्रातिष्ठत, मृणालिनी अपि हेमप्रभया सममपरप्रकोष्ठे गता। ततः कियदनन्तरं मृणालिनी व्याजहार अग्रज ! भोजनसमयः समुपस्थितः। पितृदेव त्वदर्थमपेक्षते तत् चलतु।

विनोदः। मृणालिनि ! तातः किमस्मान् प्रतीक्षते ? सत्वरं यामि युवाभ्यामपि प्रस्थीयतां।

विनोदो द्रुतं भोजनप्रकोष्ठं प्रविष्ट आदिष्टो जनन्या नलिन्या न्यषीदत भोजनाय। विनोदोऽपि यदादिशति भगवती त्वम्बा तथा-स्वतिष्ठत्। ततश्चतुर्धुरीणो विधुशेखरो भोजनस्थानमुपस्थितः। दिवसेच तस्मिन् हेमप्रभाकृते प्रचुरतरभोजनोपचारो विरचितः। विनोदः चर्व्व्यं चोष्यं लेह्यं पेयं पायं पायं नितान्तश्रान्तोऽपि मातु-रनुरोधेन पुनरश्नाति स्म। ततो निष्क्रान्ते जनके भोजनप्रकोष्ठात् विनोदः सत्वरं कुसुमवाटिकामाट। मृणालिनी अपि अशनावसाने हेमप्रभया समं तदुपकाननं प्रपन्ना स्वकक्षं प्रविवेश। ततः सरङ्गं विविध कथाप्रसङ्गमालपन्ती बालिका मृणालिनी अनवरतं श्रान्ति-मपास्यन्त्या निद्रादेव्या अनुकम्पिता।

अथ भगवान् शुमाली कुमुदिनीनायको सौधधवलया मयूखमालया दशदिश उद्भासयति, मन्दं मन्दं सुगन्धो गन्धवहो वहति, नक्षत्रराजि राजितं सुनील माकाशं विकाशते, सलीलं सर्व्वे प्रशान्तस्वान्ता वर्त्तन्ते तदानीं। किन्तु हेमप्रभाया विनोदस्यच मानससागरो भृश मुच्छलितः, विनोदो दाह समदृमानः क्षणं वहिःप्राङ्गने भ्रमतिक्षणं कक्षं प्रविशति, हेमप्रभापि बहुचेष्टया तामसं मानसं शान्तयितु मसमर्था धैर्य्यं वैधुर्य्यंतो बहिः प्राङ्गने स्वैरं स्वैरं विहरन्ती विनोद प्रकोष्ठ मुद्घाटित कवाटं विलोक्य तत्र प्रविवेश। विनोदः स्वप्रकोष्ठ मुपतिष्ठन्तीं तां पर्य्यङ्के स्वाङ्के समुपवेश्य विवाहगर्भं स्वमनोरथं व्यजिज्ञपत्। हेमप्रभापि स्वमनोरथसम्पुटितं परमानन्दसन्दोह—सन्दायकं संवादं निशम्य फुल्लोत्पललोचनेन स्वाशयं प्रकाश्य "वाढ" मिति व्याजहार।

विनोदः। प्राणाधिके! तव दर्शनाय प्राणा मां त्वरयन्त्यतितरां, त्वया विरहितस्य मम क्षणमेक मेकमास इव प्रतिभाति, किं करोमि परीक्षा-नुरोधेन परश्वएव कलिकातानगरीं यास्यामि, अविदुषः खलु संसारे ऽस्मिन् जीवन मेव मरणं नास्ति सुखं नापि सन्ति साश्रयः, नवा तेन जनगणा सादरः समाश्वास्यते। विपश्चित् पुन अमोददं करतल इव कुवलय फलमिव विलोकयति, एकतः [illegible] सत्त्वं अधिगच्छति च सर्व्वेषां सादर [illegible]।

हेमप्रभा। प्राणेश्वर! त्वद् विनाकृतायाः ममाप्यदस्थान स्तैव क्लेशकरं भविष्यति। किन्तु तथापि सर्व्वेषां स्वोन्नतिं [illegible] मत्वा तव प्रयाण मेव रोचते, कथञ्चिदप्यस्य आत्मानं कालमति पातयिष्यामि। "प्रतिदिनमेव तव कुशल संवादवहं पत्रमेकं प्रेषणीय मदन्तिके" इति सविनय मभ्यर्थये ऽहं तव दासीजनः। नाथ! कलिकाता

नगरी सुपिसुप्ता भवता दासीय विस्मृता भविष्यतीति मह्यतीशङ्का नितरा मातङ्क मातनोति ।

विनोदः । प्रियतमे ! अहं प्रतिजाने प्रतिदिनमेव पञ्चमेकं प्रेषयिष्ये तवान्तिके जीवता मया न विस्मरिष्यसे त्वं आत्वपि, परिहर रणरणकं अहं तवैव ।

शान्तिमती हेमप्रभाया विषादकारण मनुसन्दधाना तदूयामिन्थामेव चतुर्थं रौष विधुमेऽवरस्य निलये समुपस्थिता परिभ्रमन्ती कृष्णवाटिका मुपतस्थौ तत्रचविनोदकस्य मालोकोल्लासितं निरीक्ष्य स्वैरं-स्वैरमौरित्वा स्वरतो हेमप्रभां विज्ञाय तत्प्रकोष्ठान्ते तिष्ठन्ती निःशङ्क मालपतो स्तयोः सर्व्वं समाकर्णयामास ।

अथ चनयं जल्पतो स्तयो रविदितगतयामा यामिनी सकष्टमष्ट-मयामार्द्धे पदमपि तवती, घोरतर दिनकर करनिकर समागमसाध्वसेन गगन मण्डली पलायते, कुमुदिनी च नायक वियोग विधुरा मुद्रिता भवती, शैवाल जालकवलीकृतापि कमलिनी शान्तिं प्रतविताराः सविताराम् अवलोकयितु मुन्मीलति । शान्तिमती स्वागमन-सङ्गोपनकामा तस्माद्द्रुतं विहृत्य राजधानी प्रपद्य राज्ञे सर्व्वमामूल मावचक्षे । हेमप्रभाच प्रभाकरप्रभा प्रभासिता प्राचीं दिशं परिहृत्य सञ्चलिता विनोद प्रकोष्ठान् सकष्टं प्रत्यातिष्ठत वालिका मृणालिनी तदापि निद्राति

हेमप्रभा । सखि मृणालिनि ! जागृहि नवीन दिनमणिमयूख मालया सुरम्या हर्म्यमाला समुद्भासिता प्रफुल्लमनसां शान्ति मापादयति तत्प्रमोदेन विनोदय मानसं अहं तावत् स्वपिमि ।

मृणालिनी । कथमीदृशीं सुषमामपास्य स्वपिषि किमसि ? सखगारिनी

हेमप्रभा । निद्रातुं समीहमानापि दुःस्वप्न दर्शनेन वीतनिद्रैव निशा मनैषं सुलसां निद्रा मा मामयति ।

राज्ञी । शान्तिमति ! साम्प्रतं हेमप्रभामवलोकयितु मुत्कण्ठितास्मि सुतरां तामानेतुं चतुर्धु रीणा निलय याहि।

शान्तिमती । यदाज्ञापयति महाराज्ञि !

नृपतिः । (अन्तःपुरं प्रविश्य) राज्ञि ? वैराग्यं किमाज्ञापयति साम्प्रतं मनु समाधिं समधिगता ?

राज्ञी । महाराज ! कथं दासीमिमामुपहससि ? किमपराद्धं ? यातु मलमेतेन, वत्साया हेमप्रभाया विवाहवयः समतीतप्रायः कथं परिणय नामापि नोल्लिखति ? किमिमां पात्रसात् न करिष्यति ?

नृपतिः । वत्सायाः परिणय मनुचिन्तयता मया औदार्य्यगाम्भीर्य्या-दिगुणगरीयान् धनवान् कोऽपि वरोनावलोक्यते सुतरां ... मौनमवलम्ब्यते ।

राज्ञी । विधुशेखर-चतुर्धु रीणतनयं विनोद मति श्रद्दधामि मन्ये वत्सायाः सम्प्रदानं मह्यमभिरोचते तरां ।

नृपतिः । प्रभावति ! अहमपि विनोदं ... इच्छामि परं नृपपुत्राय नृपतिपुत्री समर्पणमेव राज्ञा मनुरूपं सुतरामेवासौ परिणय प्रबन्धो मा मतितरां न प्रीणयति अस्तिचेत् विधि निर्ब्बन्ध स्तदा फलिष्यत्ययं प्रबन्धः ।

राज्ञी । अलं महाराज जामातुरर्थानुसन्धानेन वरस्य स्वभावादिक मेव विशेषतोऽन्वेष्टव्यं । विनोदः प्रकृत्यादिभि रति रमणीयः, ममैव जामातर मवधारयतु ।

नृपतिः । यथाभिरोचते तुभ्यं तदेवानुष्ठेयं मया ।

शान्तिमती । हेमप्रभे ! प्रेषितास्मि भगवत्या प्रभावत्या त्वां नेतुं तत् त्वरं प्रयोजनं

हेमप्रभा। एषागन्तुकामा संहृष्टास्मि चलतु तूर्णं।

राज्ञी। वत्से हेमप्रभे! कथमनुदिनं क्षीणप्रभया भूयते, सन्तत प्रशान्तस्वान्तया स्नातव्यं निपीयतामिदं पयः तद्भाण्डस्थं मण्डादिकञ्च भुज्यतां।

सखिवौ। वत्स विनोद! मुखं ते परिम्लानं मन्ये परीक्षार्थं भृशं चिन्तयसि, अलमतिभावनया तवाभिलाषः फलिष्यति निःसंशयं, अवगाह्य शीतलायगाढं सरोवरं मभ्यवहर, समागतप्राय स्ते प्रयाणकालः।

अथ विनोदः स्वाभिमतफलशंसिनौ मातुराशीर्वाणीं शिरसि निधाय यथायथं भोजनादिकं निष्पाद्य पितरौ प्रणम्य कलिकाता नगरी मसरत्।

नृपतिः। [ बहिःपुरमुपगम्य ] मन्त्रिण्! याहि महानुचरैं र्विधुशेखर चतुर्धुरीणमहोदय सदनं विनोदाय हेमप्रभा सम्प्रदान माख्यातुं।

मन्त्री। यदाज्ञापयति प्रभो! एषोऽह मुपसर्पामि सानुचरं चतुर्धुरीण भवनं।

शालिमती। हेमप्रभे! तव विवाहप्रसङ्गरङ्गो मदङ्गं शीतलयत्य-तितरां तव मातापितृभ्यां विनोदं जामातरं सम्प्रधार्य्य सानुचरः सचिववरो विनोद सदनं प्रेषितः।

अथ सचिववरो विधुशेखर निलय मुपेत्य तत्सकाशे सकल मामूल माचचक्षे। विधुशेखरस्तु अचिन्त्यपूर्व्वं शुभफल शंसिनं संवाद मवगम्य प्रमोद भरेण पीयूषपुरःस्नात इवावर्त्तत, ततः सम्बन्धानुकूलं स्वाशयं सचिवाय विज्ञाप्य तैः सह राजधानीं समागत्य विनोदस्य एम्,ए (M.A.) परीक्षापरं परिणयो भविष्यत्यवधारयाञ्चकार।

विनोदः प्रतिदिनं हेमप्रभासमीपे पत्रं प्रेरयति। हेमप्रभा-

शान्तिमतो मुखात् शान्तिपदं परिणय वृत्तान्तमुपश्रुत्य विनोदं व्यजि-ज्ञपत्, ततश्च विनोदो व्यपेतशङ्को मनःसमादधौ पठनाय ।

नृपतिप्रवरो विवाह यौतुकादि समाहरणाय प्रैषीदमात्यादीन् नानादिग्देशं, शिल्पिनोऽपि विविध शिल्पकलापेन सुरम्य हर्म्यमालां द्वारादिकञ्च शोभयितुं प्रावृतन्। सर्व्वतः कौतुक कोलाहलः श्रूयते राजधान्यां ।

एम् ए(M.A.) परीक्षाया मवसितायां विनोदः स्वनिलय माजगाम। चतुर्धुरीण विधुशेखरोपि वैवाहिक द्रव्य यथायथं सञ्चिकाय। नृपतिः शान्तशीलः परिणयलग्नं स्थिरीकर्त्तु माचार्य्यवर्य्यं मादिदेश आचार्य्यवर्य्यः हेमप्रभाया विनोदस्य च जन्मपत्रिका मादाय ज्योति-षार्णवे ओत प्रोतं समुद्गाह्य तुष्णीम्बभूव ।

नृपतिः । भो महात्मन्? कथं निर्व्वाक् संवृत्तोमि ?

आचार्य्यः । आयुष्मन् ! परश्वो दिवसोयः परिणयलग्नो नितरां प्रशस्तः परमेरप वक्तुं बिभेमि — अद्यप्रभृति पञ्चममासान्ते श्रीमान् विनोदो देहं परिहास्यति ।

अथ भूपति रकस्मादशनिसदृश माचार्य्यवचनं निशम्य किं-कर्त्तव्य विमूढः शुद्धान्तः प्रविश्य संवाद मिमं राज्ञीं व्यजिज्ञपत्, राज्ञी अरुन्तुदं तं संवादं विदित्वा अगत्या भृशं दुःखिता पात्रान्तरा-न्वेषणाय राजानं व्याजहार।

हेमप्रभा अपरप्रकोष्ठतो वज्रादपि कठोरं तद्वचनं निशम्य शान्ति मतीं प्राह,शान्तिमति ! विनोदो दीर्घायु रल्पायुर्व्वा भवतु तमेवाहं मनसा पतित्वेन वृतवती, नाहं कदाचिदपि पुनरन्यं पतित्वे वरित्वा सनातनम् सतीधर्म्मं मुल्लङ्घिष्यामि, तस्मै एव अहम् अदेया तदस्मेव फलिष्यति विधिविधानम् इति तूर्णम् जनन्यै निवेदय। शान्तिमत्या

राज्ञीसमीप मुपस्थत्य तथानुष्ठिते राज्ञो दौर्घम् निश्वस्य नृपति विशेषतो विशेष विनोदाय कन्यासम्प्रदानमेव निर्द्दोषरत् । ततः प्रभृति राजधान्याम् परिणयानन्दः पूर्व्वतो मन्दीभूतः । नृपवरो बहिःपुरम् समेत्य सचिववर मवोचत् — मन्त्रिन् ! विघोषय तावदिदम् "यःकश्चित् दुःसंवादमिमम् चतुर्धुरीण निलयम् नयेत् तस्य शिरश्छेदम् विधास्ये" ।

हेमप्रभा विलास लालसां विहाय विनोदस्य दीर्घायुष्ट कामनया अनुक्षणम् शमनदमन पेशलम् विश्वेश्वर माराधयितु मारेभे । महाराजोपि जामातुरन्तराय मन्तरयितुमना अजस्रम् शतसहस्र सुवर्ण मुद्रा दरिद्रे भ्योद्विजेभ्यश्च वितितार । विधुशेखर चतुर्धुरीणोऽ गणय मानाः वदान्य धन्य विभिन्नमानव निवह परिव्याप्तः अत्युच्चै विविध वाद्यध्वनिभि दिङ्मण्डल माकम्पयन् पुत्रं विवाहयितुम् यथाकाल राजधानीम् समियाय । ततः समुपस्थिते परिणयलग्ने महाराजः सयत्नम् विशादमन्तर्निग्रह्य श्रीमते विनोदाय कन्याम् सम्प्रददे ।

अथ परेद्यवि राज्ञा विज्ञापितम् विधुशेखराय वैवाहिक ! विदाङ्करोतु भवान् अस्मदीय वंशानुक्रमम् " परिणयप्रभृति षण्मासान जामाता दुहित्रा सममत्रैव स्थातव्य"मिति । विधुशेखरो वैवाहिक वचनम् निशम्य तदुरीचकार । ततः सर्व्वे यथास्थानम् प्रतिप्रतस्थिरे राज्ञी । वत्स विनोद ! " विवाह प्रभृति षण्मासान् सर्व्वथा सावहितेन स्थातव्य " मितिस्वैयागाचार मवगच्छ ।

विनोदः । मातः ! यदादिशति भगवती मया तदवश्य मनुष्ठेयम् ततो नृपादिभिः सर्व्वैः सञ्जातमङ्क दिनमत्यपाति, हेमप्रभा यथाकालम् पतिम् शुश्रूषमाणा निरन्तरम् महेश्वराराधनाय मनः समादधौ । तेषां पञ्चम मासः पर्य्यवसितप्रायः, एकस्मादेकदा विनोदो

भयङ्कर मारीभय रोगेणाक्रान्तः, मङ्गिपाल कस्तव्यस्तो वैद्यनाथमिव वैद्यप्रवरम् चिकित्सार्थम् प्रायुङ्क्त। चिकित्सकस्तु तं व्याधिम् त्रणाय मत्वापि सर्व्वं मनूर्व्व मौषधम् सेवयितु मारभत, परम् सर्व्वाण्येव भेषजानि रोगोपशमने अक्षतकार्य्याणि। अजस्रम् स्रवन्ति स्वेदबिन्दवो विनोद शरीरात् केनापि कौशलेन घर्म्मप्लावनम् निवार यितुम् नाशकत्, ईदृशीम् दशामवलोकयतो भिषगवर्य्यस्य गर्व्वः खर्व्वोऽभवत्। अगत्या विषप्रयोगम् कुर्व्वतापि तेन वैद्यवरेण कियत् फल मनासाद्य सद्योभयविह्वलेन "मयायम रोगो दुरपनेयः यथाकाम मावरन्तु भवन्तः" इति निगदित एव विनोदो मुमुर्षु हिक्काच तस्य वुक्कां वेपयत्यतितरां। त्रिलोकीरवम् सर्वे नृपादिभिः प्रसुप्तकपाठ मरोदि। हेमप्रभा तु तस्मिन् पञ्चममासान्तिम दिवसे आसूर्य्योदया दनन्यमनसा महेश्वर माराधयितुम् प्रावृतत् नान्यत् किमप्यवगतवती।

अथ तस्या असामान्यमनःसंयमेन निखिल लोकपावनः सती शोक विनाशकः सतीनाथो भगवान् भूतनाथः प्रसीदन् हेमप्रभां प्राह पतिव्रते हेमप्रभे! त्वमसि रमणीकुलमणिः एव ते वरम् प्रयच्छामि "पतिस्ते त्वयासहैम् सगौरवम् दीर्घायु र्भूयात् अन्तेच युवाभ्या शश्वत्प्रमोदनिलयः कैलासशिखरो यायेत," गच्छसाम्प्रतं त्वम् सिद्ध मनोरथा स्वामिनम् सान्त्वय।

ततोहेमप्रभा परमानन्दसन्दोहप्रदम् भगवतो विश्वेश्वरस्याशीर्व्वचनम शिरसि निधाय सर्व्वेभ्यो विज्ञापयाम्बभूव, नृपतिप्रभृतयोऽपि तद्वचन माकर्ण्य करकवलितमिवाकाशम् मन्यमाना व्यपेतशङ्काः प्रशान्तस्वान्ता सञ्जाताः। अहो देवशक्तिः!! तदानीमेवायुष्मतो विनोदस्य व्याधिः क्षणमध्ये अपसार कतिपयदिनै नैव पूर्व्वं स्वास्थ्य मवाप विनोदः।

# आर्य्यप्रभा ।

प्रथमवर्षं { सुदुर्लभाः सर्व्वमनोरमा गिरः } द्वादश संख्या

## मासावतरणिका ।

कौमारलहरीं समितं पयोमुचां भुवि प्रतानाश्च कठोर निम्नगं ।
अस्तु यतः स्रावयतीह सन्ततं तच्छ्रावणो ऽयं धरणौ प्रकीर्त्तितः ॥

## मानसं ।

मायामुग्धमिदं विदग्धविदितं दग्धं तमोदिग्धकं
गङ्गोत्तुङ्गतरङ्गरङ्गवदहो विश्वं चलं हेतुमत् ।
मिथ्यामोहमये महे विलसितं तापत्रयं गच्छसि
रेरे मानस ! तामस श्रय सदा श्रीराम नामामृतम् ॥ १ ॥
नित्यं नित्यमितो व्रजन्ति परितो दैन्यं परं मानवाः
दृष्ट्वा कष्टमिदं यथेष्ट मा रे किं बंभ्रम्यसे मानस !
मन्येऽगण्यमहो वियोगवहुलं क्लेशं चिरं भोक्ष्यसे
सारात् सारतमं पिबेति सततं श्रीराम नामामृतम् ॥ २॥
स्वान्त ! भ्रान्त मसि प्रचिन्त्य विषयं यत् शान्ति मामन्यसे
घोराद् घोरतरं विमोहचतुरं तापप्रदं नश्वरम् ।
यत् पातालतलादहो सुरपुरं संसेवमानं नयेत्
तत् केवलावलं पिव प्रतिपलं श्रीरामनामामृतम् ॥ ३ ॥

स्वर्गे स्वर्गनगरे निवासमनिशं सञ्चिन्त्य तत्सिद्धये
पूर्व्वैः सर्व्वमुपाश्रितं छितपथं संलङ्घ्य किं चेष्टसे ।
एनोज्ञानविशुद्धिनीं कृतिमपाकृत्याधुना मानस !
सिद्धं विद्धितरं परम शरणं श्रीरामनामामृतम् ॥ ४ ॥
नष्टे स्वेष्टजने वियोगविधुरं शून्यं विपन्नं जगत्
वीक्ष्य क्षीणतमं दिनं कतिपयं निश्चेष्टमातिष्ठसि ।
मन्दं मन्दमतः परं दृढ़तरं पूर्व्वाशयं संश्रयन्
हन्त स्वान्त ! सदा विलासलसनं सर्व्वोपरि क्रीड़सि ॥ ५ ॥
मर्त्त्या मृत्युवशंगताः सुनियतं तस्मादिदं स्मर्य्यतां
नाशः शोककरोऽपरोपि सुहृदः सम्भाव्यमानो मनः !
हित्वाऽनित्यमिमं विशादचरमं सांसारिकं सम्मदं
मन्दाऽनन्दकरं निपीय परमं श्रीरामनामामृतम् ॥ ६ ॥
किं श्रीखण्डविमण्डितं वपुरिदं कर्त्तुं मनः ! कल्पसे ?
कालात्यन्तमहो तदेव नियतं भस्मावशेषं भवेत् ।
तस्मात् यत्नशतेन पूर्व्वमधुरं हित्वाशयं नश्वरं
तृष्णामोहहरं भजस्व परमं श्रीरामनामामृतम् ॥ ७ ॥
भूयोजन्म विचिन्तया मम वपुस्तम्भः शिरो घूर्णते
तस्मादेव मनः ! कृताञ्जलिपुट स्त्वां प्रार्थये नित्यशः ।
त्यक्त्वा सर्व्वमिमन्त्वसारविषयं कृष्णाय तृष्णातुरं
मज्जन्नामरसक्षयं श्रय सदा श्रीरामनामामृतम् ॥ ८ ॥

श्रीहेरम्बनाथ शर्म्म तर्कतीर्थस्य ।

## पुष्पदन्तादि विवरणं ।

[ पाटलीपुत्रनगरीनिवासिनः ] फाल्गुनतोऽनुवादम् ।

यस्मै कुन्देन्दुशुभ्रः कमनीयकलेवर स्तासां दुःखं दूरीकर्त्तुंकामो

गम्भीरं व्याजहार-"मातरो योषितः! अद्यप्रभृति दूरीभूतं वो दुःखं। अयं नवप्रसूतःसुतः प्रमोदयिष्यति, अस्मिन् कुमारे तिद्राजमाग्नरिते गवनीय पार्श्वे लक्ष सुवर्ण मुद्रा लभेरन् यत्नकं भवन्त्यः। अयन्तु पुत्रः पुत्रकनाम्नानमाख्यातः अस्मिन् वसुधातले अद्वितीयमाधिपत्यमधिगमिष्यति" स स्वप्न दृष्ट इष्ट पुरुष इति निगद्यान्तर्दधौ रमण्यः प्रबुद्धा अनाथनाथभूतनाथपादपाथोरुह मधगायन्। नैशतमो दिनकर करनिकरसान्निध्येनेवापलायत। पुत्रके वीतनिद्रे तस्य गवाक्षपार्श्वे महापुरुषभषितलक्षहैममुद्रा अद्राक्षुः। तासां दुःख मवसितं समुपस्थितःपुनः परमानन्दसन्दोहः।

अहो!! विस्मयावहं योगमाहात्म्यं, योगबलेन भवत्यसम्भव-सम्भवः। असाधारण तपश्चरणबलेन अनाथरमणीपुत्रः पुत्रको बहु-लोकनाथो बभाव, प्रवहतिस्म तासां राजजननीनां हर्षनिर्झरिणी निरन्तरं। दुष्टदमनशिष्टपालनादि राजकर्त्तव्यसम्पादनेन पुत्रको राजवासिनां सर्व्वेषामेव प्रियतमो जातः। परं पुत्रकः पितृपिदृव्याणामनुद्देशेन विषाद माससाद। एकदा यज्ञदत्ताभिधेयः कश्चित् सभासद् निभृतं नृपतिं प्राह राजन् भवतस्तातपादा दुर्भिक्ष निपीड़िता अर्थार्थं नानादिग्देशं पर्य्यटन्ति, तद् यदि "भवान् ब्राह्मणेभ्यो धनं वितरिष्यति" परितः विघोषयेत्, मन्ये तेपि तदा अर्थप्रार्थनयात्र समुपतिष्ठेरन्। पुत्रकेन तदवधार्य्य दानकार्य्यं सम्पादयितुं व्यवस्था व्यधायि। राज्ञो दानघोषणां समाकर्ण्य प्रतिदिन मगणित धरणिसुरा राज द्वारं भेजिरे। दातारः पुन रर्थिनां नामधामादिकं विलिख्य यथायथ मर्थं वितरितुं प्रावृतन्।

अथभगवतः करुणामयस्य करुणया पुत्रकस्य पितृपितृव्याम् विज्ञाय तस्मै विज्ञापयामासुः। पुत्रकः अभिमतकनकवर्षिनं स

सम्वाद मवगम्य सहर्षं तत्प्रकोष्ठ मुपातिष्ठत्। पतिविरहविधुर तत्तनायमपि स्वार्थसम्पुटितं वचनं निशम्य भृशमभिननन्द।

अहोवत !! अस्मिन् विश्वस्मिन् मानवस्वभावो दुरपनेयः, आजन्म सिद्ध प्रकृतिः प्रतिक्रियया न चिराय परिवर्त्तते। दुष्प्रकृतयःखलु पुत्रकस्य पितरः अन्यदीय सम्पदं सोढुं न पारयन्तिस्म, ते तावदेताव-त्तुष्टा यत् पुत्रकविभवेनापि ते मर्म्मणि विद्धाः, किन्तुराज्यमात्मसात्-कर्त्तुमुपायं निरन्तरं चिन्तयतान्तेषामवसरो नाघटत। अनन्तर मनन्योपायैस्तैः "गुप्तघातकेन पुत्रकं विनाश्य राज्यमात्मसात्कुर्म्मो वय"मिति मन्त्रयित्वा पुत्रकः समवादि, वत्स! अद्यपुण्यतिथिः, दिवसेऽस्मिन् विन्ध्यवासिनीदर्शन मगण्य-पुन्यप्रदं तदद्य त्वयासह तत्रगन्तुमुत्सहामहे। पुत्रकः "यदादिशन्ति तत्रभवन्तो भवन्त" इत्युक्त्वा देवीं विन्ध्यवासिनीं विलोकयितुं पितृद्वितीयतयाऽनन्यसहाय स्तैःसह निर्य्याय अनीकनिवहपरिव्यप्ततया घोरप्रचारकान्तरपथेन मन्द मन्दं मन्दिरादारादुपस्थितः। पुत्रकस्य पितरः कियद्दूरतः पुत्रकं प्राहुः—वत्स! त्वं मन्दिरं प्रविश वयं विश्रम्यागच्छामः, पुत्रक स्तेषां निदेशेन यावन्मन्दिरं प्रविशति तावन्मन्दिरस्यैकपार्श्वात् कतिपये दस्यवो वहिर्भूय तं हन्तुमुद्यता बभूवुः। पुत्रक स्तथाविधान् तान् विलोक्य भयविह्वलो बभाषे केयूयं? कथं वा निरागसं मां हन्तुमुद्यताः? दस्यव उचिरे वयं दस्यवः। तव पितरो धनेनास्मान् वशीकृत्य त्वां हन्तु मत्र प्रैरयन्। पुत्रकः प्राह यूयं मा मां विनाशयत युष्मभ्यं प्रचुरतर मर्थं सर्पयामि, तदङ्गीकृतेषु दस्युषु पुत्रकः स्व-शरीरात् रत्नराजिराजित मलङ्कारं तेभ्यो ददौ। दस्यवो वहुमूल्य मलङ्कार मासाद्य सद्यः प्रसन्नाः प्रतितस्थिरे, पथि पुत्रकस्य पितॄन् विलोक्य "पञ्च त्वमापितोऽस्माभिः पुत्रक" इत्यभिदधिरे। पुत्रकस्य

दुर्वृत्ताः पितरो दस्युभ्यः पुत्रकनिधनवार्त्तामुपश्रुत्याभिनन्दन्त स्ततो राजधानीं प्रतिप्रतस्थिरे। पुत्रकस्तु दस्युविमुक्तः स्वरयान्येन वर्त्मना तेभ्यः पूर्व्वमेव पुरं प्रविश्य तां घोरघटनां रराट। सचिववर स्तद्विवरणं विदित्वा नृशंसानां तेषां यथायोग्यं दण्डं व्यधात्।

पुत्रको जनकस्येदृश माचरणं विलोक्य संसारस्यासारता मवधारयन् राजधानीं सन्त्यज्य विन्ध्याचलस्य निभृतं स्थान माश्रितः। तत्र च तपस्यमानस्य तस्य बहुदिनानि समतीयुः। अथैकदा बाहुभ्यां युध्यमानौ पृथुकलेवरौ प्रांशुपुरुषौ तत्समीपमुपस्थितौ। स तावपृच्छत्-कौ युवां? किमर्थं वा बाहुभ्यामन्योन्यं संग्रामं कुरुथः? तावूचतु—महात्मन् आवां मयदानवतनयौ, एतद्यष्टिं पादुका भोजनपात्राणि नौ पैत्रिकधनानि, आवां पणायावहे-"बाहु-युद्धे जेता एतानि लप्स्यते" इति। पुत्रको दानववचनमाकर्ण्य स्मेरा-ननो बभाण:—कथमेतत् सामान्यसम्पदे युवाभ्यां युध्यते? ताभ्यां प्रत्यवादि नेयं सामान्यसम्पत्! एतानि पुनर्वस्तूनि बहुगुणानि, श्रूयताम्—इमे पादुके पादयोः परिदधत् यथाकामं शून्यपथेन परि-भ्रमितुमर्हति, अनया च यष्ट्या यद्भुवि विलिखेत् सपदि तत् सफलं भवेत्, एतद्भोजन पात्रे यदाहार्य्यं चिन्तयेत् तदेव निपतेत्।

नृपतिः तुत्रक स्तदाकर्ण्य विस्मयमान स्तत्परीक्षार्थं पर्य्युत्सुको दानवौ प्राह—भो दानवौ! ईदृशयुद्धेन युवयोः प्राणविनाश माशङ्के तदलं संग्रामेन एतानि मत्सविधे निधाय नितरां धावतम् अग्रेसर एव एतदासादयेत्। मूढ़दानवाभ्यां तथानुष्ठिते तुत्रकः अवसर मासाद्य सद्यः पादुके पादयोः परिधाय यष्टिभोजनपात्रे समादाय नभोवर्त्मना परिभ्रमन् पुरन्दरपुरप्रतिमं पुरमेक मालोक्य तत्रावतीर्य्य तदपूर्व्वद्रव्यापहरणं माशङ्कमानः अदूरे जीर्णपर्ण—निलयं नीरीक्ष्य

तत्रोपतस्थे। तत्रच गेहस्वामिनो सगोतिप्रत्तीया वर्षीयसी समोक्ष्य "कुशमर्थेन प्रोषयतामया अत्रैव कतिपय दिन वर्त्तितव्य" मित्यवादधारत्। वृद्धा धन लब्धा तं सयत्न स्वगिवासे निवासयति।

अथैकदा वृद्धा पुत्रक प्राहश्रायुष्मन्! तवरूप विलोक्य त्वा राजतनयं गणयामि, मन्ये न परिणीतश्चानसि। अस्त्यस्माकं राज्ञः पाटली नाम असामान्यलावण्या एका कन्या, सा रूपेण लक्ष्मीः, गुणेन सरस्वती। वृद्धावचन निशम्य स पाटली मालोकायितु मुदमगात्। ततो निशीथे सर्व्वतो निस्तब्धे जोपलोके पुत्रकः पादुके समादाय सुरत्नर्म्मवर्त्मना नृपान्तःपुर समेत्य कौशलेन पाटली-प्रकोष्ठ मुपातिष्ठत्, तां निद्रितां दृष्ट्वा स्वमनोरथ मिष्ट यष्ट्या लिलेख। पाटली प्रबुद्धा मन्मथाहितमनोरथा विलोललोचनेन पुत्रकाय स्वाशय प्रकाशितवती। ततो गान्धर्व्वविधिना तयोः परिणयः समपद्यत। निशाया मवसितप्रायायां ततः प्रतस्थे निर्विघ्नः पुत्रकः। एवं प्रतियामिनि प्रयाति स पाटलीप्रकोष्ठ। एकदा पाटली प्राह प्रिये! दिवसे तवविरहेण भृश विषीदामि, तत्स्थानान्तरप्रस्थानव्यवस्था विधेया मया। पाटली कथितवती 'त्वत्कृते मयापि क्रियते तद्-यथा नाम माचरतु भवानिति। पुत्रकस्तदाकर्ण्य पादुकासाहाय्येन नभसी गङ्गातीर समेत्य तत्र यष्टि महिम्ना राजधानी निर्म्ममौ। उत्तरोत्तरमपि यष्ट्या यथायथ अभिलाष सम्पादयन् सुखेनानेहस नतीतैः। ततः प्रभृति पाटलीपुत्रनगरीयं लक्ष्मीसरस्वत्यो निवासभूमिः

वररुचिः काणभूति 'गुरुदेववर्ष इत्यभिधाय व्यरंसीत्। वयमपि कृत्वाति विस्मिता अभूम" इत्यादिक बहुधाभिधाय सत्तोऽहं परिज्ञातुकामः पुण्यधामनदरिकाश्रममाश्रित्य देवी भगवती भवानी मभितुष्टाव। देवी तं प्रति प्रसीदन्ती आत्मान दर्शयन्ती

प्राह—"वत्स ! हिरण्यरेतसः प्रज्वाल्य देहमिमं भस्मसात् विधाय दिव्यभावं लभस्व"। वररुचिर्देव्यावरमासाद्य सद्यो देहं विदह्य दिव्यभावमाससाद इति शम् ॥

श्रीहेरम्बनाथ शर्म्म तर्कतीर्थस्य ।

## वर्षशेषाभिभाषणं ।

भगवत्कारुणया सहृदयानां ग्राहकाणामनुग्रहैश्च अगणित बाधा-विघ्न मविगणय्य कथं कथमपि प्रथमवर्षमतिक्रामतीयमार्य्यप्रभा । अस्मिंश्च वर्षे बहून्येव विमर्षकारणानि सन्ति ग्राहकाणां, ततश्च यथाकाल मप्रकाश एव पत्रिकायाः प्राधान्येनोल्लेखयोग्यः । किन्तु इन्त तदुपशमे बहुशः कृतप्रयासा अपि मुद्रायन्त्रादिविशृङ्खलया अकृतार्थाः स्वत एव नितरां लज्जामहे । "अकृतत्वाच कर्म्म न शिष्यन्ते लोकाः" इति शिक्षितानामपि मुद्रायन्त्राधिपतीनां स्वर्णकारादीनामिव वाक्यास्थिरतायाः स्वाभाविकत्व मास्थापयितुं नैव वयं प्राभूम, तदस्मता जनित मपराधमिम मस्माकं मृष्यन्तु सन्तः । अनन्यगतिकतयाच सम्प्रति भाषापरिच्छेदांशमुद्रणव्यवस्थां वाराणस्यां विधाय उभय यत्न साहाय्येन तदुपशमाय यतामहे, आशास्महे च ग्राहकाणामनुग्रह दृष्टिश्चेदस्मासु स्थास्यति तदावश्यमेव क्रमशोऽस्माकमाशा दोषापसारणे प्रभविष्याम इति ।

विदितमस्तु ग्राहकाणां मुद्रणासामर्थ्यान्नैवास्मिन् वर्षे कतिपय सङ्ख्यायाम प्रदत्तं भाषापरिच्छेदांश मागामिवर्षीय पत्रिकायां क्रमशः पूरयिष्याम इति । —

मुद्रायन्त्र शैथिल्येनैव समुचित समयस्यातिपातात् पुनरत्यतिपातभियास्मिन् वर्षे संशोधने पि यथोचितमवधानं नावलम्बित मस्माभिरितस्ततश्चिरपि स्थाने स्थाने वर्त्तते। यथा—१म पत्रे कुञ्जे इत्यत्र "कुञ्जे" ५म पत्रे समीपमित्यत्र "समीपे" ६८पत्रे निरस्तकाम इत्यत्र "निरस्तकामः" ८म पत्रे त्वमेवेत्यत्र "त्वमेव" २२श पत्रे मधेऽध्यामहे इत्यत्र "अधीष्यामहे" २५श पत्रे मलग्रहिरित्यत्र "मलग्रहिः" ४३ शत् पत्रे दव्येरित्यत्र "द्रव्येः" ३५पत्रे वत्तुं जिह्वेमीत्यत्र "वक्तुं जिह्वेमि" ६७ ष्टि पत्रे कुशलमीत्यत्र "कुशलं" ६८ष्टि पत्रे माता पितृ भ्रातृ भक्तिस्तु इत्यत्र "पितृमातृभक्तिस्तु" १५१ पत्रे युवाभ्या मित्यत्र "युष्माभ्यां" एव मन्यत्रापि स्थाने स्थाने ज्ञातव्यमेवाशुद्धेति विज्ञापयामः। अनुस्वारस्तु चिरप्रकाश्यमलज्जयैव प्रायेणाशुद्धतांगत इति स्वीयस्वभावसुलभयैव दयया तत्तत्स्थल मवधार्य्य बोधयन्तु सन्तः।

बङ्गदेशीयाना मार्य्यप्रभाया ग्राहकाणा मधिकसंख्यका एव काव्यव्याकरणाध्यायिन श्छात्राः तेषाञ्च कतिपये रघु रच्यते गवर्मेण्टकाव्यव्याकरणोपाधि परीक्षायां काव्यस्यमध्यपरीक्षायाञ्च पाठ्यरूपेण निर्द्दिष्टां "छन्दोमञ्जरीं" नवीनोपयोगि विस्तृत टीकया समलङ्कृत्य क्रमशः प्रकाशयितुं, तन्निर्द्धारणे च ग्राहकानां सम्मतिरेव सर्व्वथापेक्षणीयेति विज्ञापयामः सर्व्वैरेव ग्राहकैरनुग्रहेण स्वाभिमत मचिराद्विज्ञापनीयं यस्मादधिकसंख्यक ग्राहकाणां मतानुसारेणैव कार्य्यमेतं व्ययसवतरिष्यामः। ग्राहकाणामनुग्रह एव पत्रिकाणां परिचालकः, एतावताच काले नानुकम्पया ये संस्कृतानुरागिणः सन्तः "प्रभाया" ग्राहकत्व मङ्गीकृतवन्तः तेभ्यः समधिगतैरर्थैः पत्रिका परिचालन व्ययस्याद्धं कथं कथमपि निर्व्वाह्यते, एतच्च यद्यनुकम्पया सर्व्वएव ग्राहका एकैकं ग्राहकं संगृह्णीयुः तदैव द्विगुणितायां ग्राहकसंख्यायां स्वावलम्बनेनार्य्यप्रभा परिचालितुं शक्नुयात्। एकैकस्यैव ग्राहकस्य संग्रहोऽपि ग्राहकाणां न कस्यापि दुःसाध्यः परन्तु किञ्चित् सानुरागानुकम्पया साध्यः, सुतरां सर्व्वेषामेव ग्राहकाणा मन्तिके सविनयमभ्यर्थयामहे यत्ते सर्व्व एवैकैकं ग्राहकं संगृह्य बालिकाया आर्य्यप्रभाया दीर्घजीवनं स्थापयन्तु। सर्व्वेषामेव संस्कृतानुरागिणां देशहितैषिणां मुखापेक्षिणीयं बालिका आर्य्यप्रभेति स्मरणीयत्वेनास्याःसंरक्षणे नोदासीतव्य मनुग्राहकै ग्राहकैः।

चिरां कुर्व्वन्तुच सर्व्वे वर्षारम्भे पेण साद्धं सर्व्वेषामेव ग्राहकाणां मूल्यं नि:शेषितमिति सर्व्वैरेवानुकम्पयाति सत्वरं द्वितीय वर्षमूल्यं सपादैकरूपकं संप्रेष्य वयमुत्साहिता बाधिताश्च करणीया इति शं।

# मङ्गलाचरणम् ।

या मोहसन्दोहविनाशयित्री विज्ञानदीपस्य विकाशयित्री ।
भक्तस्य वाञ्छोचित सिद्धिदात्री वाग्देवतां तां प्रणमाम्यहम् ॥१॥

यस्याः कटाक्षै रधनोऽपिधन्यो जडोऽपि वाग्मिप्रवराग्रगण्यः ।
जात्यादिहीनोऽपि भवेद्वरेण्यो वाग्देवतां तां प्रणमाम्यहम् ॥२॥

या श्वेतपद्मासनसन्निविष्टा शुभ्रञ्च वस्त्रादिक मुद्वहन्ती ।
त्यक्तुं तमः शिक्षयतीव लोकान् वाग्देवतां तां प्रणमाम्यहम् ॥३॥

या लेखनीं पुस्तक मत्रहस्ते वीणां प्रवीणाञ्च मदा वहन्ती ।
वक्तीव कर्त्तुं युगपद्वहूनि वाग्देवतां तां प्रणमाम्यहम् ॥४॥

ब्रह्मानने या परिशोभमाना या नीलकण्ठस्य च कण्ठलग्ना ।
लक्ष्मीप्रियेणापिच प्रीयमाणा वाग्देवतां तां प्रणमाम्यहम् ॥५॥

या व्यासवाल्मीकिमुखान् महर्षी नन्यानगण्या नपि तच्चरण्यान् ।
कवित्वगोष्ठीष्वकरोद्वरिष्ठान् वाग्देवतां तां प्रणमाम्यहम् ॥६॥

या कालिदासं नितरां निराशं देहं जिहासुं प्रसमीक्ष्य साक्षात् ।
सन्तोषयामासतमां समेत्य वाग्देवतां तां प्रणमाम्यहम् ॥७॥

या भारती भारत सन्ततीनां सुख्याति मद्यापि समातनोति ।
अवश्यकर्त्तव्यतयैव मातु र्वाग्देवतां तां प्रणमाम्यहम् ॥८॥

प्रणम्य मातस्तवपादपद्म मनन्यलम्बः पदसम्बलस्ते ।
आर्य्यप्रभायाः प्रचुर-प्रचारे विचारमूढोऽपिच संप्रवृत्तः ॥९॥

सुतेषु मूर्खं प्रति मातुरीक्षणं प्रतिक्षणं सूक्ष्मतमं समीक्ष्यते ।
अतोऽभये निर्भयमेवमुत्सहे कलङ्कपङ्के पतनेऽप्यशङ्कितः ॥१०॥

निकृष्टभक्तान् प्रति याऽनुरक्ति स्तया महत्त्वं किमु भक्तितस्त्वया ।
कृच्छ्रेऽधमे सञ्चितविघ्नपुञ्जे निष्कारणा चेत् करुणावगम्यते ॥११॥

करोषि वा नैव दयां त्वमम्बत स्वनाममाहात्म्यत उत्तराम्यहं ।
पश्यन्तु ते नामबलं जगज्जना भयाथवा हास्यमथाभिलप्सते ॥१२॥

# भूमिका ।

संस्कृतभाषैव जगति सर्व्वादिमभाषा, अनादिसिद्धवेदानामेतद्भाषोपनिबद्धत्वमेवास्या अनादित्वं निर्व्वाधमवधारयति । एषैव देवभाषेति गीयते, तथाच "संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभि"रिति प्राचीनतमा गीतिः । एकदा संस्कृतभाषाया एतादृशप्रसार आसीद् यदेतदनभिज्ञो जनो जगत्य न्धायमान इवामन्यत । वस्तुतः संस्कृतानभिज्ञता आर्य्याणा मन्धत्वं सर्व्वथैवसमर्थयत्यस्मिन्नास्त्यनुमात्रं सन्देहः, यतो हिन्दु समाख्यानां मूलीभूता वेदाः संस्कृतोपनिबद्धाः, यच्च पञ्चम वेदापरनामकं महाभारतं भारत गौरवमद्यापिप्रथयति, यत्प्रतियोगि सर्व्वाङ्गसुन्दरं ग्रन्थान्तरं भाषान्तरोपनिबद्धं नास्तीति सगौरव मुच्चभाणं वचोपि न परिहास्यते तदपि संस्कृतभाषोपनिबद्धमेव, अन्यानि च धर्म्मकर्म्मादिप्रतिपादकानि पुराणोपपुराणादीनि संस्कृतेनैव निर्म्मितानि, संस्कृतेनैव रचिता मन्वादिधर्म्मसंहिताः, रघुनन्दनप्रभृति निबन्धकृद्भिरपि आर्य्याणां धर्म्मकर्म्मप्रतिपादकाः संगृह्य ग्रन्थाः संस्कृतेनैव ग्रथिताः, यानिपुनरार्य्याणां दर्शनानीव षड्दर्शनानि, येचतत्तद्भावामृतं निस्यन्दयमाना भाष्यग्रन्थाः तत्तद्भावार्थं प्रकाशकानिच यानि व्याख्यापुस्तकानि तान्यपि सर्व्वाणि संस्कृतभाषाभाषितानि, परमाध्यवसायेनासीमबुद्धिना गङ्गेशोपाध्यायेनापि संस्कृतेनैव नव्यन्यायं प्रणीयालोकसामान्यं विचार नैपुण्यं दार्शनिकानामप्याश्चर्य्यकरं प्रदर्शितं, तत्तट्टीकाकृतोपि रघुनाथ मथुरानाथ प्रभृतयः संस्कृतेनैव नूतनान्नूतनतमं पन्थानं क्रमशः प्रदर्श्य युगान्तरमिव सम्पादयामासुः, अहो तेषां बुद्धिमत्तापर्य्यालोचनयार्य्याणां नच के समतीवाश्चर्य्यान्विताः स्युः ?

अपिच यद् भगवल्लीलानुप्राणितं समतिगम्भीरभावोपबृंहितं श्रीमद्‌भागवत मविरतं भक्तिरसामृतमभिस्यन्दयति, यदपि मुखकविवाल्मीकि मुखनिःसृतं मोक्षनिदानं रामायणं रामनाममाहात्म्य मुद्दीपयति, यदपिच शिवभाषितं तन्त्रशास्त्रं मन्त्रयन्त्रादिमाहात्म्य मुत्क्रोशयति, तान्यपिसर्व्वाणि संस्कृतेनैवाविस्कृतानि। संक्षेपतो हिन्दु समाख्याना मनुसन्धानास्पदं सर्व्वमेव संस्कृतभाषाभाषितमित्येव मन्तव्यं, किंबहुना आर्य्याणां प्रात्यहिक सन्ध्यावन्दनादिक्रियाकलापादोन्यपि सर्व्वाणि संस्कृतेनैवाद्यापि सम्पाद्यन्ते। सुतरां आर्य्यधर्म्मसंरक्षणं तम्मर्म्माभिज्ञानञ्च संस्कृतविज्ञानं विना कथंकथमपि न सम्भवतीति सुस्थितमेव।

कवित्वचर्च्चयापि संस्कृतभाषैव सर्व्वोच्चस्थानमधिचकार। यतः परस्परस्पर्द्धितकवित्वशक्तयो दण्डिमाघ भारविवाणभट्टभवभूतिश्रीहर्ष कालिदासादयः संस्कृतेनैव काव्यकाननं निर्म्मायामरायन्ते। व्याकरणैरपीयमेवभाषा सर्व्वथा सुसम्पन्ना समजनि, नास्ति भाषान्तरस्य तादृशं सर्व्वाङ्गसुन्दरं व्याकरणं यत् पाणिन्यादीनां सादृश्य मर्हति लब्धुं। तस्मात् संस्कृतभाषैव भाषासु सर्व्वोत्कर्षेण वर्त्तत इत्यत्र नास्ति केषामपि विमर्शः।

प्राचीनेतिहासादिसमालोचनया नाटकादीनां संस्कृतभाषाऽभिनय विज्ञानेनच संस्कृतमेवार्य्यजातीयानां मातृभाषासीदिति प्रतिभाति। समतिदुर्व्वोधतयैव संस्कृतभाषा मातृभाषा भवितुं नार्हतीति तु नाशङ्कनीयं तथात्वे दुर्ज्ञेय "हूया होमा" प्रभृति विभक्तिसङ्कुल "मिजानजोव्हा" प्रभृति व्याकरण पठनमन्तरेण दुरधिगम्यतया आरव्यभाषादीनामपि मातृभाषात्वं विलीयेत। वस्तुत आस्तनन्धयं येन या समभ्यस्यते व्याकरणाध्ययनमन्तरेणापि स तया भाषयाऽक्लेश माभाषितु मर्हति, सुतरां दुरधिगम्यापि सा तेन सुगमैव भवति। अस्यतुनिदर्शनमेतदाश्रम

वासिन्य एव सप्तमाष्टमवर्षवयस्का: कन्यका अपठित्वैव संस्कृत व्याकरणं केवल मावाल्यादालापश्रवणेनैवानर्गलं संस्कृतभाषया भाषितु मर्हन्तीति, तदाभाषणं पुन:कीदृशं श्रुतिमधुरमिति येन येन तच्छ्रुतं त एवजानन्ति। तस्मादभ्यासविरहादेव संस्कृतभाषाया दुरधिगम्यत्व मस्माभि र्मन्यते, येषां पुनर्म्मातृभाषासौकर्य्यरक्लेशमेव सर्व्वदा संस्कृत भाषयाभाषितरामिति मन्तव्यम्।

किन्तु हन्त कालप्रभावा दर्थानागमकतया साधारणोत्साहविरहेण सर्व्वथाऽतुलनीयापि सा संस्कृतभाषा नितरां जीर्णशीर्णकलेवरा नि:स्व कतिपयब्राह्मणपण्डितमात्रशरणा कथं कथमपि भारतेऽस्मिन् जीवित मवलम्बितवती, संस्कृत शास्त्राणिच प्राणेभ्योपि प्रियतमानि तथैव प्रायोविलुप्तिं गतानि। अधुनापुनर्द्दयावता गवर्णमेण्टेन समुत्साह प्रदर्शिततया विभिन्नदेशीयैरपि समुच्चस्थानाभिषिक्ततया भगवत्करु- णयाच बहूनामेव सहृदयानां दृष्टिस्तत्रा पतितेति क्रमशोऽस्माकं तद- भावो दूरंजिगमिषु: प्रचलति। कालगत्या बहूनां कार्य्यदक्षपाश्चात्य शिक्षितानामपीदानीं मृतकल्पाया: संस्कृतभाषाया विलुप्तप्रायाणाञ्च संस्कृत शास्त्राणा मुद्धारकल्पे वद्धपरिकरताहृश्यत इत्यत: परं किमहो- सौभाग्यजनकमिति।

अनेन च सौभाग्यदर्शनेन सर्व्वेषामेव सहृदयानां हृदयमिदानीं समाकृष्टं, वयमपि तद्दृष्ट्वातिहृष्टमानसा: कथंकथमपि समासादिताशाङ्कुरा: संस्कृतशास्त्रार्थप्रचारे वद्धपरिकरा: समतियत्नपरिरक्षिताया स्तस्या: सेवायां निरता बहुतमं वाधाविघ्नमतिपात्य "आर्य्यप्रभा"नाम्नीं संस्कृत मासिकपत्रिकां प्रकाशयितुं प्रवृत्ता: सर्व्वेषामेव देशहितैषिणामस्या- "मार्य्यप्रभायां" सदय दर्शन माकाङ्क्षाम:। आशास्यतेच सहृदयानां ग्राहकाणा मनुग्रहेणार्य्यप्रभेयं दिनेदिनएव श्रीवृद्धि मापत्स्यते।

इत:पूर्व्वञ्च देशेऽस्मिन् या या संस्कृत पत्रिका कथंकथमपि प्रादुरभवत् ग्राहकाणामाग्रहविरहेण सम्पादकानामौदासीन्येन वा सर्व्वासामेव-तासांप्रायोविलुप्तिमुपलक्ष्य परं भीतभीता अपि सहृदयानां कतिपय शिक्षितमहोदयाना मुत्साहेनैवास्या: प्रचारे वयं प्रवर्त्तामहे, कियद्दूर वर्त्तिनो भवितुमर्हाम इति सर्व्वान्तर्यामी परमेश्वर एव जानाति ।

वत्सरस्य प्रथममासादेवास्या: प्रकाशाय बलवती वासनास्माक-मासीत् तदनुयायि विज्ञापनमपि प्रचारितं, किन्तुहन्त मुद्रायन्त्रादि विशृंखलतया सर्व्वथाऽपरिहरणीयान्तरायान्तरेण च मासचतुष्टयमतिपात्यै-वेयं प्रकाश्यते तदवश्यं सोढ़व्यमनुग्राहकैर्ग्राहकै: । सम्भावयाम: प्रतिमासं यथासमयमेवात: परमियं ग्राहकाणां समीपे समुपस्थास्यतीति शम् ॥

# वर्षावर्णनम् ।

घनागमो वारिदनिस्वनच्छलैः संतर्ज्जयन् विश्वजनस्य मङ्गलः ।
तापप्रदं भीमनिदाघदुर्ज्जनं निरस्तुकामः सहसा समागतः ॥१॥
वर्षत्पयोदोन्मदमत्तकुञ्जरो नभश्चरक्रौञ्चसितातपत्रितः ।
कूलोशनादोद्गतनालिकध्वनि स्तडित्पताको नृप एवराजते ॥२॥
सुरम्यशष्पोन्मदनीलकण्ठा हरिन्मणिश्लिष्टसुनीलरत्नैः ।
विभूषिता भू रपिविभ्रमेव सद्यः समासाद्य तमेव हृष्टा ॥३॥
कूलानुपातं सरितस्त्वराम्बिता उन्मार्गवर्त्ता इव योषितःक्वचित् ।
वहन्ति रत्नाकर-कान्तलालसाः कल्लोलनादैरिव नृत्यगीतिकाः ॥४॥
प्रोद्भिन्नशष्पाङ्कुरराजिराजिते वनप्रदेशे प्लवते समन्ततः ।
ससाध्वसं सद्घननिस्वनैर्मुहु रङ्गप्रियं हन्त कुरङ्गवृन्दकम् ॥५॥
वियोगदुःखच्चतमानसानां सन्तापशान्त्यै घनराज एषः ।
सन्दाहदच्चं विरहातुराणां शङ्के शशाङ्कं मुहुराबृणोति ॥६॥
मुहुःसमुच्चैर्ध्वनिभिः पयोमुचो विद्युत्प्रभाभिश्च प्रजातसाध्वसाः ।
व्यपेतनिद्रा गलदश्रुलोचनाः परिष्वजन्ते जननी स्तनन्धयाः ॥७॥
सन्तर्पयं श्चातकपच्चिणां कुलं तृषाकुलं शीतलवारिशीकरैः ।
वलाहकानां निवहोविराजते सशक्रचापः श्रुतिहारिनिस्वनः ॥८॥
समीरणः सर्ज्जकदम्बकेतकी श्चुम्बन् सुगन्धः स्रवदम्बुसङ्गतिः ।
सुशीतलो गाढ़निदाघतापितान् वहन् करोति प्रसभं प्रमोदितान् ॥९॥
प्रफुल्लनीलोत्पलपुण्डरीकं नदद्विहङ्गं प्लवनिस्वनश्च ।
सरः प्रहर्षादिव फुल्लनेत्रं करोति गीतं मधुरं सहासाम् ॥१०॥
वर्षाम्बुसिक्तं वसुधातलं पुन रुष्णां प्रभाभिःक्षणमुष्णरोचिषः ।
इत्येव भावं परिदर्श्य वेधसा शुभाशुभस्याऽस्थिरता वितन्यते ॥११॥

श्रीहेरम्बनाथ शर्म्म सिद्धान्तशिरोमणेः ।

# मायावादः ।

जगत्यस्मिन् खलु यत्किञ्चिद्दृश्यते तत्सर्व्वमिदं माया-प्रभावेणा-वस्त्वपि वस्त्वाकारेण प्रतिभाति । सृष्टेः प्राक् कारणरूपेण सदेवासीत्, नामरूपाभ्यां व्याकृतं वस्तुजातन्तु नासीत् । यदातु स्वस्मिन् स्वमाया प्रभावेण क्रिया भवति तदासौ सर्व्वज्ञः सर्व्वशक्तिमान् भगवान् नित्य शुद्धबुद्धमुक्तस्वभावोऽपि वाञ्छति, एकोऽहम् वहुःस्याम् प्रजायेय इति, तेन सद्वस्तुनि ब्रह्मणि मायाप्रभावान्नामरूपाकारेण प्रपञ्चं वस्तुजात परिलक्ष्यते । अहो मायायाः का चमत्कृतिः यत् स्वमायाप्रभावेण स्वस्मिन् स्वस्य भ्रमोजायते, नास्य दृष्टान्तः सम्भवति जगत्यस्मिन्, रज्जौ सर्पभ्रमः, शुक्तौ रजतभ्रमः, स्थाणौ पुरुषभ्रमश्च यथा जायते, न तथा ब्रह्मणि जगद्भ्रमः, यदारज्ज्वादौ पुरुषस्य सर्पादिभ्रमः तदा तस्य रज्जुज्ञानं सर्पज्ञानञ्च द्वे एव वर्त्तेते, पूर्व्वज्ञानवशात् चाकचिक्यादि सादृश्यदर्शनेन शुक्त्यादौ रजतभ्रमो जायते । जगदध्यासे तु ब्रह्मणः स्वस्मिन् एव स्वस्य भ्रमो जायते, द्वितीयविरहात्, नातो दृष्टान्त-दार्ष्टान्तिकसमन्वयः । शास्त्रादौ रज्ज्वादिदृष्टान्तस्तु आंशिकभावेन वोधयितुमुपन्यस्तः, सति द्वैतज्ञाने अद्वैतज्ञानासम्भवात् । यदाहि स्वमायाप्रभावेण परमात्मनो वयं भिन्ना इति पृथगाकारेण जीवाः प्रतियन्ति तदैव ब्रह्मणि जगद्भ्रमो जायते, जीवानां ब्रह्मणोविभिन्न ज्ञानेन प्रतिभासमानत्वात् तदैवासौ सर्व्वस्याप्रकाशः योगमायासमावृतो भवति, तेनैवाभिहितं "नाहं प्रकाशः सर्व्वस्य योगमायासमावृतः ।" योगमायाशब्देनात्र भगवच्छक्ति रेवोच्यते, वेदान्ते सा अनाद्यनिर्व्वच-नीया, सांख्यमतसिद्धप्रकृतिरपि तत्स्थानीयतया प्रतिभाष्यते, तथाचोक्तं भगवता श्रीकृष्णेन—

सर्व्वभूतानि कौन्तेय ! प्रकृतिं यान्ति मामिकां।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्॥
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्॥

संसारेऽस्मिन् मायामोहितमानसा एव मानवनिवहाः संसारसारतां न विलोकयन्ति, यैतावदत्र मायापाशं केत्तुं न समर्था स्ते कदाचिदपि आत्मोत्कर्षं साधयितुं न प्रभवेयुः। सुतरां तत्त्वजिज्ञासुभि मायामनुच्छेदने यत्नशतेनापि मनः समाधेयं।

यः खलु भारतवर्षः पुरा गार्गी-मैत्रेयीप्रभृतिभिर्महिलाभिरलङ्कृत आसीत् तत्रैवाहमल्पबुद्धिर्मूढ़ा च योगमायां समाख्यातुं नापत्रपे, कारणं खल्वेतदस्य:— कदाचिन्निर्ज्जने समासीनाया भारतगौरवस्वरूपाणां मातृणामुपदेशवाणीं स्मरन्त्या मे क्षुद्रहृदये "नाहं प्रकाशः सर्व्वस्य योगमायासमावृत" इत्यतर्कितं समुपस्थितं संसारस्यालोकत्वं स्मारयति स्म। ततः प्रभृति निरन्तरमन्तरे वासनेयं वसति "यत् मदीयं मनोरथमस्मत्समधर्म्मयोषितां सकाशे प्रकाशयामी"ति। किन्त्वेतावत्कालं तदुपायविरहेण मनस्येव सा वर्त्तते, साम्प्रतमार्य्यप्रभां तत्साहायकसम्पादिकामासाद्य तत् प्रकाशयितुं निर्गन्धमपि प्रबन्धकुसुममेकं समर्पयामि। आशास्यते च भवदनुकम्पया तदार्य्यप्रभायां स्थानं लभेत इति।

सांख्यव्याकरणतीर्थ—

श्रीवासन्तीब्रह्मचारिण्याः।

[जगत्पुराश्रमतः]

# दर्शन समालोचनम्।

यद्यपि दार्शनिकवर्य्येण श्रीमन्माधवाचार्य्येण चार्व्वाकादि दर्शनान्यपि "सर्व्वदर्शन संग्रह" ग्रन्थे दर्शनत्वेन निर्द्दिष्टानि, तथापि तेषां खण्डनार्थमेवोपन्यस्ततया सर्व्वथा वेदविरुद्धतयाच्च न्याय वैशेषिक सांख्य पातञ्जल मीमांसा वेदान्ता इति षड्दर्शनान्येव प्रधानतो दर्शनपदेन व्यवह्रियन्ते। गौतम कणाद कपिल पतञ्जलि जैमिनि वेदव्यासाश्च परमर्षयः क्रमशस्तेषां षड्दर्शनानां प्रणेतारः। सर्व्वेषामेव तेषां मोक्ष एव प्रधानतो लक्ष्यः सचात्यन्तिक दुःख निवृत्तिरूपः (१) यादृश दुःख निवृत्तिकाले पुनर्दुःखोत्पादकसामग्रीणामपि सर्व्वथा विगमस्तादृशदुःखनिवृत्तिरेवात्यन्तिकदुःखनिवृत्तिपदेनोच्यते। मिथ्याज्ञान सलिलावसिक्तायामात्मभूमौ नियतमेव कर्म्मबीजेन धर्म्माधर्म्माङ्कुरस्योत्पादात् तत्त्वज्ञाननिदाघनिपीत सलिलायामूषरायामनुत्पादाच्च तत्त्वज्ञानमेव मोक्षस्यैकमात्रं साधनं। तच्च तत्त्वज्ञानं— न्यायवैशेषिकमते जीवात्मनः शरीरात् पृथक्त्व ज्ञानं, सांख्यपातञ्जल मते प्रकृतिपुरुषयोः पृथक्त्वज्ञानं मीमांसकमते आत्मनः प्राकृतिकावस्थाज्ञानं वेदान्तमते च जीवब्रह्मणो रैक्यावधारणं।

नच "वाराणस्यां तनुत्यागाद्ब्रह्मविद्याप्रबोधनात्। द्वाभ्या मेव भवेन्मुक्ति र्नास्त्यन्यन्मुक्तिकारण" मित्यादिवचनात् काशीमरणस्यापि मुक्तिकारणतायाःस्पष्टमायाततया तत्त्वज्ञानमेवेत्येवकारोऽसङ्गत इति वाच्यं "त्वमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यते ऽयनायेति" श्रुतावेवकारस्य तत्त्वज्ञानव्यतिरिक्तानां मुक्तिकारणत्वव्यवच्छेदकत्वेन तदेकवाक्यतया वाराणस्यां तनुत्यागादिति पञ्चम्याः प्रयोजकत्वार्थक-

(१) तदत्यन्त विमोक्षोऽपवर्गः इति न्याय सूत्रम्।

त्वात् । तथाच काशीमरणं तत्त्वज्ञानद्वारा मुक्तिप्रयोजकं नतु साक्षान्मुक्तिजनकमित्यवगन्तव्यम् ।

एतेषामपि दार्शनिकानां बहुष्वेवविषयेषु परस्परं भूयान् मतभेदो दृश्यते । तत्र च न्यायवैशेषिकदर्शनयोः सिद्धान्तःप्रायशस्तुल्यः । अथ न्यायमते प्रमाण प्रमेय संशय प्रयोजन दृष्टान्त सिद्धान्तावयव तर्क निर्णय वाद जल्प वितण्डा हेत्वाभास छल जाति निग्रहस्थानानीति पदार्थाः षोड़श (२) वैशेषिक मते च द्रव्य गुण कर्म्म सामान्य विशेष समवायाः षड़ेव (३) पदार्था इति प्रथमत एवानयोर्महान् भेद इतिचेन्न षोड़शपदार्थानामपि अत्रैवान्तर्भावात्, तथाहि प्रमितिकरणानि प्रमाणानि, तेषु प्रत्यक्षप्रमितिकरणाना मिन्द्रियाणां द्रव्ये, अनुमित्युपमितिशाब्द-प्रमितिकरणानाञ्च व्याप्तिज्ञान सादृश्यज्ञान पदज्ञानानां गुणे अन्तर्भावः । योऽर्थः प्रतीयते तत्प्रमेयं, तच्च आत्मा शरीरं इन्द्रियाणि अर्थाः वुद्धिः मनः प्रवृत्तिः दोषाः प्रेत्यभावः फलं दुःखं अपवर्गश्चेति द्वादश विधं । (४) तेषुच आत्मशरीरेन्द्रियाणां द्रव्ये, अर्थानाञ्च गन्धरूपरसस्पर्शशव्दानां गुणे, वुद्धेरपि गुणे, मनसोद्रव्ये, प्रवृत्तेर्गुणे, दोषाणामपीच्छाद्वेषमिथ्या-ज्ञानस्वरूपाणां रागद्वेषमोहपदप्रतिपाद्यानां गुणे, प्रेत्यभावस्य (५) च मरणानन्तरं प्राणशरीर संयोगरूप जननलक्षणस्य गुणे अन्तर्भावः ।

---

(२) प्रमाण प्रमेय संशय प्रयोजन दृष्टान्त सिद्धान्तावयवतर्क निर्णय वाद जल्प वितण्डा हेत्वाभास छल जाति निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति न्याय सूत्रम् ।

(३) धर्म्मविशेषप्रसूताद्द्रव्यगुण कर्म्म सामान्य विशेष समवायानां पदार्थानां साधर्म्म्य वैधर्म्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसमिति वैशेषिक सूत्रम् ।

(४) आत्म शरीरेन्द्रियार्थ वुद्धिमनः प्रवृत्ति दोष प्रेत्यभाव फल दुःखापवर्गास्तु प्रमेयमिति न्यायसूत्रम् ।

(५) प्रेत्य मृत्वा भावो जननमिति व्युत्पत्त्या मरणोत्तरजन्मत्वं प्रेत्यभावपदार्थः । चरम-प्राण शरीर संयोगध्वंसो मरणं, आद्यशरीर प्राणसंयोगश्च जन्मेति प्रतिपत्तव्यं । "पुनरुत्पत्तिः प्रेत्यभाव इति न्यायसूत्रम् ।

क्रमशः——

# मानवजीवनस्य लक्ष्यं तत्साधनोपायश्च ।

ॐ। भवन्तो भारतीया महानुभावा गुणगरिष्ठाः पितृसङ्काशा भ्रातृसम्मिता वाऽऽर्य्यवंश कोरकाः? नूनं सुप्रभातमद्य यन्निखिल लोकपावनी स्वप्रभया दशदिगुद्भासिनी आ सृष्टिकालात् प्रवर्त्तमानाऽपि साम्प्रतं नानाविधविलासलालसागर्त्तगता भारतगौरवरविप्रभा आर्य्यप्रभा सहैवार्य्यप्रभोदयमभिलषन्त्या प्रत्नैर्बुधैः समाचरितां नीतिं स्मारयन्त्या "ज्ञानार्थिनां मङ्गलमङ्गीकुर्य्यात् तया ज्ञानालोक प्रकाशेन शिल्पविज्ञान कलाकौशलवतां साहायकमाचरेयं" इति मन्यमानानामस्माकं करकण्डूयाविनिवृत्तये इवोदितयाऽऽर्य्यप्रभयार्य्यवर्य्याणामत्रभवतां सहृदयानां सकरुणनयनवर्त्म विचरणे समर्था। आशंसे जगदीशं यत्शोभतां पुनरपि प्रतिगृहमियमार्य्यप्रभा। अद्याऽस्मिन् शुभमुहूर्त्ते सर्व्वैरेवार्य्यवंशधरैः सङ्गतैरार्य्योचिता स्वस्वप्रभा वितन्यते। सर्व्वैरेव स्वरचितया सुललितविन्यासया निगूढार्थया प्रसन्नवर्णया सदुक्तिगुणगुम्फितया वचनसरोजमालयाऽऽर्य्यप्रभामहालक्ष्मीरियमर्च्यते। किन्तु विस्मयमावहतीदं, यदार्य्यजनपूजार्हाया अस्या अस्मिन्नधिवासदिवसे वसन्त समागम मधुरं पञ्चमं जनगनमनोमोहनञ्च गीयमानं परभृतां कलकूजितमाकर्णयताङ्काकलोकोविदानाम्पुरतः कायकालिमकान्तिसाम्येनेव कुहु साजात्यमात्मनश्चिन्तयन् रचितसाहसः सन्त्यक्तसाध्वसः कठोरकर्कशरवो वायसोऽप्यात्मीयं श्रुतिकुहरदारकं परुषमारटितमादाय परीक्षार्थमुपतिष्ठते। एष खल्वर्य्यगौरवेनाकृत साक्षात्कारः, पदलालित्येन कार्कश्यसहवासभयादिवैतैनैवास्पृष्टकण्ठः, पापपङ्कासङ्गभयादिव प्रसन्नतया परित्यक्तः। वामनोऽप्येष जिघृक्षति बाहुभ्यां सुधांशुम्। पङ्गुरपि लिलङ्घयिषतुत्तुङ्गमद्रिशृङ्गम।

मलमल्लकशेषोऽपि गणयति मनसाऽऽत्मनो राजराभिषेकशुभदिनम्। पतङ्गोऽपीच्छति श्येनसम्पत्तिम्। नूनमेषोऽङ्गुलया परिमितुमनि दिगन्त विश्रान्तप्रवाहम्पयोनिधिम्। वाहुभ्यान्दिधीर्षति भगवन्तं मातरिश्वानम्। कठोररवोऽपि सुललितपदन्यासयशः समाकाङ्क्षति यदयमुपतिष्ठते भवत्पादानां शुश्रूषणायादायेदृशीमात्मसम्पत्तिम्। नचास्त्यस्य सुवचनरचनपटीयस्त्वं नाम, विशेषतोऽयं यं विषयं गुरुपादानामाज्ञया शिरसा समुह्य सहृदयानां पाठकवर्गाणां सकरकमल स्पर्शमाशिप्र मर्थयते, तस्मिन् दुर्म्मतिदुरवगाहे हेत्वाभासोत्तालतरङ्ग रङ्गभैरवे शास्त्रसेतुमात्रावलम्बने प्रतिपाद्यार्थसिन्धौ कथं नु नाम मादृशामसहायानां, समन्ततस्तर्काभासनक्रचक्रदर्शनकम्पितहृदयानां ज्ञानचक्षूरहितानां वालानां ललितपदविन्यासः सम्भवति। अतो वालकण्ठोच्चारित इति कठोरकर्कशमपि मे रवमनुकम्पया कर्णविवरं प्रवेश्य प्रकटयन्तु स्वस्वधैर्य्यं महाभागाः पाठकवर्गाः ?

किन्तावन्मानवानां जीवनस्य लक्ष्यं किम्वा तत्साधनमित्येवाद्य मयाऽऽचिख्यासितम्। यथाप्रज्ञमाख्यास्यते च। दोषा मे मार्ज्जनीयाः। इत्यलं प्रपञ्चितेनाप्रस्तुतेन।

हितमहितं कर्त्तव्यमकर्त्तव्यञ्चेति विवेकेन मानसं मानुषा यथेच्छमिष्टेषु नियोक्तुमर्हाः, इत्येवापरेभ्यो जीवेभ्यस्ते उन्नतश्रेणीषु निर्द्धारित पदा महनीयचरितैस्तत्रभवद्भिः प्राचीनैर्वुधवृन्दैः। अन्तरेण विवेकमाहार--निद्रा-भय--मैथुनादिभिर्लोभ--क्रोध--हिंसा--द्वेषादिमूलैरपरैरपि कर्म्मकलापै र्मनुष्याणां प्राणिभिरितरैः पश्वादिभिर्वैषम्यमेव। अतएव केनचिद्विपश्चिता—

"धर्म्मेण हीनाः पशुभिः समानाः"

इति अविवेकिनो धर्म्मज्ञानविमुक्ता मानवोचितकार्य्यविरहिता

जनाः "पशव" इति गाढं तिरस्कृताः। तथाच पशवोहि स्व स्वप्रकृति वशगाः, यदा यथैव चाल्यन्ते एते प्रकृत्या, तदा तथैवाचरन्ति। अवि-षया ह्येते हिताहितविवेकस्य। मनुजाः पुनर्निजविवेकमहिम्ना स्वप्रकृतिं विजित्य स्वचेतांसि यथेच्छमिष्टेषु नियोक्तुमर्हन्ति। ये पुनर्नरमूर्त्तयः प्रकृत्यात्तबुद्धयः कामादिरिपुगलितशक्तयस्तएव पशु-पद विषयाः।

विवेकस्यास्यैवोत्कर्षसाधनमेव मानवजीवनस्य परतममुद्देश्यम्। येन चोपायेनेदमुद्देश्यं साधयितुं शक्यते स ज्ञानमिति विद्येति वा विश्रूयते। कालवशगा नरा अनयाऽनुशीलितया विद्यया चरमसम्पद-मासादयन्ति यत्प्राप्तौ अमरत्वमपि पादरजोपमं सुतुच्छकमिवाभाति।

## विद्या पुनरेषा द्विविधा पराचैवापरा च।

तत्र शिक्षाद्यङ्गसहितान् वेदान, उपवेदान्धनुर्व्वेदादीन् मीमांसान्याय धर्म्म शास्त्राणि पुराणादीनपराण्यपि च शास्त्राण्यधीतवतां या नाम विद्या हृदयकन्दरे आविर्भवति रविरिवोदितोऽन्धकारे निमग्नं या ज्ञानात्मनाऽऽविर्भूतोल्लासयति अज्ञानजठरविलीनं मानवगणम्। सुधादी-धितिरिवानन्दयत्यज्ञानकुहुप्रहेलिकातमोजालभीतान्, सा अपरेति गीयते। उदयात् खल्वेतस्या दया-दाक्षिण्य-शम-दम-तितिक्षा-कर्त्तव्य-परायणताऽऽत्मोत्सर्गप्रभृतिभिर्गुणगणैर्विकाशमापन्नैर्निःशेषं नश्यन्ते नराणां हिंसा-द्वेषादयो नीचप्रवृत्तयः। तदाहि उन्मीलति ज्ञानचक्षु-स्तिरोभवतिचाऽज्ञानान्ध्यम्। क्रमशः—

काव्य व्याकरण सांख्यतीर्थ—

श्रीसुरेन्द्रकुमार ब्रह्मचारिणः,

जगत्पुराश्रमाश्रयिणः।

# "पुष्पदन्तादि विवरणम् ।"

अथैकदा कैलासशिखरासीनं शशिशेखरं शङ्करी काञ्चिदभिनवाख्यायिकामाख्यातुमन्वनैषीत्, भवानीपतिरपि भवान्यनुरोधतस्तन्मनोहारिणीमेकामाख्यायिकामाख्यातिस्म । नासीत्तद्वृत्तान्त-वर्णन समये तत्रापरस्य प्रवेशाधिकारं, किन्तु पुष्पदन्तनामा कश्चिद् गणाधिपः कौतुहलाक्रान्तः सन् योगप्रभावेनालक्षितभावेन महादेववर्णितविवरणजातमश्रौषीत् । आकर्ण्यच तां मनोविनोदिनी-माख्यायिकामेकदा स्वीयसहधर्म्मिण्या जयायाः सकाशे सकलमामूलमाचचक्षे । जया प्राणनाथतस्तदजातपूर्व्ववृत्तान्तजातं निशम्य विस्मयमाना शैलसुता-सविधे तद्विवरणमनुरूपं वर्णितवती । गिरिनन्दिनी जयात स्तदाकर्ण्य कोपपराधीनमानसा स्वस्वामिनं त्रिनयनं प्राह, देव ! त्वद्वर्णितविवृतौ किमप्यपूर्व्वत्वं नैव वर्त्तते अद्य जया ममान्तिके तामाख्यायिकामाख्यातवती, सर्व्वेशः सर्व्वाणी-वाणीं निशम्य तत्क्षणमेव योगमहिम्ना सर्व्वं विदित्वाऽवदत्, देवि ! अहं प्रतिजाने अपरे केवल नैतद्विदन्ति, योगवलेनावगतं मया एतद्गुप्तवृत्तान्तकथनकाले अलक्षितभावेन पुष्पदन्तेन तत्रावस्थाय सर्व्वमाकर्ण्य तत्प्रणयिणीप्रान्ते प्रकटितम् ।

विदितभववाणी भवानी रोषमावहन्ती पुष्पदन्ताय तत्साहायक सम्पादकमाल्यवतेच "मर्त्त्यौभवेतम्" भिशापं समर्पितवती । पुष्पदन्तः अभिशापभयविह्वल स्तत्सहचरमाल्यवता भार्य्यया जययाच समं पार्व्वती-पदप्रान्ते निपतितः शापापनोदनायानुनिन्ये ।

क्रमशः—

श्रीहेरम्बनाथ शर्म्म-सिद्धान्तशिरोमणिः ।

# गवर्णमेण्ट गृहीत व्याकरणशास्त्रीयोपाधि परीक्षाणां

# नमस्कारवादप्रश्नाः ।

## १८८४ ।

१ । नमस्कारस्य किं लक्षणम् ? कस्तस्यानिष्कृष्टार्थः ? कति तस्य भेदाः ? के च ते ? केन प्रमाणेन कस्मै प्रयोजनाय वा नमस्कारः क्रियते ? देवदेवमित्यादिश्लोकोक्ते नमस्कारे लक्षणं सङ्गमय । (क) १२

२ । सर्व्वज्ञं सर्व्वदर्शिनमिति पदद्वयोपादानस्य पञ्जिकाकारोक्तं तात्पर्य्यं विशदीकृत्य वर्णय । १०

## १८८५ ।

१ । एकः सङ्कल्पवशादनपास्तेतर सकलव्यापारस्यापि पुरुषस्य तदेकाग्रता लक्षणः, अन्यश्च व्यावृत्त सकलेन्द्रियवृत्तिः केवलमनोव्यवलोकयमानः तत्त्वैकरूपः समतालक्षण इति । व्याख्यायतामयं ग्रन्थः । कस्यायं विभागः ? कौ च विभाजकोपाधी ? (ख) ८

---

(क) तदुद्देश्यस्वापकर्षबोधानुकूल व्यापारविशेषो नमस्कार इति नमस्कार लक्षणं । अत्र तत्पदं ध्येयपरं, उत्कृष्टत्वप्रकारकज्ञानोद्देश्यर्थः, आनन्तर्य्यञ्च क्त्वाप्रत्ययार्थः । अपकर्षो न्यूनता, स्वस्य अपकर्षः स्वापकर्षः तस्य बोधः सः अनुकूलो यस्येति विग्रहः तथाच ध्येयविषयकोत्कृष्टत्वप्रकारकबोधानन्तर स्ववृत्तिन्यूनताप्रकारकबोधजन्यव्यापारविशेषो नमस्कार इत्यर्थः । देवदेवमित्यादि वाचनिकनमस्कारस्यापि वाय्वभिघातरूप वाग्व्यापारजन्मनो देवदेव विषयकोत्कृष्टत्व-प्रकारकबोधानन्तर नमस्कर्त्तृनिष्ठ न्यूनताप्रकारकबोधजन्यतया तत्र लक्षण समन्वय इत्यादिध्येयं ।

(ख) मानसिक नमस्कारस्यायं विभागः । ध्येयैकाग्रतात्वं समतात्वञ्च विभाजकोपाधी । विभाजकत्वञ्चात्र मानसिक नमस्कारवृत्तित्वे सति मानसिक नमस्कारवृत्तिभेदप्रतियोगितावच्छेदकत्वे सति मानसिक नमस्कारवृत्तिभेदप्रतियोगितावच्छेदक विशिष्टान्यत्वं । तादृशावच्छेदकवैशिष्ट्यञ्च स्वसामानाधिकरण्य स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्व उभयसम्बन्धेन।

२। नचोपचारकात्स्न्यपदयोरेकतरपौनरुक्त्यं सूत्रसम्बन्धेन उपचारस्य तात्पर्य्यविशेषोपादानादिति। केनोपष्टम्भेनोत्थितोयं ग्रन्थः? अत्रोपचारशब्देन कीदृश उपचार उक्तः? कथं वा कात्स्न्यशब्देनसह पुनरुक्ति दोषशङ्का? कथं वा सा परिहृता? तात्पर्य्यविशेषः कीदृशः? कुत्रवातदुपादानम्? (ग) १०

३। प्रणम्येतच्चक्रप्रतये नैव नमस्कारस्य पूर्व्वकालकर्त्तव्यता-प्रतीतेरादावितरेषामानर्थक्य मित्येवंपर्य्यनुयोगे ग्रन्थकृता का समाधा कृता? अपरेषामपिव्याख्यातॄणां के समाधयः? सर्व्वमेतत्तेषांनामोल्लेखेन लेखनीयम्। १०

## १८९७।

१। किमनेन दृष्टान्तावष्टम्भेनाचष्टेभवान्, किंधर्म्म एव नमस्कार साध्यो न विद्यते उतस्वित् सन्नपि नोपकारसमर्थं इति पृष्टो।

केनोपष्टम्भेनोत्थितोऽयं ग्रन्थः? सन्दर्भोऽयंकलापचन्द्रानुसारेण व्याख्यायताम्। आशङ्कायाः समाधानपूर्व्वकं सिद्धान्तोऽपि वर्ण्यताम्। कोऽसौदृष्टान्तः? भवान् कः। (घ) ८

**त्रिलोचनोद्धृतसमाधिलोचनो न दुर्गसिंहीयनये मनोदधौ।**
**यतस्तुमुख्यार्थइहोपपद्यते ततः कथंस्यादुपचार चातुरी॥**

२। किमुपष्टम्भेनोत्थितोऽयं ग्रन्थः? अस्य व्याख्या क्रियताम्।

क्रमशः—

---

(ग) अत्रोपचारशब्दस्योपचरितार्थकत्वं तथाच उपचारस्य सर्व्वधर्म्मक्रतमूलसम्बन्धित्वं न लाक्षणिकस्य सार्व्वधर्म्मिकपदस्य कात्स्न्यपदस्यच एकतरवैयर्थ्यमित्यर्थः। अनयोरेकतर पदार्थेनैवाभिमतार्थ लाभे अन्यत्पदं व्यर्थमित्याशयः।

(घ) कादम्बर्य्यादौ व्यभिचारस्थलोऽयं दृष्टान्तः। ग्रन्थारम्भे अभीष्ट देवता नमस्कारस्याप्रस्तुतत्वाभिधायी अत्र भद्रकाव्य वाच्यः।

# आर्य्यप्रभा ।



## आवाहनम् ।

आयाहि मातः ! परिरभ्य दोर्भ्यामिमे रवै भैरवि ! सान्त्वयास्मान् ।
पुत्रान् विपन्नान् प्रति नो जनन्याः दृष्टिः सदा दृष्टिरतो न तिष्ठेत् ॥१

आयाहि तूर्णं कुरु पूर्णकामान् सम्पूर्णयास्माकमवस्थपञ्चं ।
संवत्सरं यत्नविवर्द्धितेयमाशा सुतानां परिपूरणीया ॥२

व्यस्ताः समस्ता वयमद्य मातर्दुःखाग्निदग्धा अपि काममुग्धाः ।
प्रत्याशया ते शुभदर्शनस्य विस्मृत्य सर्व्वं च समुत्सुकाः स्मः ॥३

माता क्वचित् पुत्रवियोगतप्ता लुप्तप्रयत्नेव सदाभिसुप्ता ।
आहारनिद्रासु गतस्पृहापि तद्दर्शनार्थं समुत्सहेत ॥४

सती क्वचित् कान्तांशुनाम्बुजप्रस्थानदुःस्था नितरामसंस्था ।
शोकाभिभूतापि तत्रास्थियाने मन्ये क्षणं निर्वृतिमालभेत ॥५

तिष्ठन्तु यज्ञावतया च येऽस्मिन् सर्व्वे क्षणं क्षोणितमान्यचिन्ताः ।
स्वान्ते तवैवान्तकभीतिशान्ते ! वाञ्छन्ति पादाब्जरजो निशान्ते ॥६

कर्म्माभिसम्बद्धशरीरभावाः कर्म्मैव शर्म्मप्रदमीक्षमाणाः।
कर्म्मार्थमुद्भ्रान्ततमा भ्रमाम कर्म्मच्युतिः कर्म्मकृतां कथं स्यात्॥७
मातस्तथाप्यागमने तवास्मिन् संवत्सरान्ते क्षणमालभन्ते।
विश्राममाराधितकर्म्मजातास्त्वत्सन्ततीनां किमहो महत्त्वं॥८
हे सारदे! शारदसङ्गमेऽस्मिन् केचित् कृतार्थास्तव पूजनार्थं।
व्यग्रा नितान्ताग्रहतः समग्रं पूजोपहारादिकमाहरन्ति॥९
केचिच्च निःस्वा नितरां निराशाः सन्तो लषन्तोऽप्यफलप्रयासाः।
संसक्तचित्तास्त्वरणेषु भक्त्या त्वत्पूजने पूज्यतमे! प्रवृत्ताः॥१०
अन्ये च धन्याः सकलाग्रगण्याः वाह्योपहारे नितरां वितृष्णाः।
आत्मानमुत्सृज्य वलिं तवान्ते त्वत्पूजनाशाः सुमनःप्रसूनैः॥११
इत्थं जना जानपदा वनस्थाः सभ्या असभ्या अपि देशभव्याः।
सर्व्वे यथाशक्ति तवार्च्चनार्थं सामर्थ्य मर्थादिकमुत्सृजन्ति॥१२
मन्ये नलिन्यादि-लता विलोलास्तवार्च्चनेनात्मकृतार्थताशाः।
वर्षातिपाते शरदीह हर्षात् पुष्पान्यजस्रं खलु पुष्पयन्ति॥१३
स्रोतस्वती शान्तरया च तोयं प्रावृड्भवं क्लेदमहो निरस्य।
नैर्म्मल्य मासादयतीव यत्नात् पादाब्ज माक्षालयितुं तवैव॥१४
यस्मिंश्च यस्मिन्नयने नयाम स्तत्रैव चित्रोत्सवभावमिश्रः।
उत्साह एषोऽसदृशः समन्ता दालक्ष्यते क्षेमविधानदक्षे!॥१५
किन्त्वस्मदीयं तव पूजनार्हं नास्तीह किञ्चिद्बत वस्तुजातं।
उत्सृज्य लज्जां वलिमद्य तस्माद् **आर्य्यप्रभान्ते** चरणेऽर्पयामः॥१६
माधुर्य्यवैधुर्य्यवशाच्च मातर्नोपेक्षणीयेयमहो भवत्या।
हीनेऽपि सुखार्पितवस्तुजाते प्रीतिर्जनन्या अधिका हि लोके॥१७
आशास्यते जननि! ते चरणप्रसादा न्निर्म्मालरूपत इमामधियन्ति सन्तः।
किं प्रार्थयामि च परं करुणाद्र्रचित्ते! कुब्जोपि मञ्जु चरणे नच वञ्चनीयः॥
१८

# दर्शन समालोचनम् ।

( पूर्व्वतोऽनुवृत्तम् । )

फलं गौणमुख्य भेदेन द्विविधं, तत्र सुखदुःखसंवेदनरूपस्य मुख्यफलस्य गुणे, गौणमुख्यसाधारणजन्यमात्रस्वरूपफलस्य द्रव्यादिषु, पीड़ालक्षणस्य दुःखस्य च गुणे अन्तर्भावः। आत्यन्तिकदुःख निवृत्ति १ रूपापवर्गः पुनरभाव एव । किं स्विदिति वस्तुविमर्शमात्रस्यानवधारणज्ञानरूपस्य संशयस्य गुणे, साध्यतया इच्छाविषयरूप प्रयोजनस्य, २ साध्यसाधनोभयवत्तानिश्चयविषयस्य दृष्टान्तस्य, ३ तत्तच्छास्त्रसिद्धार्थरूपस्य सिद्धान्तस्य ४ च यथायथं द्रव्यादिषु, शब्दस्वरूप प्रतिज्ञाद्यन्यतमरूपाणामवयवानां ५ व्याप्यारोपेण व्यापकारोपरूपस्य तर्कस्य ६ विमृश्यार्थावधारणरूपनिर्णयस्य, तत्त्व बुभुत्सोः कथारूपवादस्य, विजिगीषुकथारूप जल्पस्य, प्रतिपक्ष स्थापनाहीनविजिगीषुकथारूप वितण्डायाश्च गुणे, हेत्वाभासानाञ्च अनुमिति तत्कारणज्ञानान्यतरप्रतिवन्धकज्ञानविषयरूपाणां यथायथं द्रव्यादिषु, अभिप्रायान्तरेण प्रयुक्तशब्दस्यार्थान्तरं परिकल्प्य दूषणाभिधानरूपस्य छलस्य, असदुत्तररूपजातेश्च गुणे, पराजयहेतु स्वरूप निग्रहस्थानानामपि यथायथं द्रव्यादिष्वेवान्तर्भावः। "द्रव्यगुण

---

१ । दुःखनिवृत्तावात्यन्तिकत्वञ्च—स्वसमानाधिकरणदुःखासमानकालीनत्वं ।

२ । यमर्थ मधिकृत्य प्रवर्त्तते तत्प्रयोजनमिति न्यायसूत्रम् ।

३ । लौकिक परीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त इति न्यायसूत्रम् ।

४ । तन्त्राधिकरणाभ्युपगम संस्थितिः सिद्धान्त इति न्यायसूत्रम् ।

५ । प्रतिज्ञा हेतूदाहरणोपनय निगमनान्यवयवा इति न्यायसूत्रम् ।

६ । अविज्ञाततत्त्वेऽर्थे कारणोपपत्तित स्तत्त्वज्ञानार्थमूहस्तर्क इति न्यायसूत्रम् ।

कर्म्म सामान्य विशेष समवायाभावाः सप्तैव पदार्थाः, षोडशपदार्थाना मत्रैवान्तर्भावादिति” भाष्यसन्दर्भेण च प्रमेयादिषोडशपदार्थानां सप्तान्तर्भावः प्रतिपादितः । न्यायारण्यसञ्चारपञ्चाननेन महामहोपाध्याय विश्वनाथपञ्चाननमहाशयेनापि सिद्धान्तमुक्तावलीमेव एवार्थः समर्थितः ।

एतदपि सूक्ष्ममीक्षणीयं यत्प्रमाण प्रमेयेत्यादि न्यायसूत्रं पदार्थ विभाजकतया न व्याख्येयं अपितु प्रस्थानभेदप्रदर्शनपरतयैव, अन्यथा संशयादीनां पृथगवचनमनर्थकं स्यात्, यस्मात् संशयादयो यथायथं प्रमाणेषु प्रमेयेषु चान्तर्भवन्तो न व्यतिरिक्ता भवन्ति । एवञ्च न्यायमतेपि सप्तैव पदार्था इत्यनाकुलम् । एते च सप्त पदार्था मीमांसकानामपि सम्मताः ।

तत्र च द्रव्याणि क्षितिजलतेजःपवनाकाशकालदिगात्ममनोभेदान्नवविधानि । गुणाः कर्म्माणि च द्रव्येष्वेव वर्त्तन्ते । गुणास्तरूप रस-गन्ध-स्पर्श--संख्या--परिमिति--पृथकत्व--संयोग--विभाग--परत्वापरत्व बुद्धि-सुख-दुःखेच्छा--द्वेष-यत्न--गुरुत्व--द्रवत्व--स्नेह--संस्कार--धर्म्माधर्म्म-शब्दभेदाच्चतुर्विंशति संख्यकाः । उत्क्षेपणं अवक्षेपणं आकुञ्चनं प्रसारणं गमनञ्चेति पञ्चविधानि कर्म्माणि । मनुष्यत्व-ब्राह्मणत्वादि भेदात् सामान्यं ७ (जातिः) पुनर्नानाविधं । परमाणूनां परस्पर व्यावर्त्तकधर्म्मो हि विशेषः । समवायश्च ८ नित्य सम्बन्धः ।

क्रमशः—

७ । नित्यत्वसति अनेकसमवेतत्वं जातित्वमिति तल्लक्षणम् ।

८ । अयुतसिद्धानामाधार्य्याधारभूतानामिहप्रत्ययहेतुर्यः सम्बन्धः स समवाय इति प्रशस्तपाद भाष्यसम्मतं समवायलक्षणम् । परस्परपरिहारेण पृथगाश्रयाश्रयित्वं युतसिद्धं तन्नास्तियेषां ते अयुतासिद्धास्तेषामितरार्थः ।

## मानव कर्त्तव्यम् ।

विश्वसृज: सृष्टिवैचित्र्यचित्रितेऽस्मिन् संसारक्षेत्रे अनुदिनमेव विचित्रजन्तवो जायन्ते, किन्तु ते प्राचीरनिर्म्मातारः कूपखनितारश्च इव स्वस्वकर्म्मानुसारत ऊर्द्ध्वगति मधोगति ञ्च लभन्ते, सुतरा मुत्कर्षं कामयमानो मानवः सन्ततं साधु समाचरेत् प्रतिपालयेत् कायेन वाचा मनसा च गुरुजननिदेशं सन्निवसेच्च सदा सतां समागमे, अघटनघटनपटोयसि सत्संसर्गे निवसतो नीचजनस्यापि भवति नीचता नितरां तिरोहिता, लभते च प्रशान्तभावं निरन्तर मन्तरं, सरसीमिव सारसादयः समाश्रयन्ति तं सुखवास-वासनया दया-दाक्षिण्य विनय प्रभृतय उत्कर्षाधायकाः, स पुनः शिक्षाप्रभावेण अगणितमुद्राः समर्ज्जयन् [illegible]कायां सुप्रकारं प्राकारं, सुधाकरकरसुधाधवलितां रजतायमानां त्रितलसुरम्यहर्म्म्यमालां, नयनाभिराम मारामं, गुञ्जद्-भ्रमरपुञ्जपङ्कजं प्रसन्नसलिलं जलाशयञ्च निर्म्माय द्वारपालप्रभृतीन् नियोज्य जनान् यथायोग्यं नियोजय भूलोक एव सुरलोकसुखमुपभोक्तु मर्हति, गुणिगणगणनासु निपतति तूर्णं तस्य कठिनी !

असत्सङ्गसङ्गतानां पुनरत्युन्नतान्वयजातानामपि मानवानां स्वभावः क्रमशः कलङ्काङ्कितो मानसक्षेत्रे व्यसनविषवृक्षवीजं वपति, मिथ्याज्ञानादि सलिलसेकेन पुनरचिरेणैव तस्मादङ्कुरः प्रादुर्भूय समति-वर्द्धतेतरां, ततः क्रमेण पत्रपल्लवोपेतः शाखासमन्वितः पुष्पितश्च स सम्पद्यते, जायन्ते च ततो वहूनि फलानि । इदं पुनरत्र विस्मयावहं यदस्य पादपस्य प्रतिप्रसूनमेव प्रसूनवैजात्यम् । धर्म्माद्यङ्कुरादयः पुन स्तद्वृक्षसङ्गतसमीरणसञ्चरेण विद्युत्प्रणाशं प्रणश्यन्ति । सुतरां जनगणसादरसम्भाषणं दिगन्तविश्रान्तयशोराशिं सञ्जीवनौषधिमिव

मृतसञ्जीवनीं सितकरकरमिता मसर्व्वजनसुलभां कीर्त्तिञ्च लब्धुकामा निष्कामा इव सततं सत्संसर्गे निवसेयुः।

केचन केचन अज्ञानतमसावृतमानसा मानवाः कैशोरदशायामेव विविधसाध्यसाधिकां मोहतमिस्रनाशिनीं विज्ञानालोकदायिनीं विद्यामवज्ञाय अविगणय्य च गुरुजननिदेशं स्वाभिलषितकर्म्मकलापमनुतिष्ठन्ति, सङ्कल्पयन्ति च—"सन्ति पुरतो बहुदिनानि अधीष्यामहे।" उत्तरोत्तरमपि ते युवककल्पाः परिकल्पयन्ति केवलमेवमेव। ततश्च सबलवाहनायुधे यौवनराजे हृदयराजेर साम्राज्यं वितत्वति तेषां तत् सङ्कल्पोऽपि विलीयतेतरां। मूर्खतया अर्थसमागमाक्षमाश्च ते विपत्स्यन्ते परिणतवयसि परभाग्योपजीविनो दुःखभागिनः। ज्ञानाङ्कुशाभावेन च अधर्म्मकर्म्मकाननान्मदमत्तमानसमातङ्गं निवारयितुं नैव शक्नुवन्तीत्यतः प्रतिदिनं पापमपि प्रवर्द्धते। प्रबलपापपराक्रमेण परत्रापि असहनीयक्लेशसन्ततिं सन्ततमनुभवेयुः।

येन च पुनः शैशवत एव विद्याशिक्षार्थं मनः समाधीयते परिच्छियन्ते च विद्याप्रापणपरिपन्थिनो विस्मयविभ्रयाः, स एवाविद्याव्यवच्छेदिकां सन्देहसन्दोह विनाशिनीं विद्यामुपार्ज्जयितुं प्रभवति। तथाचोक्तं प्राचीनैरार्य्यवर्य्यैः "अहेरिव गणाद्भीतो मिष्टान्नाच्च विषादिव। राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति।" लब्धविद्योऽनवद्यो मानवो विविध विज्ञानादिविज्ञानतो जगदिदं करतलगतकुवलय फलमिव विलोकयति, मर्त्त्यलोकास्थितोऽपि ज्ञाननयनेन सूक्ष्मं समीक्षते त्रिलोकतत्त्वं। यथेच्छमिष्टेषु मनो नियोक्तुमर्हति। किं पुनर्व्वचनीय मस्मिन्? यस्य दर्शनादि शास्त्रदर्शनं नास्ति स एव अन्ध इति निर्बाध मवधार्य्यते। क्रमशः—

श्रीहेरम्बनाथ शर्म्म सिद्धान्तशिरोमणिः।

# गवर्णमेण्ट गृहीत व्याकरणशास्त्रीयोपाधि परीक्षाणां नमस्कारवादप्रश्नाः ।

## १८९८ ।

१ । कातन्त्रस्य वृत्तिग्रन्थस्य कीदृशे सम्बन्धप्रयोजने कयारीत्योपपादिते ? ८

२ । कोऽसौ नमस्कारः कतिविधश्च सः ? काश्च ता विधाः ? कोवा तत्रावान्तर भेदः ? किं वा नमस्कार फलम् ? १०

३ । कलापचन्द्रमते कुत्र निर्द्धारणषष्ठ्याः समासो भवति कुत्र वा न भवति ? किंवा तत्र मतान्तरमुपदर्शितम् ? १२

## १८९९ ।

१ । सर्व्वज्ञं सर्व्वदर्शिनमिति पदद्वययोरुपादानस्य किं तात्पर्य्यम् ? ८

२ । देवदेवं प्रणम्यादावित्यस्य वाक्यमते किं प्रयोजनम् ? (क) १०

३ । यदि तावत् पूर्व्वःपक्षः सोप्यनुचितः धर्म्माभावपक्षस्य शास्त्रान्तर सिद्धैः प्रमाणैः प्रत्याख्यातत्वादिति । सन्दर्भोऽयं कलापचन्द्रानुसारेण विशदीकृतय व्याख्यायतां । कः पूर्व्वः पक्षः ? को वा उत्तरः पक्षः ? किं शास्त्रान्तर प्रसिद्धं प्रमाणम् ? १०

४ । तादर्थ्यसम्बन्धभवैव षष्ठी नात्र द्वितीयात्वनधीतशास्त्रात् । यस्मादशक्या प्रतिपत्तिरेषा नम्रे षनम्रतद्विषयन्विनर्थः ॥ उपक्रमोप-

---

(क) नमस्कारप्रसूतधर्म्मद्वारेण निर्व्विघ्नग्रन्थपरिसमाप्तिरेव नमस्कारस्य प्रयोजनमिति त्रिलोचनाद्यभिमतं । केचित्तु विघ्नध्वंस एव नमस्कारस्य प्रयोजनं समाप्तिस्तु बुद्धिप्रतिभादि कारण कलापादित्याहुः ।

न्यायपूर्व्वकं विशदीकृत्य व्याख्यायतामयं सन्दर्भः । अस्मिन् विषये ग्रन्थकृन्मतं मुपदर्शनीयम् ॥ (ख) १२

## १९०० ।

१ । अत्र मंज्ञानहेतुनेनाच्च कीदृशोविचारः कलापचन्द्रेण कृतः ? के तत्र पक्षाः प्रदर्शिताः ? कस्तत्र पूर्व्वपक्षः ? को वा सिद्धान्तः ? कस्तत्र हेतुः ? १३

२ । "त्रिलोचनोह्यत्र समाधिलोचन" इति कारिका केनोपष्टम्भेनावतारिता ? को वा कस्य अर्थः ? का तत्रोपपत्तिः ? कलापचन्द्रस्य च मतं वर्णनीयम् । १२

३ । नचैतच्छक्यते वचनशतेनापि प्रतिपादयितुमनधीतशास्त्रस्येति पञ्चो कलापचन्द्रमतानुसारेण व्याख्यायतां । कथं वा वचन शतेन न शक्यते प्रतिपादयितुं, उपदेशात्किल सर्व्वमेव प्रतिपत्तुं शक्यते (ग) अनधीत शास्त्रस्य कथं षष्ठी ?

---

(ख) यदुक्तं तादर्थ्य सम्बन्धविवक्षयाषष्ठीति तत्रोमापतिसंवादमाह तादर्थ्यस्यादि अव— न शक्यत इत्यादौ, अनधीतशास्त्रशब्दात्तादर्थ्यसम्बन्धभवा षष्ठी एव न द्वितीया कर्म्मविहितेति शेषः, अत्र हेतुमाह धर्म्मादिति, अनधीतशास्त्रस्य पुरुषस्य एषा प्रतिपत्तिः—सम्बन्धप्रयोजन विषयकं ज्ञानं, यस्मादशक्या तद्विषयं ( सा प्रतिपत्तिः विषयोयस्येति व्युत्पत्त्या ) भावि तत्प्रतिपत्तिविषयकं अनर्थः प्रेषणं न अशक्यं अपितु शक्यमेवेतार्थः । अस्मिन् विषये ग्रन्थकारस्य मतञ्च अनधीत शास्त्रस्य पुरुषस्य स्थाने एतत् सम्बन्ध प्रयोजनादिकं प्रतिपादयितुं शक्यते नचेतार्थं इति ।

(ग) उपदेशादधिकारिणा सर्व्वस्यैव प्रतिपत्तुं शक्यत्वेपि सर्व्वथाऽनधीतशास्त्रेण हालिकादिना उपदेशशतेनापि शास्त्रीयविषयः प्रतिपत्तुं न शक्यत एव, नहि समधीत शास्त्रान्तरेणापि पुरुषेण शतोपदेशादपि न्यायशास्त्रस्य मर्म्म परिज्ञातुं शक्यते । अतएव कलापचन्द्रकृता सन्दिग्ध पुरुषार्थं सम्बन्ध प्रयोजनाद्यभिधानमिति युक्तं समाहितम् ।

## वेश्मोऽपि महतां वरम्।

आसीत् कस्यचिदवनीपतेः कश्चन भूतिगृह्णो मलेगृह्णिः। समजनि तस्य धनाभावेन दन्दह्यमानमानसस्य राजकोषापहारप्रवणं मनः। कदाचित् सुधाकरे गगनमध्यं विहरति, राजतहर्म्यायमाणासु राजभवन-सौधावलीषु, निशीथस्वप्नमनुभवत्सु पौरजनेषु, निःसपत्नतया निश्चिन्तं निद्रितेषुच द्वारपालेषु, सः अवनीपालस्य शयनकक्षोपान्ते एकान्ते द्वितीयं राजद्वारमिव सुरङ्गां निखनन्, राज्ञा संलप्यमानां मानवतीं नाम राजमानसराजहंसीमश्रौषीत्।

मानवती, "ननु अनुदिनं दीनं ब्रवीमि, किं न पात्रसात् कर्त्तव्या ज्येष्ठा युवती कन्या मणिप्रभा ?"

राजा, "अलब्धेषु योग्यपात्रेषु किं बहुयत्नसंवर्द्धिता माधवीलता पिचुमन्दाश्लेषिणी कर्त्तव्या ?"

अथ मानवत्या भूयोभूयः सनिर्बन्धं पात्रान्वेषणाय प्रार्थितो भूपालः सकोपमाह स्म "ननु प्रतिदिनमनयैव वार्त्तया उद्वेजयते चिन्ताज्वराक्रामणकातरतरं मम मानसं भवत्या, तत्प्रतिजाने अस्तंगते भगवति यामिनीनाथे, क्षीणायां क्षपायां, दृश्यमानासु दिनमणिप्रभासु मणिप्रभेय मेतन्नगरोपकण्ठस्थतपोवनमधिवसते यस्मै कस्मैचित् योगिने प्रदेया। राजार्द्धञ्च तद्दक्षिणात्वेन कल्पनीय" इति। ततो योगिने प्रदेयेति समाकर्ण्य कोपपरीतस्य पत्युर्वचः, भीतभीता सा कथमपि निरुत्तरा निशातिपाताय मनो दधती निद्रादेव्याः सुकोमलमाश्रयमैहिष्ट। सोऽपि मलेगृह्णिरागृह्णेण तां वचनपरम्परां श्रुतिकुहरहारिणीं श्रवणवर्त्तिनीं विधाय, कृत्स्नापहारपरं मानसमिदं

मचिन्तयत् । 'यदि मां धनापहारिणं जानीते नीतिकुशलोऽवनीपाल-स्तदा नूनमेव मे प्राणान् कुसीदत्वेन कल्पयिष्यत्यमुष्य धनस्य । तद् यद्यहमुदासीनवदासीनः प्रभाते राज्ञो दृष्टिवर्त्म गतो भवेयं, तदा अन्तरेणान्तरायं लभेय ससपर्य्यां सराज्यलक्ष्मीं राजहंसनन्दिनीम् ।' मत्वा चैतत् स्वगृहं गतः परिकल्पितोदासीनवेशः तदैव तपोवनाभिमुखं प्रतस्थे, गत्वा च राजदर्शनोपयोगिनि योगिजनोपवेशनोचिते स्थाने किञ्चिन्महीरुहतलमाश्रितस्तस्थौ । राजापि स्वप्रतिज्ञावचनमनुस्मरन् कथमप्युन्निद्र एव क्षपां क्षपयति स्म ।

अथ विपर्य्यस्तेषु सप्तर्षिमण्डलेषु पश्चिमाशामाश्रितेषु, दिवाकर-करभीत्येवानुकम्पिष्ठं क्षीणासु गगनकुसुमभ्रमजनिकासु तारका राजिषु, कुङ्कुमशोभापहारिणीषु सुनासीरशासितदिक्कामिनीषु, उदय-शिखरिशेखरमलङ्कुर्व्वति भगवति कमलिनीमलापहारके हरित्प्रका-शके दिनमणौ, नृपमणिः प्रगेतनं विधेयं विधाय जामातुरन्वेषणाय वलिमाचसम्वलः मर्म्मरचितसुरम्यहर्म्यमालोपकण्ठेन क्रीडाकानन-माननेन साचीकृतेनावलोकयन् वामतः सन्निविश्याग्रे सरस्तत्तपोवनमवा-लुलोके । तत्र समन्ततः प्रसारयन् दर्शनं ददर्श तं काषायाम्बर-विरचितवेशं जटाजुटशोभितशिरसं नासाग्रन्यस्तलोचनं परमात्मध्यान परमिव पद्मासनेनासीनमुदासीनम् ।

तमालोक्य लोकनाथः कोरकितकरो घटिकात्रयं सविनयं नयनं यमिनश्चरणनूपुरं विदधत्तस्थौ । अथ सोऽपि कियत्कालानन्तरं ललाटकोटरादाकृष्येव स्वनयनं नयदर्शिनं दर्शनेनानुगृह्णन्निव शनैः-शनैरवोचत्, 'कस्त्वं, किमर्थमागतोऽसि, अप्यतिथिर्भवान्, निकायः कतमस्मिन् देशेऽभवतः, अत्रोपविश्यता'मिति । भूपालोऽप्यनुगृहीत-मन्यः सविनयं यथायथं सपर्य्यां विधायात्मानं परिचाय्य राजपुरी

गमनाय तमन्वरोत्सीत्। सोऽप्यनिच्छन्निव कथमपि स्वीकुर्व्वन् विनयनम्रकायेन कम्रगतिना नृपालेनादर्शितपथो नृपान्तःपुर मियाय। तत्र महीपालेन सदारेण बहुविधं पूजितः स सविनयं मुकुलितपाणिना प्रार्थितः "भगवन्! अस्त्येतस्य दासजनस्य बहुदुःखसंवर्द्धिता मणि-प्रभानाम्नी कन्यका। तां सराज्यार्द्धलक्ष्मीं भवत्पादसेविकेयं भवच्चरणयोरुपजिहीर्षति, तत् प्रतिग्रहणानुग्राह्योऽयं चिरचरणसेवको दासजनः।"

अथ महेन्द्रक्षणोदयानु, भगवत्क्षणावस्थाया, राजवाक्यस्य प्राक्तन-पुण्यकर्म्मोद्बोधकत्वाद्वा तस्यैवं ज्ञानं प्रादुरभवत्, यत् 'येषां वेशमात्रेणा-प्येयं विभ्रा राजसिंहा चरणतललुण्ठितशिरसो मम कटाक्षदर्शनमपि श्लाघ्यं मन्यन्ते, राजलक्ष्मीः सस्पृहं मच्चरणतलसेवानुमतिमपेक्षते, नृप-नन्दिनी मत्सङ्गमसुखमनुबुभूषति, न जाने अन्तःकरणस्यापि वेश सद्भावे कति नाम सम्राजः पदरजःस्पर्शाकाङ्क्षिणो भवन्ति। तदलमने-नान्तरेणान्तरं भावं केवलं वहिर्वेशेन, मानसमपि वेशानुरूपं विधास्ये' इति निरूप्य निर्द्धार्य च राजभवनाज्जीवनातिवाहाय तदेव तपोवनं योगिजनोपयोगि वाराश्च चिरवासत्वेन परिकल्प्य जातविरागो जातिस्मर-रागः अनिशं महेशं मनसाऽभिध्यायन् कालं निनाय। जज्ञे च कालेनासौ ज्ञानविज्ञानदर्शीति।

काव्य व्याकरण सांख्यतीर्थं—

श्रीसुरेन्द्रकुमार ब्रह्मचारिणः,

जगत्पुराश्रमाश्रयिणः।

# "पुष्पदन्तादि विवरणम् ।"

( पूर्व्वानुवृत्तम् । )

तस्य तथाभावेन शैलसुता सती सदया सती तमाह— "सुप्रतीक-नामकः कश्चिद् यक्षो यक्षपतिकुवेरशापेन पिशाचत्वमापद्यमानः काण-भूतिर्नाम्ना विन्ध्याटवीमधिवसति, तद्दर्शनेन स्वीयजातिस्मरत्वमालभमान-स्त्वमेतद्वृत्तान्तं तदन्ते वर्णयन् शापेन विमोक्ष्यसे, 'माल्यवताच काण-भूतिभाषिते समाकर्णिते काणभूतिरपि मुक्तिमेष्यति, अथ कथावसाने माल्यवतोऽपि मुक्ति रवश्यम्भाविनी", सर्व्वसङ्गला तेषां सर्व्वमङ्गल निदानमेवमभिभाष्य व्यरंसीत् ।

अथ प्रमथद्वयं तत्क्षणमेव क्षणभासिनी सौदामिनीवान्तर्दधौ । एवमतीतानि वहुवासराणि । अनन्तरमेकदा शङ्करी शङ्करं पप्रच्छ प्राणेश्वर ! अभिशापग्रस्तौ गणाधिपौ कुत्राविरभवताम्,'गिरिजाजानि र्भवानी मभाणीत्—प्रिये ! "अस्ति पृथ्वीतले कौशाम्बीनाम काचित् प्रसिद्धनगरी तत्राभिशप्तः पुष्पदन्तः वररुचिनामाऽजायत, तत्साहायक-सम्पादको माल्यवांश्च सुप्रतिष्ठितनगरे गुणाढ्यनामा धनाढ्योऽवतिष्ठते ।"

पार्व्वतीशापेन पुष्पदन्तो मर्त्त्येऽवतीर्य्य वररुचिरिति नाम्ना विख्यातः, तस्यापरं नाम कात्यायनइति । सकलकलाकलापः सुखवासवासनया अधीयानं तमचिरेणैवाश्रितवान् । ततो वररुचिना नानादिग्देशं परिभ्रम्य स्वीयविद्यागौरवेण मगधाधिपतिनन्दराजस्य सचिवपद मध्यासितं । तत्र सुचिरं तिष्ठता राजकीयकार्य्यपर्य्यालोच-नया नितान्तं परिश्रान्तेन तेन एकदा विन्ध्याचलाभिमुख-मद्रावि, देवी विन्ध्यवासिनी तस्य तथाभावेन प्रीता सती स्वप्ने विन्ध्याटवीस्थ काणभूतिना सह दर्शनाय तमादिदेश । देवीनिर्देशेन वररुचिना

कान्तारपथेन परिभ्रमता बहुदूरतो व्यलोकि काणभूतिः पिशाचशत समावृतः चटत्चटदिति साटोपमटवीमटाट्यते। ततः सन्निहिते वररुचौ काणभूति स्तं विदित्वा तत्पदारविन्दं वन्दमानः अस्तावीत्। वररुचिः सविस्मयं तमाह—काणभूते ! किमेतत्? सहसा कथन्ते ईदृशदशाविपर्य्ययः ? पवित्रचरित्रमिव त्वामुपलक्षये। काणभूतिर्न्य-वेदयत्—मतिमन् ! भवता विलोकितेयं मे दशा न स्वतएव एतादृशी, अपितूज्जयिनीश्मशाने निवसता मया पञ्चाननाननादेकदा यदाकर्णितं तन्महिम्नैव ममेदृशी दशा समजनि, श्मशान मधिवसन्नश्रौषम्-विविध-कथोपकथनानन्तरं गौरी गौरीशं पृष्टवती—"प्रभो ! अभिशप्तः पुष्पदन्तः पुनः कदास्मत्साक्षात्कारं समेष्यति।" शशिशेखर-स्तदा माम-भिलक्ष्य देवीं व्याहरत्,—देवि ! त्वया विलोक्यमानोऽसौ पिशाचः पूर्व्वं कुवेरस्यानुचर आसीत्, स्थूलशिरनाम्ना केनचिन्निशाचरेण सम-मस्यानुचरस्य मित्रता समपद्यत इत्यपराधतो यक्षराजः "त्वं विन्ध्यटवी-मटित्वा पिशाचत्वमापद्यमानः अवतिष्ठस्व" इत्यभिशापमस्मै समर्पित-वान्। अभिशापसमर्पणसमये अस्य सहोदरः भूधरसहोदरकलेवरो दीर्घजङ्घस्तत्रोपातिष्ठत, असौ भ्रातुः शापापनोदनाय यक्षराजमन्व-नैषीत्। यक्षपतिस्तत्सुमधुरभाषितेन प्रियमाणः समभाषत—"यदाते भ्राता शापविमुक्तपुष्पदन्तप्रान्ते विस्मृतविवरणं निशम्य माल्यवतःसमीपे प्रकाशयिष्यति तदा ताभ्यां सह शापाद्विमुक्तिमेष्यति।"

अहं पञ्चाननान्नादित्थं शापापनोदनसंवादमवगम्य तत्क्षणमेव तत्स्थानमपास्य सानन्दं विन्ध्यवनमुपागमम्, अहो अद्य बहुदैवबलेन समासादितं भवदीयदर्शनम्। काणभूतिवचनश्रवणेन सुप्तोत्थितस्येव वररुचेः प्राक्तनजन्मस्मरणमभवत्, ततोऽसौ अहमेव स पुष्पदन्त इत्यभि-भाष्य तदन्तिके सप्ताख्यायिका अकथयत्। काणभूतिना सहर्षमवादि

देव ! भवान् रुद्रावतारः, भवदन्यः क एवं विस्तृतविवरणजातमवगन्तुं समर्थः, भवत्प्रसादेनाद्य सद्य एवाहं शापविमुक्तोऽभूवम् भुवि । अहो अलौकिकशक्तिः संसर्गस्य. मलयशैलस्थित-निकृष्टपादपोऽपि चन्दनतरुनिचयसंसर्गेण चन्दनपादपायते, पादस्पर्शायोग्यः कीटोऽपि सुमनःसङ्गेन सुजनानामुत्तमाङ्गमधिरोहति, प्रभाततपनकिरणनिचयचुम्बितं नभोमौलिमप्रतिबिम्बितञ्च पद्मप्रान्तस्थं शुभ्रं सलिलमप्यपूर्व्वसुषमामाधत्ते । किरीटभ्रष्टं सदिष्ठं गरिष्ठं हीरकमपि सिकतासंसर्गेण भवति नितरां हीनाकारमपि पददलितं । अयोऽपि अयस्कान्तमणिसंस्पर्शेन तत्क्षणादेव सुवर्णभावमालम्बतेतरां । यातु आजन्मतो भवतो यत्र यत्र यादृशी यादृशी घटना संघटिता तदाकर्णनाय समुत्सुकं हि मनोऽन्तरं नितान्तम् ।

अथ वररुचिः काणभूतिप्रान्ते आमूलं सकलमात्मवृत्तान्तं कीर्त्तयितुं प्रावर्त्तत्—आसीत् कौशाम्बीनामनगरे अग्निशिखनामकः कश्चिद्ब्राह्मणः, भार्य्या च तस्य वसुदत्तानाम्नी, प्राक्तनजन्मनि वसुदत्ता मुनितनया आसीत्, सा शापप्रभावेण भूदेववंशे समजनि अस्मिन् जन्मनि, तावेव मे पितरौ, सदैवाऽपुत्रा च जननी । मम दुर्दैवात् तातपादस्तातः स्वल्पवयसं मामपहाय प्रमोदनिलयं त्रिदशालयमधिरुरोह, पतिवियोगविधुरा जननी मे वात्सल्याकुला विह्वला दैन्यग्रस्ता सती बहुक्लेशतो मामवर्द्धयत् । अथैकदा द्वौ द्विजावतिथी अस्मद्गृहमुपागतौ, तदनन्तरमस्माभिरेको मुरजध्वनिराकर्णितः । मुरजध्वनिमिममाकर्णयन्ती जननी मां सान्नूयावदत्—वत्स ! एतद्वाद्यध्वनिं निशम्य मन्येऽहम् त्वज्जनकसुहृत् भवानन्दो नाम नटो नृत्यति, मयाभिहितं—मातः ! तन्नृत्यमवलोक्य भवतीमनुरूपं दर्शयिष्यामि । अतिथी मे वचनं श्रुत्वा विस्मितौ, माता मे तौ उक्तवती, भवन्तौ विस्मय-

मानौ मामवतां ममाय वालको यत् सकृदपि शृणोति कालान्तरेणापि न तद्विस्मरति ।

अतिथी एतद्विज्ञाय प्रसन्नाननौ संवृत्तौ, मां परीक्षितुं ताभ्यां श्लोक एकः अपाठि च । अहं तत्क्षणमेव तच्छ्लोकमनुकृतमपठम्, ततोऽतिथिद्वयमानन्दमानः मया सह नृत्यावलोकनाय अगमत्, नृत्यावसाने पुनरहं ताभ्यां सह स्वगृहं प्रत्यागतः तत्कृतमनुरूपं जननी मदर्पयम्, इत्यतोऽतिथी मां श्रुतिधरममन्येताम् ।

क्रमशः—

श्रीहेरम्बनाथ शर्म्म-सिद्धान्तशिरोमणिः ।

---

## मानवजीवनस्य लक्ष्यं तत्साधनोपायश्च ।

( पूर्व्वानुवृत्तम् । )

---

यया पुनस्तदशब्दमस्पर्शमरूपमव्ययं नित्यमरसमनाद्यनन्तं महतः परं वर्त्तमानं परमं ब्रह्म ज्ञाननयनसरणिगतं जायते सा परेति कीर्त्त्यते । तथा च श्रुतिरपि—

"द्वे विद्ये वेदितव्ये इति ह स्म ब्रह्मविदो वदन्ति पराचैवापरा च, तत्रापरा, ऋग्वेदो यजुर्व्वेदः सामवेदोऽथर्व्ववेदः, शिक्षाकल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुरश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्व्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ।" इति मुण्डकोपनिषत् १।१।५—६ ।

आविर्भूताय परायां विद्यायां मानवानां कीदृशं नाम ज्ञानं सम्पद्यते इत्यवद्धि न वामधीन-

प्रकाशम् । एतावदेव वक्तुं शक्यते यदनया जायमानं ज्ञानं श्रुतानुमानजप्रज्ञाभ्यामन्यदिति

"तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
विपर्य्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥"

जायमाने एतल्लक्षणके ज्ञाने न किञ्चिदवशिष्यते ज्ञेयमासाद-नीयम्वा रजस्तमोभ्यामतान्तमसस्पृष्टञ्चैतज्ज्ञानं न जातु शोक मोहादिजनकं सम्पद्यते । तत्त्वदर्शिभिरिदं सच्चिदानन्दस्वरूप मित्याख्यायते । येनोपायेनाधस्तादृशिते विद्ये लब्धुं शक्येयातान्तदि-दानीं विचार्य्यते ।

मानवानां मनोमृगा यावदेव विक्षेपशार्दूलैः स्वाङ्कपर्य्यङ्कशायिनो विधीयन्ते तावदेव ते ज्ञानानुशीलनस्वातन्त्र्याधिकाराद्वियुज्यन्ते । संसारेऽस्मिन् य एव यस्मिन् कस्मिंश्चिद्विषये कृतित्वपदवीमारूढ़ास्ते सर्व्वएव मनः-संयमशक्त्याऽलौकिकाध्यवसायैर्लक्षितविषयसिद्धये तदनु-ध्यानचिन्तनेषु मनो नियुज्य तस्मिन्नुत्कर्षमवापुरिति सर्व्वैरध्यक्ष्य मीक्ष्यते । बहुषु लक्ष्येषु विततं मनोऽसंयम्य न जातु कश्चिदुन्नति लब्धुं कामपि विद्याम् । अतएव ऋषिभिर्विज्ञानविद्भिः**"मनः-संयम एव विद्यानुशीलनस्य प्रकृष्ट उपाय"** इति सडिण्डिम-घ मुद्घोषितम् । संक्षेपेण चेतसः संयम एव सम्पदां मार्गः असंयम विपदामिति शास्त्रकृत्सम्मतिः—तथाहि वाशिष्टे—

चित्तादिमानि सुख दुःख शतानि नून-
मभ्यागतान्यगवरादिव काननानि ।
तस्मिन् विवेकवशतस्तनुताम्प्रयाते
मन्ये मुने ? निपुणमेवगलन्ति तानि ॥ इति

क्रमशः—

काव्य-व्याकरण-सांख्यतीर्थ—श्रीसुरेन्द्रकुमार ब्रह्मचारिणः
जगत्पुर आश्रमाश्रयिणः ।

# आर्य्यप्रभा ।

प्रथमवर्षे { सुदुर्लभाः सर्व्वे मनोरमा गिरः } तृतीय संख्या ।

---

## विजयाभाषणम् ।

मातुरागमनेन सर्व्वएव कर्म्मक्षेत्रात् कथञ्चिल्लब्धविरामा अविरामं कतिदिनान्यनन्यलभ्यं सुखमन्वभूवन् । नानाविध दुःखनिदाघनिपीड़ितेऽपि भारतवर्षे हर्षनिर्झरिणी प्रवलवेगेन कतिदिनानि प्रवाहिता । सर्व्वेषामेव चेतःसु क्षणमेतादृश आनन्दसन्दोहः प्रादुरभूद् यद्दुःखलेशोपि हताश इवाविश्राममाश्रमलाभार्थमभ्रमत् । किन्तु हन्त पश्यतामेवास्माकं तानि दिनानि स्वप्नानुभूतानीवान्तर्हितानि । माता च सती पतिभयविह्वलेव सती पुत्रस्नेहपरिप्लुतचित्तापि सहसैवान्तर्हिता । तदन्तर्ध्यानेन सहैवास्माकमपि स सुखमयभावः सुचिराल्लब्धः क्षणप्रभेवाचिरात् क्षीणप्रभः समभवत् । चेतांसि च सर्व्वेषां विषमयविषयचिन्तया पुनराक्रान्तानि । सर्व्वे एव च क्रमशः शिथिलीभूतमातृगमनक्लेशा श्चिराभ्यासवशात् स्वस्वकार्य्यक्षेत्रे पुनः समवतीर्णाः । वयमपि साग्रहमनुग्राहकान् ग्राहकान् यथायथं सम्भाष्याशीर्व्वादं प्रणम्य च आर्य्यप्रभायाः परिपुष्ट्यै सचेष्टा भवामः, आशास्यते च ग्राहकैरपि संस्कृतानुरागिभिरनुग्रहेणास्या दीर्घजीवनाय यतितव्यमिति शम् ॥

# गुरुशिष्य संवादः ।

शिष्यः । गुरुदेव ! सुमुखनामा भवतः शिष्याधमोऽहमभिवादये ।

गुरुः । एहि वत्स सुमुख ! अपि कुशलम् ?

सुमुखः । श्रीचरणाशीर्व्वादतः कुशलमेव, विशेषत इदानीं श्रीचरणारविन्दद्वन्द्वसन्दर्शनेन ।

गुरुः । वत्स ! कथमियन्ति दिनान्यतिपातितानि ? वृथातिपातितसमयस्य कुत उन्नतिः सम्भवेत् ? अधुनैव ते स्वावासनिवासस्य लालसा वलवतीदृशी यदवाधेनैव वर्षमेक मतिक्रान्तवान् । स्वावासनिवासस्य मुर्खतान्यतमहेतुत्व मवादितरां विद्वद्भिरिति किं न जानासि ? तथाहि—

लिखन विधिविरागः पुस्तिकाऽशोधनञ्च
वहु सुहृदनुवृत्तिः प्रक्रिया चातिगुर्व्वी ।
श्वशुरगृहनिवासो विह्वलत्वं विषादः
स्थितिरपि निजगेहे मूर्खता-हेतवोऽष्टौ ॥

अतएव वुद्धिमतस्तवैतावदनुष्ठानमतितरां कष्ट मुत्पादयति ।

सुमुखः । गुरुदेव ! समधिगतोऽस्मि वहूनेतादृशानुपदेशान् भवद्भ्यः, स्मरामिचावाध मनधीतवतः पाण्डित्यं दुरधिगम्यमिति । किन्तु हन्त जरसा समभिभूतस्य मदेकपुत्रस्य च तातस्य क्लेशवहुलमतिप्रवलतरं शिरःशूलं निर्म्मूलयदिव मे तातशब्दं वर्षमेकं सर्व्वदैवातिवेदनामददात् । अहो तातस्यासहनीयं तत्क्लेशं स्मरतोपि मे वहिर्निःसरतीव जीवितम् । नासीच्च तदानीं तस्य कस्मिन्नपि कार्य्ये सक्तिः न लिप्सा विषये नच स्पृहा भोजनेऽपि । समतिक्लिष्टस्य केवलं मामेवाश्लिष्य वलवताऽनिर्व्वचनीयापत्यस्नेहेन क्षणं क्लेशाद्विशिष्टः पुनः पुनरवदत् "वत्स सुमुख ! त्वयि स्थानान्तरं गते न क्षणमपि स्थास्यति मे जीवितमिति !"

मयापि च तदाकर्णयता पितुः क्लेशभिया कथमपि नेत्राश्रु व्यपवार्य्य प्रतिक्षणं तन्मरणं शङ्कमानेन शून्यमिव सर्व्वं जगदालोकयता गमनस्य नामापि नोदलेखि। तातः पुनः पाठविघ्नेनानिष्टं जानन्नपि मयि स्थानान्तरिते जीवनधारणमतीवाशक्यं मन्यमान एवागत्या पुत्रं मामिकमात्र मन्यत्र गन्तुं प्रतिषिद्धवान्। सुतरां वलवता पितृस्नेहेन तदाज्ञाभङ्गभयेन च वाध्यमानाय मह्यं तदवस्थं तमपहाय स्थानान्तरावस्थानं कथमपि न रोचते स्म।

गुरुः। वत्स सुमुख! तर्हि साधु समनुष्ठितं, कष्टसाध्यमपि किं नानुष्ठेयं पितुराज्ञया, नानुष्ठितं वा पूर्व्वन्तनैः सुपुत्रैः। तथाहि भगवदवतारो भगवान् रामचन्द्रः सृष्टिस्थितिप्रलय समर्थोऽपि जनकस्य निर्देशेनातिक्लेशसाध्यं चतुर्द्दशवर्षमरण्यवासं स्वीचकार। उपरतानन्तरं पुनः पितुः, प्रत्यावर्त्तयितु मुपगते च भरते तदाज्ञावधीरणाभीरुक एव तदानीमपि नायोध्यामध्यासितवान्। पुरुरपि महानुभवः शुक्राचार्य्याभिशापाद्दुर्जयजराभिभूतस्य पितु र्ययातेरादेशक्रमेण तदीयं गुरुतरं जराभावं स्वशरीरमुपसंक्राम्य तस्मै पुनः सुखभोगैकनिदानं स्वयौवन मयच्छत्। परन्तु वत्स! नास्ति जगति कार्य्यं तादृशं यद् गुरुजनशुश्रूषणसादृश्य मर्हति लब्धुम्। अतएवोक्तम्—

सर्व्वकार्य्यं परित्यज्य स्वक्लेशमविचारयन्।
मातापित्रोर्गुरूणाञ्च शुश्रूषण मथाचरेत्॥

विशेषतस्तु पश्य यस्माच्च पितुः समासादितमिदं शरीरं पुन स्तदनुगृहेणैवावाल्यात् परिपालितमभिवर्द्धितमिदानीं कार्य्यकुशल मजनिष्ट, यो यथाप्रार्थितमभिपूरयन्नपि न तुतोष पुपोष च पुनः स्वग्रासांशमप्याशयन्। यश्च जन्मानन्तरमेव निरन्तरमन्तरिदमचिन्तयत् कथमयं मे तनयो निरामयः समुपार्ज्जयति विद्यां समधीत-

विद्यः पुनरध्यापयति शिष्यान्, कथमस्मिन्निपतिष्यति सर्व्वेषां सभक्ति-स्नेहकरुणा दृष्टिः, कथमस्माल्लभन्ते सर्व्वएवोपकृतिमिति । यः पुनरेवं विचिन्त्यैव नो निश्चिन्तः परं कष्टार्ज्जितमप्यर्थराशिमक्लेशं तदर्थं विसृज्य तदनुरूपं यत्नञ्च सर्व्वदैव विदधाति । किमधिकेन रात्रि-न्दिवमपत्यसुखस्वाच्छन्द्य मभिसन्धायैव यो यावज्जीवन मतिपातयति तस्यैवं सर्व्वमङ्गलनिदानस्य पितुः कष्ट-निवारणचेष्टा शरीरव्ययेनाप्यनुष्ठेया सुपुत्राणां किमुत कार्य्यातिपातेन ।

ये पुनरधुनातनाः किञ्चिदधीत्यैव शिक्षितम्मन्या अशिक्षितत्वेन पितर मवमन्यन्ते न शृण्वन्ति च तस्य वचांसि, असभ्यतां परिगणय्य नाच-रन्ति पुरुषपरम्पराचरितानाचारान्, विजातीयानां पुनरनुकुर्व्वन्ति च । स्व पुत्रकलत्राण्येव पोष्याणि मन्यन्ते, स्त्रियं पुनर्द्देवतायाः प्रतिकृतिं, तदभिलषितापूरणे स्मरन्तीव महान्तमपराधं, तदाज्ञा प्रतिपालने बद्धाञ्जलयो ददति च पुनर्जलाञ्जलिं लज्जायां । तथा विधा असहृता एव गुरुजनशुश्रूषणं भृत्यकर्म्मेति परिहरन्ति । परन्तु ते स्वार्थान्धाः वृद्धस्य पितुर्दुर्गन्धमयाङ्गसङ्गत-गन्धवह संसर्गेण स्वपुत्रकलत्रादीनां स्वस्य च स्वास्थ्यहानिं शङ्कमाना वहिर्व्वाट्या मेव प्रायस्तदवस्थानस्थानं व्यवस्थापयन्ति, कामयन्ते च सर्व्वदैव सागृहं गलगृहस्य तस्य मरणं । अहो मूढ़ता तेषाम् ! ! ! नोजाने तादृश पाषण्डानां कीदृशे नरककुण्डे परत्र स्थानं व्यवस्थापितं विधात्रा । आश्चर्य्यं पुनरेतदेवास्मिन्नपि तेषां कृतघ्नानां निर्व्विघ्नं पर्य्यवस्यति कथं संसारयात्रेति । तत्र च पुनः करुणानिदानस्य परम पुण्यवतः पितु-राशीर्व्वाद एव कारण मित्यस्माकं विश्वासः । अहो स्नेहकारुण्य-प्रावीण्यस्यानिर्व्वचनीयता पितृणाम्, यदेवं कष्टेन कालं यापयन्तो-पि ते तथाविध दग्धकल्पानामपि सुतानाममङ्गलं न क्षणमात्रं सङ्कल्प-

यन्ति, परमेश्वरस्थाने सपुत्रकलत्राणां तेषां मङ्गलमेवाविरलं याचन्ते। समुत्पादयति पुनरेतदतीव विस्मयं यद्वार्द्धक्ये तत्तद्दृष्टान्तेन तत्पुत्रा अपि तेष्वेवमाचरिष्यन्तीत्याशङ्कापि तथाविध मकार्य्य मनुतिष्ठतां तेषां मनसि कथं न जागर्त्तीति? अथवा कुत एतादृग्दूरदर्शित्वं विदग्ध-जनोचितं मुग्धानां तादृग्ग्रामसतां। वस्तुतो जीवत्येव पितरि येनेद मतिनिष्ठुरोचित मनुष्ठीयते चरमे च तस्मात् पापण्डाज्जलपिण्ड प्रत्याशा सुदूरपराहतैवेति तादृशपुत्रापेक्षया वरमनपत्यतैवाभाग्यितरां साधीयसी विद्वद्भिः।

यात्वल मिदानीं तेषामतिजघन्यचेतसामालापेन। वत्स सुमुख! कथं पुनस्तस्मादतिदुःसहक्लेशाद्विमुक्तास्ते तातः?

सुमुखः। दैवानुग्रहादिव।

गुरुः। कथमिव।

सुमुखः। शृणोतु गुरुदेव! तातो मे दिवानिशं तथैव रोगयन्त्रणा सन्त्रस्तो जीविताशां सन्त्यज्य क्षणमीश्वरचिन्तया, क्षणं तन्नामसङ्कीर्त्तनेन क्षणमितिहासाद्युपदेश श्रवणादिभिः, क्षणं बन्धुबान्धवसन्दर्शनेन, क्षणं वा नानाविध सदुपदेशतो मदाश्वासनेन कथं कथमपि समयमत्यवाहयत्।

तत एकस्मिन्निशीथसमये सहसैव "समुद्धर मां विश्वेश्वर करुणामय!" इत्युच्चैरुच्चरन् तद्गतचित्तस्तातश्चित्रार्पित इव निष्पन्दत्व मपद्यत। अहञ्च तदालोकयन् शून्यमिव जगन्मन्यमानः असारता मनुसरन्निव संसारस्य केनचिदनिर्व्वचनीयेन तमसा संछन्नः किमिद मकस्मादापतितं किङ्करोमि क्व गच्छामि कमिदानीं यामि शरणमित्यादिकमसकृदनुचिन्त्य किङ्कर्त्तव्यविमूढः शिथिलीभूत सर्व्वाङ्गो निस्तब्धः संवृत्तः।

क्रमशः—

# मानवजीवनस्य लक्ष्यं तत्साधनोपायश्च ।

(पूर्व्वतोऽनुवृत्तम् ।)

यः कश्चित् यस्मिंश्चिद्विषये लिप्सति प्रावीण्यं, तस्य विषयान्तरा-व्यग्रसमग्र मनःसंयोगेन कृतानुशीलनस्यैवालोक्यते अभिलषितसिद्धिः । मनःसंयमस्य प्रतिपन्था रजस्तमोजनिताः शोकमोहैककारणीभूता श्चित्तमुद्वेजयन्तो हिंसाद्वेषादयः प्रथमतो निरोद्धव्याश्चित्तसंयमार्थिभिः । अन्येषाञ्च प्रतिपन्थानां हिंसा निदानत्वात् तेषु हिंसैव प्रथमं निरस-नीया, अहिंसाचाभ्यसनीया ।

**अहिंसा ।** एषाहि सर्व्वथा सर्व्वदा सर्व्वभूतानामनभिद्रोह उच्यते । अहिंसासिद्धिमूला एव, सर्व्वाः सिद्धयः । तथा च "स खल्वयं ब्राह्मणो यथा यथा व्रतानि बहूनि समादित्सति तथा तथा प्रमादकृतेभ्यो हिंसानिदानेभ्यो निवर्त्तमानस्तामेवावदातरूपामहिंसां करोति ।" इयञ्च कायवाङ्मनो जन्यत्वात्त्रिविधा । स्वस्य केनचि-दपि कर्म्मणा यथा परे न कथञ्चिदपि व्यथन्ते, तथावधेयमहिंसाप्रति-ष्ठार्थिना । नच केवलं प्राणिवधत्यागमात्रेणाहिंसाऽभ्यसितुं शक्यते किन्तु सर्व्वथा कायेन वाचा मनसा च योगिना न परेषां मनोव्यथा जनयितव्या ।

एतत्प्रतिष्ठया योगिनां चेतोमलः निरतिशयं दूरीभवति, किम्पुनः पतञ्जलिना प्रतिष्ठिताहिंसस्यान्तिकस्थानां हिंस्राणामपि, हिंसामलः मानसपटादवगच्छतीत्याख्यायते । तथा च "अहिंसा प्रतिष्ठायां तत्-सन्निधौ वैरत्यागः इति ।"

समासतो हिंसा हि परमनोव्यथाजननमेव । तच्च बहुविधैः कारणैः सम्भवतीति अहिंसा प्रतिष्ठामभिलषता तान्यपि निराकरणी-

यानि, इति सत्यादीन्यपि, दर्शयामः। असत्यादिजनितापि हिंसा भवतीति तत्तद्व्याख्यानावसरे एव स्फुटीभविष्यति।

**सत्यम्।** सत्यं हि यथार्थे वाङ्मनसी, यथाश्रुतं यथादृष्टं यथावानुमितं तथा वाङ्मनश्च। अन्यस्मिन् जने निजबोधानुरूपबोध संक्रान्तये वागुक्ता, सा यदि न प्रतारणार्थं प्रयुक्ता, भ्रान्तिमूला, निष्प्रयोजनोच्चारिता वा भवेत्तदा सत्यम्। 'अश्वत्थामा हत इति गज' इत्यादिषु हि निजबोधानुरूपो बोधो न संक्रान्त इति नास्य सत्यत्वम्। एवं यथायथमुदाहरणानि मन्तव्यानि। किञ्चैतादृशी वागपि यदि सर्व्वभूतोपकारायैव प्रयुज्यते तदैव सत्यत्वम्। यदि पुनरेवमप्यभिधीयमाना भूतोपघातपरा स्यात्तदा न सत्यम्। तत्र हि असत्यजनितं पापमेवाश्रयेत्। अतः परीक्ष्य सर्व्वभूतहितं सत्यं ब्रूयात्। तथाच—

"सत्यं भूतहितं प्रोक्तं न यथार्थाभिभाषणम्।"

एतत् प्रतिष्ठायां, अकृतायामपि साधिकायां क्रियायां वाङ्मात्रेण तत्फलमवाप्नोति, अन्यांश्च प्रापयति योगी। अमोघाऽस्य वाग्भवति।

**अस्तेयम्।** स्तेयमशास्त्रपूर्व्वकं कस्यचिदर्थस्य परतः—स्वीकरणम्। तदभावोऽस्तेयम्, स्पृहाराहित्यमिति यावत्। एतत्-प्रतिष्ठायां न कदाचिद्धनाभावेन पीड्यते योगी। किञ्च उदेत्यस्य सर्व्वरत्नलाभसन्तोषो यमिनः। नच व्याकुलीकरोति प्रतिष्ठितास्तेयस्य मानसचकोरं दारिद्र्यप्रतिपत्तेऽपि रौप्यकचन्द्रचन्द्रिका।

**ब्रह्मचर्य्यम्।** ब्रह्मचर्य्यं हि सर्व्वथा स्त्रीसंसर्गराहित्यम्। तत्रहि कामभावेन स्त्रीणां दर्शनस्पर्शनादिकमपि न विधेयम्। तथाहि—

"स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च।

एतन्मैथुन मष्टाङ्गं प्रवदन्ति मनीषिणः ।
विपरीतं ब्रह्मचर्य्यमेतदेवाष्टलक्षणम् ॥"

एतस्य सम्यक् प्रतिष्ठायां निरतिशयं वीर्य्यं लभते संयमी । येनातिविस्मयावहेन वीर्य्येण आ आकाशात् आ च परमाणोः, यस्मिन् कस्मिंश्चित् स्थूले सूक्ष्मेवाऽव्याहताभिप्रायं मनो निवेशयितुमर्हति । तथाहि यस्मिन्नेव नियुज्यते यतिना मन स्तदेवानन्तरेणायासमदम्यैरुत्साहैरध्यवसायैश्च साधयितुं शक्यते । तथाचाह "ब्रह्मचर्य्यप्रतिष्ठायां वीर्य्यलाभ" इति फणिनायकः ।

**अपरिग्रहः ।** विषयाणामर्ज्जन रक्षण क्षय भोग हिंसादोषदर्शनाद्देहरक्षणोपयुक्तादतिरिक्तस्य भोगसाधनस्यास्वीकरणं, भोगविलासेच्छायाः परित्यागश्च अपरिग्रह उच्यते । एतत्प्रतिष्ठायां भोगस्पृहा समग्रतो दूरीभवति । किम्पुनरयं देहोऽपि भोगसाधनमिति मन्वानस्तत्राप्यनास्थावान् भवति । किञ्च कोऽहमासं, कथमहमासं किं स्विदिदं, कथं स्विदिदं, के वयं भविष्यामः, कथं वा इत्यादि पूर्व्वान्त परान्त मध्ये स्वात्मजिज्ञासा प्रवर्त्तते ।

एतेषां पञ्च-महाव्रतानां द्वादश वर्षानि ससत्कारं निरन्तरञ्चानुष्ठानात् प्रतिष्ठा जायते, तदनुसारिण्यश्च शक्तयः आविर्भवन्ति ।

क्रमशः—

काव्यव्याकरण सांख्यतीर्थं—
श्रीसुरेन्द्रकुमार ब्रह्मचारिणः,
जगत्पुराश्रमाश्रयिणः ।

# दर्शन समालोचनम्।

( पूर्व्वतोऽनुवृत्तम्।)

द्रव्येषु च दिक्कालात्माकाशमनांसि पञ्च नित्यानि ( अर्थादेतानि नोत्पद्यन्ते नापि प्रलयेपि विनश्यन्ति )। पृथिवी जलवायुतेजांसि च चत्वारि नित्यानित्यभेदेन द्विविधानि, परमाणुरूपाणि च तानि नित्यानि तदन्यानि घटपटादीनि सावयवानि सर्व्वाण्येवानित्यानि।

यत्र वहिरिन्द्रिय प्रत्यक्षयोग्या विशेषगुणा वर्त्तन्ते तानि भूतानि, तथाच पृथिवीजलवाय्वाकाशतेजांसि पञ्च भूत शब्दवाच्यानि,(१) पृथिव्यां घ्राणग्राह्य गन्धरूप विशेषगुणस्य, जले रसनाग्राह्य रस रूपविशेष गुणस्य, वायौ त्वगिन्द्रियग्राह्य स्पर्शरूप विशेषगुणस्य, आकाशे श्रवण-ग्राह्य शब्दरूप विशेषगुणस्य, तेजसि नयनग्राह्य रूपस्वरूप विशेष गुणस्य च वर्त्तमानत्वात्। आत्मनि ज्ञानादिरूपविशेष गुणानां सत्त्वे पि न ते वहिरिन्द्रियग्राह्याः, मनसैव तेषां ग्राह्यत्वादतो नात्मनो भूतत्वमितावधेयं।

चतुर्व्विधाः परमाणव एव न्यायवैशेषिकनये सावयवद्रव्याणा मुपादान कारणानि। तथाहि—सर्व्वेषामेव घटपटकटकमुकुटा-दीनां सावयवत्वात् कार्य्यत्वं, कार्य्येण पुनरकारणेन नैव भवितव्यं, चत्वारिच भूतानि भूम्युदकतेजःपवनाख्यानि सावयवान्युपालभ्यन्ते, तस्माच्चतुर्व्विधाः परमाणवएव तत्कारणत्वेन कल्प्यन्ते। के च ते परमाणव इति चेत् सावयवानां द्रव्याणा मवयवशोविभज्यमानाना मवश्यमेव क्वचि दवयवावयविविभाग-विश्रामो वाच्यः अन्यथा परिमाण कारणीभूताया अवयव संख्याया उभयत्र साम्येन मेरुसर्षपयोरपि

(१) "पृथिव्यापस्तेजोवायुराकाशमितिभूतानि" इति न्यायसूत्रम्।

परिमाण तारतम्याभावप्रसङ्गात् एवञ्च—यत्र तद्विश्राम स्त एव परमाणवः। नच त्रसरेणावेव तद्विश्राम इतिवाच्यं यद्‌यच्चाक्षुषं द्रव्यं तत्तत् तथैव सावयवत्वेन त्रसरेणूनामपि चाक्षुषद्रव्यत्वात् सावयवत्वेन "त्रसरेण्ववयवाःसावयवा महदारम्भकत्वा"दित्यनुमानेन त्रसरेण्ववयवानामप्यवयवसिद्धेः। नचेदमनुमानमप्रयोजकं अपकृष्टमहत्त्वं प्रति अनेकद्रव्यत्वस्य प्रयोजकत्वात्। नचैवं क्रमेण तदवयवधारापि सिध्येदिति वाच्यं अनवस्थाभयेन मेरुसर्षपयोः साम्यप्रसङ्गरूपदर्शित दोषस्यजागरुकत्वेन च तदसिद्धेः। एवञ्चद्व्यणुकावयवानामेव निरवयवानां नित्यानां परमाणूनां सिद्धिर्निरावाधैव। सर्गकाले चादृष्टापेक्ष मणुषु कर्म्मोत्पद्यते, तत्कर्म्म च 'स्वाश्रयमणुं' सजातीयाणवन्तरेण संयुनक्ति, ततोद्व्यणुकं, द्व्यणुकत्रयसंयोगेन च त्रसरेणुरेवमुत्तरोत्तर संयोगेन स्थूलभूतान्युत्पद्यन्ते। एवमेव च सेन्द्रियं शरीरमिति। नच परमाणुद्वयेनेव परमाणुत्रयेण, द्व्यणुकत्रयेणेव द्व्यणुकद्वयेनच कथं न द्रव्यान्तर मुत्पद्यत इति वाच्यं प्रमाणाभावेन तादृशद्रव्यासिद्धौ परमाणुत्रये द्व्यणुकद्वये च द्रव्यारम्भक संयोगाकल्पनात्।

केचित्तु त्रिभिःपरमाणुभिरेव त्रसरेणुरिति मन्यन्ते, 'तन्नशोभनं'—

जालन्ध्रगते भानौ यत्सूक्ष्मं दृश्यतेरजः।
भाग स्तस्य तु षष्ठोयः परमाणुः स उच्यते॥

इत्यनेन गवाक्षगतसप्ताश्वरश्मि-परिदृश्यमानरजसः षड्भागैकभागस्यैव परमाणुत्वोत्कीर्त्तनात्—

जालसूर्य्यमरीचिस्थं यत्सूक्ष्मं दृश्यतेरजः।
प्रथमन्तत् प्रमाणानां त्रसरेणुरिति स्मृतिः॥

इत्यनेन तस्यैवरजस स्त्रसरेणुत्वोत्कीर्त्तनाच्च द्व्यणुकत्रयेणैव त्रसरेणुत्वस्य युक्तत्वात्। त्रसरेणुपदञ्च तत्ररूढ़मेव।

क्रमशः—

# विजया ।

निजं निशान्तं परिहाय मातः ! पुत्रान् विषण्णान् परितोषयन्ती ।
संवत्सरान्ते वसुधां समेत्य स्थित्वाऽचिरं हन्त कुतो गताऽसि ॥१
त्वदागमोत्फुल्लजनैः प्रसन्नैः चित्रैः पलाशैरपि मालवस्त्रैः ।
विराजिता स्तोरणराजयश्च समद्युतन् नेत्रमुदं दधानाः ॥२
वितानजालं विततं सुनीलं प्रद्योतरत्नोत्कर-मण्डिताङ्गम् ।
शशाङ्कतारानिकरैः प्रदीप्तं शरत्प्रसन्नं नभ एव दीप्तम् ॥३
विचित्रचित्रै र्विविधैश्च द्रव्यैः सर्व्वाणि गेहानि सुशोभितानि ।
रथ्याश्च सर्व्वा ध्वजराजि युक्ता अनन्दयन् भक्तजनस्य चित्तम् ॥४
तत्साम्प्रतं त्वद्विरहेण सर्व्वं हतप्रभं सत् स्मरणीयशोभम् ।
विभाकरेणेव वियद्वियुक्तं न पश्यतां कौतुकमातनोति ॥५
दीनं दिनं तत् परिणाहिरूपं विभर्त्ति नित्यं तनुतां विशीर्णम् ।
अशुभ्रपक्षे तमसां निशान्तं निशीथनाथो हि यथा प्रपन्नः ॥६
दिगङ्गनाश्चितोऽपि प्रकृतिप्रसन्नाः खिन्नानना स्त्वद्विरहेण मन्ये ।
रम्यां स्वकीया मपहाय कान्तिं व्रजन्ति दैन्यं नितरां क्रमेण ॥७
नीहारनीरै र्नयनाम्बुकल्पैः परिप्लुताङ्गी सततं विषण्णा ।
उन्मील्य नेत्रे जननि ! प्रपश्य वसुन्धरेयं बत रोदितीव ॥८
तरङ्गिणी रङ्गविषङ्गभङ्गं सन्त्यज्य सन्तापप्रशान्तमूर्त्तिः ।
अनुक्षणं क्षीणतमेव याति वासोपरुद्धा कलनादहीना ॥९
कुन्देन्दुशुभ्राः कलहंसमाला उद्वीक्षमाणाः सततं सरःसु ।
मुहुर्नदन्त्यः परितश्चरन्त्यो वियोगदुःखं बत वेदयन्ति ॥१०
दुरितदव विदग्धान् नोऽशरण्यान् शरण्ये !
सुखय विपुलशान्तिक्षीरसेकैरभीक्ष्णम् ।

क इह शरणमस्ति प्राणिनां प्राणरूपे !
जननि ! जगति घोरे घूर्णमाने त्वदन्यः ॥

श्रीहेरम्बनाथ शर्म्म-सिद्धान्तशिरोमणिः ।

---

# पुष्पदन्तादि विवरणम् ।

( पूर्व्वतोऽनुवृत्तम् )

अथ तयोरेको मत्प्रसूतेः पादपद्मं प्रणम्य न्यवेदयत्— मातः ! वेतसनगरवास्तव्ययोः सहोदरयो र्देवस्वामिकरम्भकयो रावां तनयौ । अयञ्च मम पितृव्यपुत्त्र इन्द्रदत्तोनाम अहमस्मि नाम्ना सत्येन्द्रः । किन्तु हन्त कतिपयदिवसयावदावयो र्जनकौ नियतिनियोगतः स्वर्गधाम प्रपन्नौ, जनन्यावपि सुदुःसहस्वामिवियोगशोकेन जीर्णकलेवरे सत्यौ देह मजहीताम् । सतप्यस्मत्सम्पत्प्राचुर्य्ये जनकजननी विरहेण जीवलोकं निरालोक मालकयन्तौ विद्यालाभाय विभवं विहाय योग्यमध्यापक मनुसन्धातुं दक्षिणापथ मभिलक्ष्य प्रस्थितौ ।

अथ कदाचित् स्वप्ने विदितम्— "अस्ति पाटलीपुत्त्रनगरे कलाकलापाञ्जनोन्मेषितज्ञाननयनो गीष्पतिप्रतिमो वर्षोनाम कश्चिद् भूदेववर्य्यः, अधीत्य तस्मादावां सर्व्वविदौ भवेव" इति । निशावसाने च स्वप्नवाक्यं प्रतीत्य प्रत्यूषसि पाटलीपुत्त्रनगराभिमुखं गतौ, तत्र गतयो रनुसन्दधतो रावयो र्जनपरम्परया वार्त्तेयं श्रुतिपथमाश्रिता— "विद्यतेऽस्मिन् नाम्नावर्षः कश्चिन्मूर्खो ब्राह्मणः ।" किन्त्वेवं विजानतो र्विहतोत्साहयो रावयो र्मानसं सन्देहसन्दोहदोदुल्यमानमभवत् सुतरां न प्रतिनिवृत्तौ द्विजसदनं समुपेत्यालोकयाव "वर्षः समाधि मास्थाय तपस्तप्यते, तस्य सद्धर्म्मिणी मूर्त्तिमती सतीव, तत्पार्श्वे

शोभतेतराम्।" आवाभ्यां द्विजदम्पती प्रणम्य मनोरथे निवेदिते ब्राह्मणो न किमप्यवदत्, दयापरतन्त्रहृदया तद्गेहिनी तु स्वयमेव स्नेहभरेण सुतनिर्विशेषं कथयितु मारभत—"आसीदस्मिन् नगरे नाम्ना शङ्करस्वामी कश्चिद्भूदेववर्य्यः, ममस्वामी उपवर्षश्च तस्य तनयौ, भर्त्ता मे मूर्खो दुर्गतः, उपवर्षस्तु नैवंविधः तस्य विभवो विद्याच विद्येते, उपवर्षः सहोदरदुःखेन दुःखितः प्रतिक्षणमेव तत्संरक्षण-दत्तेक्षण आसीत्। तथापि तामसं मम मानसं नैव शान्तिं प्रपन्नम्। तत एकदा मया पतिरुपालब्धः खिद्यमानो निःसृवदश्रुनयनो निलयान्निर्गम्य समन्तादटाट्यमानोऽटव्यां समाधिसमासादितविविधसिद्धियुक्तस्य कस्यचिद् योगिजनस्याश्रम माश्रित्य तत्पदारविन्दवन्दने मनः समादधौ। एवमतीतेषु कतिपयवर्षेषु तस्य मनःसंयमेन तं प्रति प्रसीदता तेन धीमता तस्मै सर्व्वा विद्या प्रदायिषत आदिदेश च "त्वं स्वकीयगेहं गत्वा कञ्चन श्रुतिधरं ब्राह्मणतनयं सर्व्वा विद्या अध्यापय।" ततो गुरुनिर्देशेन मम स्वामिना प्रसन्नमानसेन निजनिलय मुपेत्य मह्यं सकल मामूलं समलापि। ततो विशेषतोऽन्विष्यापि श्रुतिधरं ब्राह्मणकुमारमनासाद्य विषयव्यावृत्तचित्तो ध्यानप्राणोऽवतिष्ठते। यदि कञ्चन श्रुतिधरं विप्रपुत्त्र मचानेतुं शक्नुयातं तर्हि भवेदस्माकं युवयोरपि मनोरथसिद्धिः।

आवां द्विजभार्य्याया इत्थं वचनं निशम्य तस्यै सुवर्णशतं प्रदाय तन्निलया न्निष्क्रान्तौ नानादिग्देशं परिभ्रम्यापि न कुत्रचित् श्रुतिधरं ब्राह्मणतनयं व्यलोकयाव, अद्य तु तावद् बहुभाग्यतो भवत्याः श्रुतिधरतनयेन सममस्मत्साक्षात्कारः समजनि, जननि! सुतरां तव पदपङ्कजयो र्निवेदन मिदम्—प्रहिनु स्वसुनुं विद्याशिक्षार्थं सार्द्ध मावाभ्याम्।

मत्प्रसूति रचकथत्—अयं खलु कुसुमसुकुमारः कुमारः श्रुति-धर एव नास्त्यस्मिन् संशयलेशोऽपि । यदा मयायं सुतः समसावि तदानीमहं दैववाणीतो विदितवती—"पुत्रोऽयं मदीयः श्रुतिधरः गुणनिवह निकषायमाणस्य सुधीरजनकुञ्जरस्य वर्षस्य समीपे पठिष्यतीति ।" इत्थं विजानतया मया कुत्र स पण्डितप्रवरो वर्षो निवसतीति निरन्तर मनुचिन्त्यते, साम्प्रतन्तु त्वत्त एतद्वृत्तान्तं निशम्य नितरां शान्ति मनुभवामि अन्तर्हिता च उत्कण्ठा, अनुमन्येऽहं युवां निर्बाधतो ममानेन तनयेन समं तत्र गच्छतम् ।

मम मातुरनुमोदन मासाद्य सद्यो हर्षोत्फुल्ललोचनौ तावतिथी मयासहोपाध्यायस्य वर्षस्य भवनमुपगतौ । विलोक्यास्मानुपाध्यायो परम परितोषमविन्दत, निवेदितवती च वर्षभार्य्यास्मदागमन वार्त्ताम् । परेद्युः प्रत्यूषसि वर्षःसहर्षः अस्मान् समाहूय वेदमध्यापयत् परिपूतभूमौ । मया सकृदाकर्ण्यैव समस्तमभ्यस्तं । सतीर्थ इन्द्रदत्तो वारद्वयेन सत्येन्द्रस्तु वारत्रयेणाशिक्षत । दिवसे च तस्मिन् अस्मत्-समुच्चरच्चारुवेदध्वनिं निशम्य जनपदवासिनोभूदेवनिवहा अतीव विस्मिताः । ततश्च ते कौतूहलोपशान्तये उपाध्याय निलयं समेतस्य वृत्तं विदित्वा परं निर्वृताः । ततः प्रभृति गुरुदेववर्षस्य मूर्खतापवादश्चिरायान्तर्हितः । तदानीं तस्य सदनं प्रद्योतरत्नराजि राजितं । मगधाधिपति र्नन्दराजोऽपि सानन्दं तस्याधिकसाहायक मकरोत् प्रत्यहम् ।

वररुचि वचन श्रवण विमुग्ध मानसेन काणभूतिना अपरोपाख्यानाख्यानाय मुहुरनुरुद्धो वररुचि र्भूयोऽपि कथयितुं प्रावर्त्तत्—

क्रमशः—

श्रीहेरम्बनाथशर्म्मसिद्धान्तशिरोमणिः ।

# गवर्णमेण्ट गृहीत काव्य मध्य परीक्षायाः

## प्रथम पत्रम् । (१९०८)

१ । गृहीतो यः पूर्व्वं परिणयविधौ कङ्कणधर
श्चिरं स्वच्छास्पर्शैरमृतशिशिरै र्यः परिचितः ।
सएवायं तस्यास्तुहिनकरकौपम्यसुभगो
मयालब्धः पाणिर्ललितलवलीकन्दलनिभः ॥ (क)

यातस्य ते पितुरपीन्द्रजितो विजेतु र्वत्सस्य वत्स कति नाम दिनान्यमूनि ।
तस्याप्यपत्यमनुगच्छति वीरवृत्तं दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठां ॥ (ख)

(क) अनयोः श्लोकयोरेकतरएव वक्तृवोद्धव्यनिर्द्देश पुरःसरं व्याख्यायताम्— ७

(ख) द्वितीयश्लोकः केनच्छन्दसा निवद्धः ? किंवा तल्लक्षणम् ? २

(ग) 'क' चिह्नितस्य चतुर्थपादे 'ख' चिह्नितस्य वा तृतीयपादे यदि कश्चिद्दोषः प्रतीयते स स्वरूपतो नामतश्च निर्द्दिश्यताम् । ४

२ । अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना न जातहार्द्देन न विद्विषादरः ॥ (ग)
यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्त्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ (घ)

(क) अनयोः पद्ययोरेकतरस्यैवार्थः सरलेन संस्कृतेन लिख्यताम् । ६

(ख) रेखाङ्कितानां पदानां व्यासवाक्यानि प्रदर्शनीयानि । "जन्तुना" इत्यत्र कथं तृतीया ? वश्य लिप्साशब्दयोः कीदृशी व्युत्पत्तिः ? ५

---

१ । (ग) 'क' चिह्नितस्य चतुर्थपादे ललितलवलीकन्दलनिभ इत्यत्र विधेयांशस्य ललितत्वस्य समासगुणीभूतत्वादस्फटत्वेनाविमृष्टविधेयांशाख्यः पदगत दोषः । 'ख' चिह्नितस्य तृतीय पादे तस्याप्यपत्यमित्यत्र सन्धिभावात् कष्टतानामक वाक्यगत दोषश्चविद्यते ।

(ग) 'ग' चिह्नितस्य तृतीयपादे 'घ' चिह्नितस्य वा प्रथमपादे यो दोषो वर्त्तते स प्रदर्शनीयः। २

३। अनवरतधनुर्ज्यास्फालनक्रूरपूर्व्वं रविकिरणसहिष्णु स्वेदलेशैरभिन्नं।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं गिरिचर इव नागः प्राणसारं बिभर्त्ति ॥(ङ)
रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान् पर्य्युत्सुकीभवति यत् सुखितोऽपि जन्तुः।
तच्चेतसा स्मरति नूनमबोधपूर्व्वं भावस्थिराणि जननान्तरसौहृदानि ॥(च)

(क) अनयोरेकतरस्यैवान्वयमुखेन व्याख्या कार्य्या। ७

(ख) वैदर्भ्यारीतिः किं लक्षणं? 'ङ' 'च' चिह्नितयोः श्लोकयोः कतरो वैदर्भ्यारीत्या निबद्धः? ४

४। ललनाजनं सृजता च विधात्रा नूनमेषा घुणाक्षरन्यायेन निर्म्मिता, नोचेत् दक्षभूरेवंविधनिर्म्माणनिपुणो यदि स्यात्तर्हि तत्समान लावन्यामन्यां तरुणीं किं न करोति। [झ]

पश्यत पारतल्पिकमुपधियुक्तमपि गुरुजनबन्धव्यसनमुक्तिहेतुतया राज्योपलब्धिमूलतया च पुष्कलावर्थधर्म्मावप्यरीरधत्। किं हि बुद्धिमत्प्रयुक्तं नाभ्युपैति शोभाम्। [ज]

(क) अनयोः प्रबन्धांशयोरेकतरएव व्यासवाक्य प्रदर्शनपूर्व्वकं व्याख्यायेताम्। ६

(ख) घुणाक्षरन्यायः कीदृशः?

(ग) कोऽसौ गुरुजनः कथं वास बन्धनान्मोचितः? ४

क्रमशः—

---

२। (ग) 'ग' चिह्नितश्लोकस्य तृतीयपादे जन्तुनेति साधारणजन प्रयोज्यत्वात् पदगतो ग्राम्यो दोषः। 'घ' चिह्नितश्लोकस्य प्रथमपादे तुमन्तपदमनुक्त्वा सुखलिप्सयेति तृतीयान्तोपन्यासेन तुमन्त प्रक्रमभङ्गाद भग्नप्रक्रमताख्यो दोषश्च विद्यते।

४। [ख] घुणः काष्ठकर्त्तनशीलः कीट विशेषः, अक्षरनिर्म्माणेच्छारहितस्यापि तस्य कर्त्तनेन यथा कदाचिदक्षराकृतिर्जायते स एव घुणाक्षरोन्यायः।

**परभिन्ना च या जातिः सैवाऽपरतयोच्यते ।**
**द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥८॥**

व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः ॥ १

एकव्यक्तिकत्वादाकाशत्वं न जातिः, तुल्यव्यक्तिकत्वात् घटत्वं कलशत्वं न जातिद्वयं, सङ्कीर्णत्वात् भूतत्वं मूर्त्तत्वं न जातिः, अनवस्थाभयात् सामान्यत्वं न जातिः, विशेषस्य व्यावृत्तस्वभावस्य रूप-

---

१। व्यक्तेरित्यादि—व्यक्तेः—स्वाश्रयव्यक्तेः, अभेदः ऐक्यं आकाशत्वादेर्जातित्वे बाधकं। तुल्यत्वं स्वाश्रयमात्रसमानाश्रयत्वं, तथा च समनियतत्वान्न घटत्वं कलशत्वञ्च जातिद्वयम्। परस्परात्यन्ताभावसामानाधिकरणयोर्धर्मयोरेकत्र समावेशः सङ्करः, स च भूतत्वादेर्जातित्वे बाधकः तथाहि—मूर्त्तत्वं विहाय गगने भूतत्वस्य सत्त्वात् भूतत्वं विहाय मनसि मूर्त्तत्वस्य सत्त्वात् भूतत्वमूर्त्तत्वयोश्च पृथिव्यादिचतुष्टये उभयोरपि समावेशाच्च न भूतत्वादीनां जातित्वमिति भावः। साङ्कर्यस्य जातिबाधकत्वं च नानाजातिभिः स्वव्याप्यजातेः सामानाधिकरण्ये [illegible] समवेतत्वं जातिसमानाधिकरणस्य "स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वाभाव" इति नियमस्य सङ्करभङ्गापत्तेरिति। तादृशनियमे मानाभावात् साङ्कर्यं न जातिबाधकमिति नव्याः। अप्रामाणिकानन्तपदार्थकल्पनाऽनवस्था, सा च जातेर्जातित्वे बाधिका, तथाहि—घटत्वपटत्वादि निखिलजातिषु अनुगतस्य जातित्वस्य जातित्वाङ्गीकारे तत्रापि जातित्वमभ्युपेयं तस्य च निखिलजातिवृत्तित्वात् [illegible] जातित्वं सिद्धं तत्र तत्रानवस्थेति भावः। यद्यपि निखिलजातिष्वेकवैजात्याङ्गीकारेऽपि तज्जात्यन्तरं वैजात्यान्तरं कल्पनीयं तस्यैकव्यक्तिवृत्तित्वादिति नानवस्था तथापि निखिलजातिष्वेकं वैजात्यं तद्वैजात्यतदाश्रयजातिषु पुनर्वैजात्यमेवमग्रेऽप्यनवस्था तदवस्थैवेति ध्येयं। रूपहानिरिति—रूपस्य—स्वतोव्यावर्त्तकत्वरूपलक्षणस्य, हानिः—भङ्गः, तथाहि—सामान्याश्रयस्य सामान्यरूपेण भेदसाधकत्वनियमात् विशेषे जातिस्वीकारे तयैव व्यावर्त्तकत्वस्य वाच्यतया विशेषस्य स्वेनरूपेण व्यावर्त्तकता नैव सम्भवतीति भवति विशेषस्य जातिमत्त्वे तादृशलक्षणव्याघात इति भावः। असम्बन्ध इति—प्रतियोगित्वानुयोगित्वान्यतर-सम्बन्धेन समवायाभावः। सत्ताभावत्वादेर्जातित्वाङ्गीकारे उक्तलक्षणानुसारात् समवायेनैव तत्सत्त्वमङ्गीकार्यं तथा चोक्तान्यतरसम्बन्धेन समवायाभावो नाभावादावुभयत्वादिसिद्ध इति कथं तेन हेतुना अभावादौ जातिमत्त्वाभावः सिध्यतीति वाच्यं समवायपदेन आत्मातिरिक्त-प्रतियोगिकत्वविशिष्टसमवायस्य विवक्षितत्वात्। तथाचाभावादौ निरुक्तसम्बन्धेन समवाया

**व्यापकत्वात् परापि स्याद्व्याप्यत्वादपरापि च ।**
**अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्त्तितः ॥१०॥**

हानिः स्यात् अतो विशेषत्वं न जातिः, समवायसम्बन्धाभावात् समवायाभावत्वयो र्न जातित्वं २ ॥ ८ ॥

द्रव्यादीति । परत्वम् अधिकदेशवृत्तित्वम्, अपरत्वम् अल्पदेशवृत्तित्वम् । सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वात् सत्तायाः परत्वम्, एतद्बोधनायैव द्रव्यादित्रिकवृत्तिरित्युक्तम्, तदपेक्षया ३ चान्यासां जातीनामपरत्वम् । परभिन्ना सत्ताभिन्ना, व्यापकत्वादिति— पृथिवीत्वाद्यपेक्षया व्यापकत्वादधिकदेशवृत्तित्वात् द्रव्यत्वादेः परत्वं, सत्तापेक्षया

---

भावस्योभयवादि सिद्धत्वाभावेपि निरुक्तविशिष्टसमवायाभावस्य सर्व्ववादिसिद्धत्वान्नासङ्गतिः । अथवा निरुक्तान्यतरघटकानुयोगितापदं सत्तावन्निष्ठोभयवादि सिद्धं यत्समवायानुयोगित्वं तत्परमतः समवायपदस्य यथाश्रुतार्थपरत्वेपि न क्षतिरितितत्त्वं, एवञ्च— जात्यतिरिक्त प्रतियोगिकत्व विशिष्टसमवायस्य प्रतियोगितया अनुयोगितया च असत्त्वे न जातेर्जातिमत्त्वेपि निरुक्तसम्बन्धस्यैव बाधकत्वसम्भवादनवस्थाया जातिबाधकत्वेनोक्तिर्व्यर्थेत्यपि निरस्तमित्यवधेयं ।

२ । एकव्यक्तिकत्वादित्यादि समवायाभावत्वयोर्नजातित्वमित्यन्त पाठस्तु बहुष्वेपुस्तकेषु नास्ति दिनकरीपर्य्यालोचनेन च नैष मौलिक इत्यैव प्रतिभाति तथापि छात्राणां सुखबोधाय न परिहृत इति मन्तव्यम् ।

३ । तदपेक्षया—सत्तापेक्षयेत्यर्थः । सत्ताजातिश्च द्रव्यं सत् गुणःसन्नित्याद्यनुगतप्रतीत्या ध्वंसकारणतावच्छेदकतया च सिध्यति, यत्र प्रागभाववृत्तिप्रतियोगिताभिन्नप्रतियोगितासम्बन्धेन ध्वंसोत्पत्ति स्तत्रैव तादात्म्यसम्बन्धेन सदिति सामानाधिकरण्यप्रत्यासत्त्या कार्य्यकारणभावादिति ।

घटादीनां कपालादौ द्रव्येषु गुणकर्म्मणोः ।
तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तितः ॥११॥

व्याप्यत्वात् अल्पदेशवृत्तित्वाच्च द्रव्यत्वस्यापरत्वं तथाच धर्मद्वयसमावेशा-दुभयमविरुद्धम् ८ ॥

विशेषं निरूपयति—अन्त्य इति, अन्ते अवसाने वर्त्तते इत्यन्त्यः, यदपेक्षया विशेषो नास्तीत्यर्थः । घटादीनां द्व्यणुकपर्य्यन्तानां तत्त-दवयवभेदात् परस्परं भेदः । परमाणूनां परस्परभेदको विशेष एव, स तु स्वत एव व्यावृत्तः ४ तेन तत्र ५ विशेषान्तरापेक्षा नास्तीति भावः ॥१०॥

समवायं दर्शयति—घटादीनामिति, अवयवावयविनो ६ जाति-

४ । अन्ते—व्यावर्त्तकानामवसाने वर्त्तते इति व्युत्पत्त्या मूल-स्थान्त्यपदेनैव यस्य व्यावर्त्तकान्तरं नास्ति तत्त्वमित्यर्थलाभात् स्वतो-व्यावृत्तत्वरूपान्त्यत्वमेव विशेषस्य लक्षणम्, नित्यद्रव्यवृत्तिरिति तु विशे-षाणां स्थानकथनं नतु लक्षणे प्रविष्टं प्रयोजन विरहात् । स्वतोव्या-वृत्तत्वञ्च—स्वभिन्नलिङ्गजन्य स्वविशेष्यक स्वसजातीयेतरभेदानुमित्य विषयत्वं, साजात्यञ्च—पदार्थविभाजकरूपेणेति न काचिदनुपपत्ति-रितिध्येयं ।

५ । तत्र— विशेषव्यावृत्तौ । नवीनास्तु विशेषे अतिरिक्ते मानाभावः, यथैवविशेषाणां स्ववृत्तिधर्म्मं विना व्यावृत्तत्वं नित्यद्रव्याणामपीत्याहुः ।

६ । मूलस्थघटपदकपालपदयोरवयवावयवपरत्वमभिप्रेत्याह अवयवावयविनोरिति ।

व्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च ७ यः सम्बन्धः स समवायः । समवायत्वं ८ नित्यसम्बन्धत्वं तत्र प्रमाणन्तु गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात् दण्डी पुरुष इति विशिष्टबुद्धिवत् इत्यनुमानं, एतेन संयोगादिबाधात् समवायसिद्धिः । न च स्वरूपसम्बन्धेन सिद्धसाधनम् ९ अर्थान्तरं वा १० अनन्तस्वरूपाणां सम्बन्धत्वकल्पने गौरवात् लाघवादेकसमवायसिद्धिः । न च समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिप्रसङ्गः तत्र रूपसमवायसत्त्वेऽपि रूपाभावात् ११ । न चैवम् अभावस्य वैशिष्ट्यं

---

७ । समुच्चयचकारेण नित्यद्रव्येषु विशेषस्य सम्बन्धः समुच्चीयत इत्याह नित्यद्रव्यविशेषयोरिति ।

८ । समवायस्य लक्षणमाह नित्यसम्बन्धत्वमिति । सम्बन्धश्चात्र सम्बन्धिभिन्नो ग्राह्यः, तथाच—सम्बन्धप्रतियोग्यनुयोगिभिन्नत्वे सति नित्यत्वे च सति सम्बन्धत्वमिति समवाय लक्षणं पर्य्यवसितं, तेन नित्याभावादिरूपस्वरूपसम्बन्धे प्रतियोग्यनुयोगित्वात्मक सम्बन्धे च नातिव्याप्तिरिति । अयुतसिद्धानामाधार्य्याधारभूतानामिह प्रत्ययहेतुर्यः सम्बन्धः स समवाय इति वैशेषिकभाष्यसम्मतं लक्षणं, तत्रायुतसिद्धत्वञ्च—परस्परपरिहारेण पृथगाश्रयाश्रयित्वं युतसिद्धत्वं तन्नास्ति येषांतत्त्वमित्यनुसन्धेयं ।

९ । अयुतसिद्धयोः स्वरूपसम्बन्ध इति वदतः परस्येति शेषः ।

१० । समवायसाधने प्रवृत्तानां नैयायिकानामिति शेषः । अर्थान्तरशब्दस्य स्वानभिमतार्थ सिद्धिरित्यर्थः ।

११ । नच रूपसमवायसत्त्वे तेन सम्बन्धेन कथं तत्र रूपाभावः सम्बन्धस्याश्रयासत्त्वेन सम्बन्धेन सम्बन्धिसत्तानियामकत्वादिति वाच्यं

सम्बन्धान्तरं सिध्येदिति वाच्यं तस्य १२ नित्यत्वे भूतले घटानयना-नन्तरमपि घटाभावबुद्धिप्रसङ्गात् घटाभावस्य तत्र सत्त्वात्, तस्य १३ नित्यत्वात्, अन्यथा देशान्तरेऽपि तत्प्रतीतिर्न स्यात् १४ वैशिष्ट्यस्य च तत्र सत्त्वात्, १५ मम तु १६ मते घटे पाकरक्ततादशायां श्यामरूपस्य नष्टत्वान्न तद्वत्ताबुद्धिः। वैशिष्ट्यस्यानित्यत्वे त्वनन्त-वैशिष्ट्यकल्पने तवैव गौरवम्। इत्यञ्च तत्तत्कालीनं १७ तत्तद्भूत-लादिकं तत्तदभावानां सम्बन्धः ॥११॥

---

रूपनिरूपितत्वविशिष्ट समवायस्यैव रूपसम्बन्धतया वायौ तदभावात्। नच विशिष्टस्यानतिरिक्तत्वेन विशिष्ट समवायोपि वाया वस्तीति वाच्यं विशिष्टस्यानतिरिक्तत्वमते रूपनिरूपितत्वविशिष्ट समवायनिरूपिताधि-करणताया एव रूपसम्बन्धतया वायौ तस्या अभावादितिध्येयम्।

१२। वैशिष्टस्य। १३। घटाभावस्य।

१४। अन्यथा—घटाभावस्यानित्यत्वे, देशान्तरेपि—घटशून्य देशेपीत्यर्थः। तस्यादिति—घटसामान्याभावस्यैकत्वादितिभावः।

१५। वैशिष्ट्यस्येति—वैशिष्टस्य नित्यत्वाभ्युपगमपक्ष इत्यादिः। तत्र—घटानयनेन घटवति। न च घटवति न घटाभावबुद्धिः घटवत्त्व-ज्ञानस्य प्रतिबन्धकस्य सत्त्वादिति वाच्यं घटवत्ताज्ञानविरहदशायां जायमानाया घटाभावबुद्धेः प्रमात्व प्रसङ्गादित्यत्र तात्पर्य्यात्।

१६। ननु सिद्धान्तिनोपिमते पाकेन रक्ते घटे श्यामरूपसम-वायस्य सत्त्वात् श्यामरूपवत्ताधीप्रसङ्ग इत्यत आह ममत्विति।

१७। तत्तत्कालीनं—घटाभाववद्भूतलमितिज्ञानकालीनं, तत्त द्भूतलादिकं—यत्र यत्रभूतले घटाभावबुद्धि स्तत्तद्भूतलादिकं, तत्त-दभावानां—यस्य यस्याभावस्यबुद्धि स्तस्यस्येत्यर्थः। तथाच— न **स्वरूपमात्रं सम्बन्धः किन्तु ईदृशः स्वरूपविशेषः एवञ्च—घट शून्यता-**

**अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः ।**
**प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥**
**एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ॥१२॥**

अभावं विभजते—अभावस्त्विति, अभावत्वं द्रव्यादिषट्कान्योन्याभाववत्त्वम् । [१८] संसर्गेति संसर्गाभावान्योन्याभावभेदादित्यर्थः [१९] अन्योन्याभावस्यैकविधत्वात् तद्विभागाभावात् संसर्गाभावं विभजते—प्रागभाव इति । संसर्गाभावत्वम् अन्योन्याभावभिन्नाभावत्वम् । अन्योन्याभावत्वं तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं । विनाश्यभावत्वं प्रागभावत्वं, [२०] जन्याभावत्वं ध्वंसत्वं, नित्यसंसर्गाभावत्वं

---

इत्यायामिव घटवत्तादृशायामपि न भूतले घटाभाव प्रसङ्ग इत्यवधेयं ।

१८ । अत्रान्योन्याभावप्रतियोगितावच्छेदकं न द्रव्यत्वादिकमननुगमात्, नापि तद्गता षट्त्व संख्या तदवच्छिन्न प्रतियोगिताकभेदस्य उभयादिभेदवत् केवलान्वयितया द्रव्यादावतिव्याप्त्यापत्तेः किन्तु भावत्वमेव, तथाच—भावभिन्नत्वमेवाभावलक्षणं पर्य्यवसितमितिध्येयं ।

१९ । द्वन्द्वात्परं श्रूयमाणस्याभावपदस्य प्रत्येकं सम्बन्धात् संसर्गाभावान्योन्याभाव भेदादिति मूलार्थः सङ्गच्छत इति बोध्यं ।

२० । ननुप्रागभावसत्त्वे किं मानमिति चेत् अत्रोत्पन्नस्य पुनरुत्पादभिया तत् सिद्धिरिति प्राञ्चः । तथाच अयं घटः स्वोत्पत्तिक्षणावृत्तिकारणजन्यः द्वितीयक्षणानुत्पन्नत्वादित्येवंरूपानुमानबलादितरेषांवाधेन प्रागभावसिद्धिः प्रागभावस्य सामग्रीनाश्यतया प्रतियोगिक्षणावृत्तित्वात् तितवादितिभावः ।

अत्यन्ताभावत्वम्। यत्र २१ तु भूतलादौ घटादिकमपसारितं पुनरानीतञ्च तत्र घटकालस्य सम्बन्धाघटकतया अत्यन्ताभावस्य नित्यत्वेऽपि घटकाले न घटात्यन्ताभावबुद्धिः। तत्र उत्पादविनाशशाली चतुर्थोऽयमभाव २२ इति केचित्। अथ ध्वंसप्रागभावयोरधिकरणे नात्यन्ताभाव इति प्राचीनमतं, श्यामघटे २३ रक्तो नास्तीति रक्तघटे श्यामो नास्तीति धीश्च प्रागभावं ध्वंसञ्चावगाहते न तु तदत्यन्ताभावम्। नव्यास्तु तत्र २४ विरोधे मानाभावात् ध्वंसादिकालावच्छेदेनाप्यत्य-

---

२१। नन्वत्यन्ताभावस्यनित्यतायां घटानयनानन्तरमपि भूतले घटोनास्तीति प्रतीत्यापत्तिरत आह यत्रेति। तथाच—सम्बन्धाभावादेव घटानयनानन्तरं न घटात्यन्ताभावबुद्धिरितिभावः।

२२। समयविशेषे प्रतीयमानतया सामयिकाभाव इत्यर्थः। कालविशेषविशिष्ट स्वरूपस्य सम्बन्धतोपगमादेव घटवति घटो नास्तीत्यभाव प्रतीत्यभावोपपत्तौ चतुर्थ संसर्गाभावे मानाभाव इत्यस्वरसः केचिदित्यनेन सूचितः।

२३। श्यामघट इति—रक्तरूपप्रागभावाधिकरण इति शेषः, रक्तघट इति—श्यामरूपध्वंसाधिकरण इति शेषः, तावतैव प्रागभावध्वंसाधिकरणतया नास्तीति प्रतीतिविषयात्यन्ताभावः कथमित्यापत्तेः सम्भवादित्यवधेयं। अवगाहत इति— विषयीकरोतीत्यर्थः।

२४। तत्रेति—ध्वंसप्रागभावयोरित्यर्थः, अत्यन्ताभावेन सहेति शेषः। तथाच—नव्यमते दर्शित स्थले अत्यन्ताभावावगाहित्वमेवेष्टमितिभावः। युक्तञ्चैतत् कथमन्यथा अन्तराश्यामे रक्तं रूपं नास्तीत्याकारकः प्रत्यय स्तद्व सामान्याभावावगाहित्वात्, नचेदृश प्रत्ययो रक्तिम ध्वंसाद्यवगाही पूर्व्वापर रक्तिमध्वंसप्रागभाववति इदानीं रक्तेपि तादृशाकार प्रत्ययप्रसङ्गादितिध्येयं।

समानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥१३॥
द्रव्यादयः पञ्च भावा अनेके समवायिनः ।
सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥१४॥

न्ताभावो वर्त्तत इति प्राहुः । नन्वस्तु २५ अभावानामधिकरणात्मकत्वं लाघवादिति चेन्न अनन्ताधिकरणात्मकत्वकल्पनामपेक्ष्यातिरिक्तकल्पनाया एव लघीयस्त्वात्. एवञ्च २६ आधाराधेयभावोऽप्युपपद्यते । एवञ्च २७ तत्तच्छब्दगन्धरसाद्यभावानां प्रत्यक्षत्वमुपपद्यते, अन्यथा २८ तत्तदधिकरणानां तत्तदिन्द्रियाणामग्राह्यत्वादप्रत्यक्षत्वं स्यात् । एतेन ज्ञानविशेषकालविशेषाद्यात्मकत्वमत्यन्ताभावस्येति प्रत्युक्तम् अप्रत्यक्षत्वापत्तेः ॥१२॥

---

२५ । नन्वभावस्तु द्विधेतिविभागोऽनुपपन्नः अभाव एवमानाभावादित्यभिप्रायेण प्राभाकरः शङ्कते नन्विति ।

२६ । अभावस्याधिकरणात्मकत्वे अभेदे आधाराधेयभावानुपपत्तिरूपोदोषः सोऽप्यस्मिन् मते नेत्याह एवञ्चेति—अधिकरणापेक्षया अतिरिक्तत्वे च इत्यर्थः ।

२७ । नन्वभावाधिकरणकाभावस्याधिकरणात्मकत्वे, यथाधाराधेयभावोपपत्तिस्तथा सर्व्वत्राप्यस्तीत्यतो दूषणान्तरमाह एवञ्चेति ।

२८ । अन्यथा—अभावस्याधिकरणात्मकत्वे, तथाहि—येनेन्द्रियेण यो गृह्यते तदभावोपि तेनैवेन्द्रियेण गृह्यत इति नियमात् । जलवृत्ति गन्धाभावस्य जलरूपस्य प्रत्यक्षं नस्यात् जलस्य घ्राणेन्द्रियाग्राह्यत्वादितिभावः । अत्रच गन्धाभावस्य जलादिरूपत्वे जलत्वादिनैव तेषां न घ्राणेन्द्रियग्राह्यता गन्धाभावत्वेन तु तेषामपि तथात्वमिष्टमेवेति प्राभाकराणामभिप्राय इति मन्तव्यम् ।

# आर्य्यप्रभा ।

प्रथम वर्षं { सुदुर्लभाः सर्व्वमनोरमा गिरः } पञ्चम संख्या ।

---

## मासावतरणिका ।

नीहार जालैः परिमर्द्दितश्रीः सरोजिनी हन्त नितान्तशीर्णा ।
भानुं तनुं निःशरदं सुदैन्यं पुष्णाति पौषे किमनुव्रतेव ॥

---

## गुरुशिष्य संवादः ।

( पूर्व्वतोऽनुवृत्तः । )

सुमुखः । गुरुदेव ! वक्तुं जिह्रेमि, परमपरोऽपि मे पाठान्तरायः समीप समुपवर्त्तते ।

गुरुः । अहो कष्टं !! सुस्पष्ट मभिधीयताम् ।

सुमुखः । किं कथयामि, तातो मे विवाह बन्धनार्थमतितरा-मुद्युक्तः । आकर्ण्यंचमया प्रतिवेशिन्या पितृपितृव्य पत्न्या कथञ्चिद-नभिमते प्रकाशिते तातो दीर्घं निश्वस्य समाहूय च मामवादीत्

"पितृव्य पत्नि ! मातृवत् त्वामहं श्रद्दधामि, किं कथयामि मे मनः कष्टं, जानास्येवोपरताया मस्य जनन्यां स्वयमेव गृहकार्य्यं वहिःकार्य्यञ्च कथञ्चित् सम्पाद्य कियता कष्टेनायं परिवर्द्धित इति। यदा तु रन्धनादि कार्य्येण नितान्तं परिश्रान्तो घर्म्माक्त कलेवरो विरक्तः समभविष्यम् तदैव मानसमाश्वासयिष्यम् हृदय ! सहस्व क्लेशमल्प-कालं, यज्ञोपवीतानन्तरमेवैनमुपयमय्य क्लेशमिमं शमयिष्यामि। अहो दुर्द्दैवमद्य निर्द्धारयामि ममाभिलाषः सर्व्वथैवासदृशः। आमरणं रन्धनादि कार्य्यं सम्पाद्यैव मे जीवनधारणं अभिप्रेत विधातुः। यातु यथा निर्द्दिष्टमदृष्टाधीनं कष्टमवश्यमेवानुभवितव्यं, केन शक्ता निवारयितुं भवितव्यता। सत्यामपि सम्भावनायां यमः क्लेशभिया नानाविधमसहनीयं दुःखमनुभवन्नपि तदानीमहं न पुनर्दारानगृह्णीयम्, प्राणाधिकस्य तस्यैव मे पुत्रस्यास्य यदि कष्टकर मेतदनुष्ठानं, तदा कथमपि मया नानुष्ठितव्यमिति। एवं कथयत एव तातस्य वक्षःस्थलं चक्षुर्जलेनाप्लावितमालोक्य भृशमसोढ़ः, सापराध मेवात्मानं मन्यमानः, धिक्कृत्य च शतशो हताशं पितृक्लेशकरं जीवितं, पादयोस्तस्य पतित्वा सभय गद्गदमगादिषम्, तात ! क्षमस्व मे कार्कश्यमर्भकस्य। प्रतिपदं तव दुःखार्थमेव मूर्खोऽहमुत्पन्नः, विशेषत इदानीमधन्यतयैव मे तवाभीष्टविरोधिनी निष्ठुरोचिता कष्टजननीयं धृष्टतापि समजनिष्ट, तवाभिलाष विरुद्धाभिभाषणं मे सर्व्वथैवासदृशमज्ञताजनितमिति सहस्व। नास्ति परं किमपि मे वक्तव्यमिति यथा भवते रोचते तथैव सम्पाद्यतामिति। तदानीं प्रतिवेशिन्यापि तया तातमतानुकूला एवार्य्यजनोचिता युक्तीरपरिहार्य्या अवतार्य्य विवाहस्याचिर सम्पादनीयत्व मेवापादितम्। अहन्तु वाल्य विवाहस्य दोषातिशय्यमावालयन्नपि पितुः क्लेशभयात् लज्जाभिभवाद् गुरुजन गौरवाच्चापरं किमपि वक्तु

लाभयाभूवन् । सुतरामचिरादेव पाठविघ्नः सम्पत्स्यति इति सम्भा-
वयामि ।

पु॰ । सन्तुष्टोऽस्मि ते शुभसंवादेन, पित्रादीनां मभिलषितेऽर्थे सर्वचित्तेनावश्यमेव वर्त्तितव्यम् । विशेषतस्तु ईदृशे पितुस्तत्माह विषये विरोधिता सर्व्वथैवानुचिता । आधुनिकशिक्षितम्मन्या अधन्या एव स्वाधीनता मालम्ब्य गुरुजनाभिमत वैपरीत्यमौद्धत्येन समाचरन्ति । शिक्षा माहात्म्येन च ते दीक्षिता इव गुरुजनाभिभाषितां स्वमत विपरीतां कथां साक्षादपि प्रतिवदितुं न कुण्ठन्ते, यतस्ते तृणमिव गुरुगणं गणयन्ति । यथाभिरुचि समाचरन्ति आर्य्यजन गर्हितान्यपि कार्य्यजातानि ते अनिवार्य्याः । अहो !! दौर्ज्जन्य मुर्ज्जस्वलं तेषां, वयस्यवचस्येव सम्बद्धा श्रद्धा, गुरुजनाभिलापे प्रलाप इव विरक्तिः, विदेशीय समादेशे निर्व्विचारं विशेषतो विश्वासः, धर्म्मञ्च कथमनुमारिविज्ञानाधीनतामापादयितुं प्रगाढ़ः समादरः, क्वचित् कल्पितानां शास्त्राणा मल्पत्व सम्पादनार्थमेव संकल्पः । दुःखं पुनरेतदेव नः यत्तात्पर्य्यानुसन्धानं विनैव ते प्राचीनतमं सिद्धान्तं भ्रान्तं मन्यन्ते । अथवा कुतस्तदनुसन्धान शक्तिरदूरदर्शिनां तादृशां मतिमतां । यातु तादृशा निःशङ्का कुलकलङ्का एव पितुरङ्के स्थित्वापि तद्वचनं प्रतिवदितुं शक्नुवन्ति, नतु त्वादृशाः ।

किन्तु वत्स ! आधुनिकाभिभावकानां बाल्य विवाहप्रयत्नः समतीवायुक्तः परिलक्ष्यते, पुत्रादीनां विवाह सम्पादनं प्रधानं करणीयमिव ते मन्यन्ते, तेनैव च संसार सुखस्य चरमोत्कर्षं जानन्ति, तेन च पुत्रादीनां कीदृशी दशा विपर्य्यासः सम्भवेदिति क्षणमपि न चिन्तयन्ति । तत्फलतस्वापातमधुरे कलत्र सम्भोगादिरसे रसिका अन्यत्सर्व्वमेव विस्मरन्ति का कथा नितरा मध्यवसाय

साध्यस्याध्ययनस्य, अपरिणतमस्तिष्कतया सदसद्विवेकराहित्येन च एतादृक् स्त्रीसमासक्ताः भवेयुर्यदशक्ता एव ते तां विहाय स्थातुम्, तत्सहवासेनैव स्वर्गाधिवासं तल्लावण्य निरीक्षणेनैव सार्थकता मक्ष्णोः तत्कथा श्रवणेनैव च परितृप्तिं श्रवणयोरनुभवन्ति। तत् सन्तोष साधनमेव जीवनस्य सारं स्मरन्ति। गुरुजनोपदेशं विषमिव कलयन्ति। पितृमातृभक्तिस्तु क्रमश स्तिरोदधाति, अन्येऽपि सद्गुणा निगूढ भयादिवागूहतः पलायन्ते। सुतरां सर्व्वज्ञानशून्या स्तदसामान्य लावण्य मुग्धा स्ते मूर्खा भावि दुःखं चिन्तयितुमपि नावकाशं लभमाना तदेकनिष्ठा एव तिष्ठन्ति। अहो! दुर्द्दैवं येच गुरुजनाः संसारस्य चरमं सुख मनुभवितुकामाः प्रभूतार्थविसर्ज्जनेनातिशयोत्साहेन च स्नुषा मामादयन्ति कियत्कालेनैव व्यालरूपिण्या तया दष्टानां पुत्राणां तद्विषज्वालया स्वयमेव ते ज्वलन्ति, पुत्रास्तु वालका नितान्त विमुग्धा दुग्धमिव तद्विषं सेवमाना चैतन्य शून्यतया तद्दोषं नानुभवन्ति। परन्तु अभिभावकानामेव तत्परिपालनचिन्तापि समाश्रयणीया; फलतस्तु दुःखमेव तेषां वर्द्धते, एवं कष्टेन कालं यापयतामभिभावकाना मभावे च गुरुतर संसारभारे शिरसि समागते पुत्रकलत्रादीनां पोषणासामर्थ्याद्धृगाघातेन क्रमशस्तेषां चैतन्यं भवेत्।

क्रमशः—

# मानवजीवनस्य लक्ष्यं तत्साधनोपायश्च।

( कार्त्तिक प्रकाशितात् परम्। )

इत्थं शक्तिमन्तः पुरुषाः संसारे यदि व्रतान्यनुतिष्ठन्तु तत्रैव क्षमित्वं प्रकाशयन्ति। दया दाक्षिण्य सत्यशान्त्यादिगुण शीलिता विजित-कामादि रिपुतया परित्यक्तहिंसादिपापगणतया च सर्व्वेष्वेव कर्म्म फलाफलाचरणेषु निरन्तर सफलतायाः जनसंघादि प्रतिष्ठित कीर्त्तयः सम्पद्यन्ते। एतेषां यो यावदनुतिष्ठति स तावतीमेव शक्तिमात्मोत्कर्षं कुरुते। दृश्यते हि संसारे सर्व्वेष्वेव कलाकलाप पारगामिषु विदित-वेदेषु उन्नत ज्ञान विज्ञानवत्सु विद्याबुद्धिविवेकवच्छिरोमणिषु एतेषां पञ्चव्रतानां विशेषतोऽनुष्ठानम्। एवञ्च सर्व्वेषु विद्योपार्ज्जनेषु धर्म्म कार्म्म कलापाचरणेषु च एते पञ्चव्रता अल्पाधिकमनुष्ठेयाः। यद्यपि एतेषामनुष्ठाने न जायते नाम समाधिजः संयमः ( Concentration of mind) तथापि सांसारिक कार्य्यार्ज्जनोपयोगिन्या विद्याया अनु-शीलने पञ्चव्रतानामेतेषां अनुशीलनमवश्यं कर्त्तव्यम्। एतस्या अपरा-विद्याया अनुशीलनं कथङ्कारं कार्य्यमित्युपरिष्टादाख्यास्यते।

इदानीं पूर्व्वोद्दिष्टायाः पराख्याया विद्यायाः ( ब्रह्मविद्यायाः ) कस्तावल्लाभोपाय इति विविच्यते।

उत्तमाधम मध्यम भेदतस्त्रिविधा अधिकारिणः, अधिकारि भेदाच्च ब्रह्मज्ञानं त्रिभिरुपायैरवाप्यते। संनिरोधे हि चित्तवृत्तीनां स्वयमेव तदुदेति। स्वयं प्रकाशं हि तदन्तरायैरन्तरितं, यदा त्वन्तरायाणां भवेदपगमः तदा पयोधरपटल प्रतिवद्धदर्शनः घर्म्मदीधितिरिवाभ्राप-सारणादनन्तरेण प्रकाशकान्तरं प्रतिभासते इत्युपनिषत् सम्मतिः। चित्तवृत्तय एवास्य स्वयं प्रकाशस्य ज्ञान प्रतिवन्धकतया निर्द्दिष्टाः।

तास्व अधिकारि भेदास्त्रिभिरुपायैरपसारयितु' शक्यन्ते। यथा—

१। वस्तुनां नित्यानित्यविवेकेन सतत परिलुप्तिशोकतापशोकेन स्वचित्तवृत्तीनां विपर्य्यास कारणत्व समालोचनया च यस्योदीतवैराग्यस्य तस्मिन् सच्चिदानन्दरूपे जगत्प्रपञ्चैक कारणे केवले कूटस्थे परमे ब्रह्मणि मनो धावति। तस्य दीर्घकाल नैरन्तर्य्याभ्यासानुष्ठात वान् मस्तस्य तदनुध्यान चिन्तनाभ्यां अन्तर्गलित सर्व्वाशस्य चित्तवृत्तीना मेकान्त निरोधात् स्वयमेव ब्रह्मज्ञान' प्रादुर्भवति। तीव्रसंवेगिन उत्तमाधिकारिण एवेदृशीं दशामासादयन्ति।

२। गुरूपदेशानुसारेण प्रणवादि पवित्र मन्त्राणां जपेन, तदर्थ-भावनया च यदा सर्व्वाश्चित्तवृत्तयो निरुध्येरन् तदा अज्ञाय स्वयमेव ब्रह्मप्रतिभास उदयते। मध्यमाधिकारिभ्य एषा व्यवस्था।

३। अष्टाङ्ग योगानुष्ठानाज्जाते मानससंयमे अविशुद्धि क्षये च यदा चित्तं निरोधाभिमुख' भवेत् तदाहि ब्रह्मज्ञानभागी सम्पद्यते संयमी। एषोऽधमाधिकारिभ्यः सुस्थितो मार्गः। एतस्य सम्य-गनुष्ठानात् यः कश्चिदेव ब्रह्मज्ञानलाभक्षमो जायते जीवः।

क्रमशः—

श्रीसुरेन्द्रकुमार काव्य सांख्यतीर्थस्य।

# स्त्रीजीवनस्य लक्ष्यम् ।

( २ )

अतएव भूयान् भेदः कामप्रेम्नोः । पत्यौ प्रेम, पत्युः प्रेमाभिलाषश्च नूनमेते प्रवृत्ती परस्परविरुद्धे । पतिव्रताःभर्त्तरि बहुस्नेहाः नतु ताः पत्युः सकाशे किमपि कामयन्ते । पत्युः सुखेनैव तासां सुखं दुःखेन दुःखं मरणे च मरणमिति । तथाहि—

आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिनाकृशा ।
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥

अतएव पत्यौ प्रेमैकरसया चिन्तया स्वदेहमपि हातुं प्रवर्त्तते । यद्यपीदानीं कालानुसारेण रमणीवृन्दं विलासोपकरणमिति सुखसाधनमिति वा मन्वानं तथैव स्वामिना व्यवहरति, पतिं क्रीड़नकविशेषं संमन्य तदनुसारेण अपव्यवहर्त्तुमपि न बिभेति भरणपोषणमेव पतिगृहणस्योद्देश्यं विभाव्य अति तुच्छतरैः तैः साकं प्रेम विनिमयति, दारिद्र्यवशात् भूषणादि दानासमर्थे स्वामिनि, प्रेमापि लघयति, दा नाम्नैव नो गौरवं परिपुष्णाति तस्याः सावित्र्या युगे सावित्रीपरिपूतानां ब्राह्मणानां संस्कर्त्तृत्वसमये नैवं पतिपरिगृहणस्योद्देश्यं कयापि अवजग्मे । तदानीं द्वयोरेवान्योन्यं धर्म्म जीवनस्य लक्ष्ये वर्त्मनि साहाय्यार्थमेव विवाहः प्रचलितोऽभूत् । कश्चित् कदाचित् कस्मिंश्चिद्विषये आत्मनो दौर्बल्यं यदि प्रकाशयेत् तदा परस्तं तस्मात् सङ्कटात् उद्धरेत् । कर्त्तव्यविमूढ़ं कश्चिदपरः प्रतिबोधयेत् कुमार्गं प्रस्थितमेकमपरो निवर्त्तयेत् इत्येवार्य्यैः ऋषिभिः विवाहो विधिना नियतः । बाहूल्येनोदाहरणानि उपलभ्यन्ते विपथ

प्रवृत्तां पत्नीं पतिः, कुपथ प्रस्थित पतिञ्च पत्नी लक्ष्यवर्त्मनि उपस्थापयामास। अतएव नार्य्यः सहधर्म्मिणीति नामान्तर भाजः। शास्त्रेपि दृश्यते, पतिमुन्नमयति पत्नी पत्युः प्रभावाच्च नरकात्त्रायते पत्नीति। तथाच—

पतिः पतिव्रतानाञ्च मुच्यते सर्व्वकिल्बिषात्।

नास्ति तेषां * कर्म्मभोगः सतीनां व्रत तेजसः।

तया सार्द्धञ्च निष्कर्म्मा मोदते हरिमन्दिरे। इत्यादि

पतिप्रभावात् पत्नी त्रायते नैतद्विषयकमुदाहरण पुरा दुर्लभमासीत्। किञ्च परस्पर प्रेमदामनिवद्ध चित्त उन्नमेत् इति युक्तितोऽपि अवगम्यते। नहि एकसूत्र ग्रथित वस्तु विरुद्ध देशावस्थायि भवितु मर्हति। अतएव सत्यवतो मृत्यौ तत्प्रेमैकरसायाः सावित्र्या अपि मृत्युलोक प्रस्थान सांसिद्धिकम्। तयोर्हि अन्तरेव व्यवध्यत येन एकमपहाय अपरा कथमपि स्थातु नाशकत्। अतएव शमनेन पराजितेन सत्यवान् वन्धनान्मोचितः। कश्छेत्तुमर्हति पवित्रं प्रेम-वन्धन ? शास्त्रेषु श्रूयते गुरौ वद्धस्नेहे शिष्ये निरयमागते गुरोरपि पातो निश्चितः, अत्रापि वयममुमेव नय मुदाहरामः। यातु, समासेन **सतीत्वं** एव स्त्रीजीवनस्य लक्ष्यम्। यद्य च स्वामिनो धर्म्म कर्म्मणां साहाय्य भवेत्तथापि सर्व्वान्तःकरणेन यतितव्यं। ततश्च यदि तस्य दयागुणेन कथञ्चिन्नारीजीवनस्योद्धारो भवेत्, विशुद्धभक्त्या पतिरनुरक्तश्चेत् कदाचिदपि विपथगामी भवितु नार्हतीत्यपि चिन्तनीयमिति शम्।

व्याकरणतीर्थ—श्रीसरलासुन्दरी ब्रह्मचारिण्याः—

जगत्पुर आश्रमाश्रितायाः।

---

* अत्र तस्येति पाठ एव समीचीनतया प्रतिभाति।

# नियतिः।

पूर्व्वानुसारिणी।

अथान्यस्मिन् कदा निदाघ समये, मस्तिष्केण सम शुष्यति जनगणे नगरे, कमनीयकलेवरेण सम पृथिव्या उत्तिष्ठति धूलिकणजाले, मानवमनोभिः सम सम्वाञ्छया अनुधावति सरोवरमीनजालेऽपराह्न-काले राजपुत्रः दर्व्वीं सुगुप्तं कुतूहलपरवशः आकर्षणीं रज्जुप्रान्तेन बद्ध्वा तां चितलोपरिस्थे छादे पातयित्वा "गृहाद्दूरे किं कार्य्यं सञ्जायते" इति द्रष्टुकामः उत्थातुमारभत। तत्रारोहणोपयोगीनि सोपानानि राज्ञा येन कारणेन न निर्म्मितानि, तत् तत्सुतेन अवलोकितप्रायमभूत्। व्यायामशिक्षावलेन तस्य एतादृशी शक्तिरासीत्, यत् सः अनायासेनैव तत् प्रासादाग्रमधिरुरोह।

ततः प्रेक्षते राजतनयः प्रासादाग्रात् बहुषु आपणेषु क्रीणन्ति नागरिका द्रव्याणि, कुत्रचित्स्कन्धेन वहन्ति गोपाः पयांसि दधि सर्पींषि च, क्वचित् गच्छन्ति वृद्धाः धृतयष्टयः मस्तके स्थापितफलानि वल्कानि समादाय, कस्मिंश्चिद्दिवदन्ते प्रौढ़ाः, क्वचिच्च हसन्ति युवानः, कुत्रचिच्च प्रद्रवन्ति शिशवः। क्वचिद्वा सर्व्वेषु आपणेषु केवलं द्रव्याणि पश्यन्त एव गच्छन्ति केचिदिति। ततः पश्यत-स्तस्य दृष्टिपथमभिमाय पशुविक्रय स्थानम् तत्रावलोकयन् बहुभिः उच्चैःश्रवः सदृशैरिव उच्चैःश्रवोभिः तुरङ्गैः सहनिर्गच्छन्तं वणिज-मेकं सः मनसि नितरामानन्दमधिजगाम। तेषु च कश्चित् अश्वः भूमौ पतितः कियत्कालं पदानि आक्षिप्य निश्चेष्टः सन् शयितः। वणिक् च कञ्चित्कालं तमश्ववरं विलोकयन्नेव विहाय साश्रुनयनं निर्ययौ। सच तुरङ्गः पथिपार्श्वे यथापूर्व्वं स्थितः, न पदानि

मङ्कोचयति, न च दण्डायमानः शय्यामस्ति, नवा चलति। सः अश्वारोहणपटुरासीत्; 'तस्य घोटकस्य ईदृशी न जायते दशा, तत् कथमेतस्य? इति चिन्तासंविग्नमानसः सः अवतीर्य्य तस्मात् स्थानात् ... ... मश्वरक्षकमाह—

"... ... ... ! कथमश्वः पदानि आक्षिप्य निश्चेष्टः शेते, पुनर्न उत्तिष्ठति?"

किङ्करः अवनतमनुवाच "स्वामिन्! मृत्यौ ... ... दृश्येव गतिः।

राजपुत्रः। ... ... ... ! पुनर्न उत्तिष्ठति! ततः सचिन्तमाह—यातु, ... ... ... , ... ... ... कः ... ... भवेत्।

किङ्करः। सर्व्वे ... ... ... ... सर्व्वे प्राणिन एव एवं लक्षणाः यदि तेषां मृत्युर्नभवेत् तदा एभिर्दिनैः लक्षशः भुवनेषु ... ... ... ... तानि पर्य्याप्तानि नस्युः।

भृत्यस्य वहुदिनरुद्ध ... ... निरर्गलं जातम्, नालं वभूव रोद्धुम्।

राजपुत्रः। कच्चित् दृष्टा त्वया एवम्भूता काचित् घटना, यत्र मानवानां मृत्युरस्ति।

"अथकिम्? हा भगवन्" इत्युक्त्वा तूष्णीमवस्थितं तं कुमारः प्राह "कथमिवमसीति।" सतु किमपि स्मृत्वापुनराह "पूर्व्वं राजादेशेन भवते मृत्युवर्णनं निषिद्धमासीत्, अधुना यतो भवान् प्रत्यक्षीकृत्य स्वयमेव पृच्छति, तत् किमस्ति अकथनीयम्। चतुःपञ्चदिनान्यतीतानि मे पुत्रः कश्चिन्मरणवशंगतः। ततोऽपि पूर्व्वं मासे तदग्रजः अपरः। एवं संसारेऽस्मिन् स्थावरजङ्गमात्मकाः सर्व्व

प्राणिनो भवन्ति। मत्पूर्व्वाः पित्रादयः, भवत्पितामहादयश्च मृताः, पितापि भवतो मरिष्यति तथा भवानपि। हा! अनन्तरं मृत्योः प्राणिनः किंविधा भवन्ति, कुत्रगच्छन्ति, किं कुर्व्वन्ति, कोदृक् शक्नुवन्ति।

आकर्ण्येदमश्रुतपूर्व्वक वाक्यं कुमारः परं वैराग्यमुपगतश्चिन्तयामास "कथमितोविपदो मुक्तिं लप्स्ये" सतु कदापि वैराग्यस्य नामापि अशृण्वन्नपि पन्थानं कञ्चिन्निर्णिनाय। कोऽपि तस्मिन् समागतश्च पथिप्रदर्शकः अभूत्, तच्छ्रुत्या समुद्बोधितः सः जायमान प्रतिपच्च लाभं तद्दर्शमिव सज्जीभूतं मगधराज सिंहासनं विहाय, अविक्तदित्वा अपुत्रतादुःखकातरौ पितरौ, तेन आकर्षणी रज्जुसाहाय्येन. उत्क्रम्य प्राचीरं, प्रविवेश काननम्, जग्राह च चौरमेकम्। गमनवेलायां प्रयोजनीयया साकलया, ग्रीष्माय तालवृन्तं, शीताय मावरकम्बलं, शयनाय उपाधानकं, पानीयधारिपात्रमेकं जग्राह।

गच्छन् पथि ग्रीष्मद्विप्रहरे जीवसुन्दरे लताकुञ्जान्तरे सन्तानारीतरे अश्वत्थदिवसकरकरनिकरे चतुर्दिक्षु अनल प्रज्वाल्य उपविष्टं पर्यङ्कस्थितबन्धं कमपि मुनिमवलोक्याह "मुने! किमेवं तपः कथं भगवान् तपस्यति, नकिं बाधते ग्रीष्मसन्तापः, तथा शीतयति शीतमग्निः? तत्कोऽयं प्रकारः" तच्छ्रुत्वा मुनिराह।

अभ्यासात् परं नैव सुखं, यत्परं दृश्यते भुवि दुष्करम्; शीते जलवासः ग्रीष्मे च अग्निवेष्टनमेवमेव। युष्माकमपि महति प्रयोजने सञ्जाते ग्रीष्ममध्याह्नेऽपि ग्रामात् ग्रामान्तरे गमनं दृश्यते, एतावत् पार्थक्यं यत् यूयमल्पमातप सन्तापं सोढुं समर्थाः, वयञ्च अभ्यासात् ततोधिकं किञ्चित्। शीते च यदा युष्माकं गृहेऽपि सर्व्वस्मिन्नङ्गे सुखमनावृतं वर्त्तते, किं तदाजायते महत्कष्टम्? यथा

अभ्यासात् मुखे न शीतम्, तथास्माकमपि अभ्यासात् सर्व्वाङ्गेषु, एवं वयं जितगुणाभवाम:।

इत्याकर्ण्य लज्जितः सः तत्कम्बलं विजहौ, परं 'नदैव प्रयोजन' मनुचिन्त्य तालवृन्तं हस्त एव ररच, गतेच कियतिदूरे प्रवहन्तं शरीरं शीतलयन्तं चन्दनसंस्पर्शशीतलसलिलादिकृताभिषेकमिव दुःखातिरेकं दूरीकुर्व्वन्तं मलयपर्व्वतादागच्छन्तं पवनमनुभूय चिन्तयामास "अलमनेन कायायास विधायिना तालवृन्तेन स्थितेऽस्मिन् प्राणि जीवने पवने" इति तत्याज।

अथ वृक्षमूल मधिशयानं उपाधानीकृतहस्तं कमपि पथिकमालोक्य उपाधानस्य अप्रयोजनीयतामनुबभूव। "तदापि वारिणः पात्रमाणी-त्तस्य करस्थितम्।" परेद्युश्च प्रभातायां रजन्यां उदिते भगवति प्रभाकरे मस्तकोपरि, कस्मिंश्चित् सलिलाशये करेण वारि पिबन्तमेक मवलोक्य मनसि अवदत्—

"काममस्मि मूर्खः! सर्व्वमयस्य भगवतः विश्वधाम्नि कस्य तस्य वस्तुनः अभावः सम्भवति, यतः वीजयति पवनः, पृथिवी शय्या, हस्तः उपाधानं, करौ च पानिपात्रमस्ति। यावदहं सुदृढगृहमध्ये अवसम्, तावदेव वस्तूनामभाव आसीत्, अधुना तु सर्व्वमेव करस्थमेव विचिन्तं पश्यामि। यदा दूरे ... गच्छामि, नाव ...स्यते मामभावः। अहो कियन्तोऽपि वस्तूनां मे अभावोऽस्ति सत्यम्, केवलमन्वेषणस्यैव—

तदिदानीं यामि।

काव्य-व्याकरणतीर्थ—

श्री ... भट्टाचार्य्यः, वङ्गालवासी।

# मदिरा विकारः।

( पूर्व्वतोऽनुवृत्तः। )

अथ परेद्यवि प्रभाते स्ववसतेरुपकण्ठमासाद्य तत्र शृङ्गाटिकायां दृष्टशस्ते छायाशीतले तरुतले समासीनां समीपस्थितादुभाजनाद्भूयो-भूयः मदिरां रसयन्तीं गिरिकन्दरवासितया अपचयां विचित्रं दुकूलं दधानां उत्तरीय खण्डेन स्वकपोलं परिमृजतीं काञ्चन रमणीम्। साचैनानवलोक्यैव आतिथ्यं विधाय उपवेशयन्ती, मदिरया अजस्र-मर्पितया तेषां श्रमामाचकर्ष। अतिमात्रं सुरां रसयतां तेषामध्वक्लम नाशिनी मदिरा सुतरां प्रियतमा बभूव। क्रमेण दिनमणेः सहैवोद-येन तत्स्थानं पार्व्वतीयैः कार्य्यवशान्नानादिग्देशागतैः स्वजाति समयेन अर्द्धोरुक परिहितदुकूलैः जनैः परिपूर्णम्। जनेषु समा-गतेषु न कोऽपि देव्याः श्रीमत्या मदिरायाः कृपाकटाक्षतो वञ्चितः। नार्य्योनरा बालकाश्च यथेच्छं मधुरसमास्वाद्यान्योऽन्यं संवदमानाश्च पार्व्वत्यजनसुलभं ग्राम्यतादुष्टश्लीलेषु। जनपद प्रतिनिवृत्तेषु कश्चन राज्यशासननीतिः विवक्षुः द्दृष्टमुदन्तं राजपुरुषादि सन्निवेशक्रममध्याचख्यौ।

ततः सा प्रथम परिचिता तरुणी आकर्ण्य राज्यपालनरीती-र्नरेश सिंहानां तदभिनयमैछत्। उवाच च "भ्रातरः! वयमत्र एवमेवं राज्यमभिनीय सुखमनुभवेम। अस्मासु कश्चन राजा, अपरो राजपुरोहितः, सेनानीः, द्वारपालः, केचन चान्ये सेनापद व्यपदेशिनः सन्तु। बालकाश्चेमे राजप्रभृतीनां सन्तानत्वं यान्तु। स्त्रियश्चास्मज्जाति समयेन स्वयम्वरेण विवाहिता राजप्रभृतीनां मनो-मन्दयन्तु।" प्रमत्तानां किं नामाकार्य्यं, यदेतच्छ्रुत्वा आक्षेपेव ते

ननन्द ननृतुश्च । पूर्व्वोक्तमनुसारेण सर्व्वसम्मतिक्रमेण च तेषु कश्चन सुभगम्मन्यः राजानमात्मानं प्रकाशयन् गृहीतदण्डस्तत्रत्य परिचितां काञ्चित् लावण्यमनोहरां तरुणीं स्वयम्बर विधिना उपयम्य, आनीय च बालकं कञ्चन स्वपुत्ररूपेण निर्द्दिश्य, प्रत्यग् निर्म्मिते सद्यः सिंहासने समासीनः, मन्त्रि प्रभृतीन् परिजनान् तेषां पुत्रकलत्रादिकांश्च कल्पयामास । प्रथम परिचिता च तरुणी राज्ञ्याः वयस्यात्वपदमन्वपद्यत ।

अथ यथायथं मन्त्रि प्रभृतिभिः सम्मानितस्य राज्ञो भोजनकालः समुपस्थितः । तदा तस्मादेव प्रान्तरात् सूपकाराः बहून् पशून् विनाशयन्तः, कल्पयन्तश्च भोज्यरूपेण मद्यबहुलं आहारं राज्ञे, तदनु च परिजनेभ्यो यथायथं ददुः । एवं भोग विहार संसक्तचेतसां तेषां परां काष्ठामध्यारूढः प्रमोदः । राजा सर्व्वतः षष्ठांशं प्राप्नोत् । का नाम कुण्ठा धनदाने मत्तानां ? ते हि स्वसञ्चितानां धनानां प्रायः सर्व्वमेव ददुः । सहचरी च राज्ञ्याः तानि कुत्रचिन्निभृते सञ्चिकाय । राजा विचारासनं अध्यास्त । ततः कश्चिदागत्य राज्ञे निवेदयति 'राजन् ! स्वयम्बर सभायां परिणीतापि सा चन्द्रमणी पुनः स्वगृहं गता,' राजा यथाभिलषितं वदति । पुनरपरो निवेदयति, राजा च कथञ्चिदुन्मील्य मदविह्वले नयने किमपि जल्पति, पिबति चान्तरान्तरा मदिरां विवेकापहारिणीम् । सर्व्वेऽप्यवहसन्ति । एवं विरता तेषां दिवसस्य तृतीयः प्रहरोऽपि चरमः ।

क्रमशः—

श्रीसुरेन्द्रकुमार काव्य सांख्यतीर्थस्य ।

## प्राप्त ग्रन्थानां संक्षिप्त समालोचनम्।

१। श्रीकालीगतकम्। २। श्रीगुणायतनकम्।

४। श्रीगुरुदेव कीर्त्तनम्। ४। रघुनाथ स्तुतिः॥

एतानि च पुस्तकानि "गया पिपरपाती" वास्तव्येन श्रीयुक्त गङ्गाधर शर्म्म काव्यतीर्थेन विरचितानि। तत्र प्रथम त्रयं संस्कृत भाषया चतुर्थन्तु "हिन्दि"भाषया निवद्धं। पुस्तकेषु वर्णित विषयाश्च ग्रन्थतान्नैव स्थिरीकरणीयाः। पुस्तक पाठेन रचयितुः कवित्वं भक्तिमत्तत्वञ्चास्माभिरधिगतं। प्रायः सर्व्वे एव श्लोकाः सुललित पदविन्यासा भावगम्भीराश्च। आशास्महे पुस्तकार्थवत्या सर्व्वे एव भक्ताः प्रीति मुपालभेरन्। रचयितुः सकाशात एव पुस्तकानि लब्धव्यानि। वर्त्तमान समये संस्कृत रचयितारो विरल प्रचारा इति अस्यात्र मुद्यमः सम्यक् प्रशंसनीय इति शम्॥

## संस्कृतोपाधिपरीक्षा—१९०७।

### व्याकरणस्य चतुर्थपत्रम्।

१। सौहार्दसौहार्द्दयोर्व्युत्पत्तौ अर्थे च को भेदः? ६

२। समासान्तरेतरद्वन्द्वयोः प्राक्चोधे किं वैशिष्ट्यम्। ६

# आर्य्यप्रभा ।

 | सुदुर्लभाः सर्व्वमनोरमा गिरः | 

## माघावतरणिका ।

निर्धौयतां त्रिविधिस्माघः * शिखण्डाधेव योगतः ।
माघीनाम्ना समाख्यातो मास एष समागतः ॥

## आश्रमोत्सवः ।

अद्य सौर माघस्य अष्टाविंशतितमो दिवसः । उषा सिमन्तिनी दिनकरकर-रागैरात्मानं मण्डयन्ती चिरप्रियस्याम्बरमणि हृदयं प्रतीक्षते । अहो आश्चर्य्यमयं सन्दृश्यते सुनासीरशासितदिक्-कामिनीभालतटे सिन्दुर विन्दुरिव दिवसकरः । नमस्तुभ्यं जगत्-पालकाय रविर्वे । चिरमेव समुदितो नन्दयस्व नो मनांसि । इयम्परतस्तटिनी कल्लोलरवै र्विमोहयति श्रोतृणां मनांसि ।

* मा न विद्यते अघं पापं यस्मिन् स माघः निष्पाप इत्यर्थः ।

आश्चर्य्य माश्चर्य्यं !! अमुष्मात् गिरिकन्दरोदरादाविर्भवन्ति दिवसकरकरसंगदर्शन-जनितयेर्षया इव लोकलोचनावरणाय कुज्झटिकाजालम्। अहो अस्माकं महानुभूतिमादर्शयन्त इवा मुष्मिन्नुत्सव दिवसे विहगाः सानन्दमनसो यूथनिबद्धा इतस्ततः उड्डीयन्ते, कूजन्ति च मनोहरम्। अद्य उत्सव इति न पुनरस्माकमेव, परन्तु निखिलानामेव भारतीयानाम्।

फलति कल्पतरुर्बहूनि फलानि। प्रांशवो वृक्षारोहणपटव आकर्षणोपायायो वा सर्व्वे अश्नन्त स्तान्यमृतफलानि चिराय जरामरण-रोगशोकक्षुत्पिपासादिविरहिता विराजन्ते। किन्तु यदि केचन वृक्षारोहणापटवः आकर्षण्या च विरहिताः वामना स्तत्रावस्थिताः, क्षुत्पिपासा-समाकुलाः फलास्वादन विमुखा अन्योन्यं मुखमालोकयन्तः "हा पेयं, हा भोज्यं" इति चीत्कुर्व्वन्ति, अत्रान्तरे तद्दुर्दशादर्शन दयार्द्र मानसेन कल्पतरुणा तेभ्यः प्रेष्यते कदाचित् किमपि सहस्रजन सेवनीयं चिराय जरामरण नाशकरं फलं केनापि पुरुषधौरेयेण, तदा न किमु स क्षणस्तेषां क्षणदो भवेत्? तदद्यास्माकमपि उत्सवोच्छ्वासः समुदितः समुचित एव। अस्मिन्नेव माघस्याष्टाविंशतितमे दिवसे कल्पतरुणा अस्मभ्यमपि किमपि जरामरणनाशकं फलं कल्पितम्। अस्मिन्नेव दिवसे श्रीश्रीमन्महर्षिः पूर्णानन्द स्वामी अस्मभ्यं तत्फलमाहर्त्तुं कल्पद्रुम सविधे उपातिष्ठत्।

यदा घोरेण धर्म्मदारिद्र्येण विमोहिता भारतीया मरुमरीचिका मिवोदन्यन्तः अपथमपि सिषेविरे, यदा धर्म्मविप्लवात् कुतर्कप्रतिष्ठापकैः सरलमतयो धर्म्मरता अपथे पदं कारिताः, यदा च ब्राह्मधर्म्माभ्युत्थानात् प्रतिदिनं सहस्राणि द्विजतनयानां पवित्रधवित्राण्युपवीतानि खण्डितानि धर्म्मार्थिभिः सविस्मयं सभयं सभक्तिकञ्चालोकितानि,

तदा अन्तमेभ्यः अलसेभ्यः विपथगतेभ्यश्च नो दयार्द्रचित्तः तत्रभवा-नयमेव महात्मा "अपिनाम पुरासीत् हिन्दुधर्म्म इति कश्चनः पदार्थ विशेषः" इति जपन् मनसा खिद्यमानः प्रार्थित कल्पवृक्षस्य कस्यचिद् योगिनः समीपे अस्मिन्नेव पावने दिवसे उपस्थितः। अस्मिन्नेवाह्नि कल्पद्रुम देशीय स्तत्रभवान् योगिवर्य्यः अमोघ मघौघनाशकं देवाना-मपि दुर्ल्लभतरं फलमेकं तत्पाणिना अस्मभ्यं प्रैरिरत्। तत्-किमु नायमुत्सवकरो दिवसः? महार्घ्यः सुप्रभातश्चास्माकमयं दिवसः। तदद्य जगत्पुर आश्रमे महानुत्सवः प्रवृत्तः।

अयं हि महात्मा १७७६ तमे शकाब्दे सौर भाद्रस्याष्टाविंशे दिवसे जनिमलभत। यथाकालं विद्यामुपार्ज्जयन् सहैव वयोवृद्धया धैर्य्य तितिक्षा दाक्षिण्यादिभिः सद्गुणैः प्रतिवेशिनो विमोहयन्, "अयं विहास्यति गृहं वीतराग" इति कस्मादपि सन्न्यासिन आकर्ण्य, समुद्विग्नमानसेन तत्पित्रा षोड़शवर्ष देशीय एव परिणयदाम्ना शृंखलितः विलाससामग्री-सम्भारोपभोगाय च प्रयुक्तः, अष्टादश वर्षीयः ब्राह्मधर्म्माभ्युदयमालोकयन् गृहीततद्धर्म्मोऽपि "किं नासीत् हिन्दूनां कश्चन धर्म्म" इति मनसालोचयन् कस्माच्चित् सन्न्यासिनः सिद्धाश्रम वृत्त माकर्ण्य, मातुराकल्पपेटिकां गृह्णन् विक्रीय च तन्मात्रसम्बलो गृहीतकम्बलो नेपालादिदेशानतीत्य हिमाचलोप-त्यकावर्त्तिनं सिद्धाश्रमं जगाम। तत्र च पञ्चवर्षेषु योगचतुष्टयीं अभ्यस्य भारतदुर्द्दशाकथाश्रवणात् दयार्द्रेणाश्रमगुरुणा "भारते ब्रह्मचर्य्याविर्भावाय यतस्व" इति समादिष्टः सतीर्थेन श्रीमता पशुपति नाथेन सममवतीर्य्य हिमाद्रेः, पञ्चशाणि वर्षाणि काश्मीर-हरिद्वार कुरुक्षेत्रादि देशेषु अटाट्यमानः पुनरागत्य छलतो वङ्गदेशं, पशुपक्षि समाकुले जनमानवरहिते चट्टलशिखरिशेखरे कटुम्ललवणादि

राजसान् पूति पर्य्युषितादितामसांश्च ऋषिभिः प्राचीनैरवगीतान् आहारान् परित्यजद्भिः, कन्दमूलादि सात्त्विकांश्चाभ्यवहरद्भिः कतिचनैः स्वाध्यायनिरतै र्बालब्रह्मचारिभिः, योगचर्य्यानिरतैश्च यतिभिरध्युषित शालवालैर्ललितरुभिः समन्ततः सुशोभित स्वाध्यायाध्ययन ध्वनितोटज जगत्पुर नामाश्रमपद प्रत्यष्ठापयत् । "स्वाध्यायोऽध्येतव्य" इत्यादि श्रुति बहुमन्यमानेन तत्रभवता चतुष्पाठी अपि प्रतिष्ठापिता काचित् । तत्र आश्रमस्था ब्रह्मचारिणः अन्येच नानादिग्देशागता गृहमेधिनश्छात्राः अधीयते न्याय वेदान्तादि शास्त्राणि । एतद्विद्यालयाध्यापकेनैव प्रकाशिता आर्य्यप्रभा प्रतिमास वाचकमहोदयानां पाणिमुपसर्पति । अस्य आश्रमस्य मूलीभूतेन स्वामिना अस्मिन्नेव दिवसे दिव्यज्ञानाङ्कुर उपलब्ध इति अद्यास्मिन् महानुत्सवः प्रवर्त्तते प्रतिवर्षं ब्रह्मचारिणाम् ! तथाहि केचित् कीर्त्तयन्ति भगवतो महेश्वरस्य गुणकथां, केचित् स्तुवन्ति भगवन्तमखिललोकतारक जगदीश, शृणवन्ति केचित् गुरोः सिद्धान्तवचांसि, फलदलादिभिः पूजयन्ति केचन गुरोः श्रीपादकमलम्, "बालकप्रियः स्वामीति" केचन भोजयन्ति नैकटिकग्रामीणान् द्वगैकादशवर्षदेशीयान् बालकान् । नपुनः केवल जगत्पुर आश्रमवास्तव्यानां, अपितु अद्य सुप्रभात भारतवासिनामेव, दक्षारतावनति प्रतीकार करणिप्सुभिस्तत्रभवद्भिः सिद्धाश्रम गुरुभि रस्मिन्नेव पावने दिवसे आत्मीयः प्रयासः प्रकाशितः । तदायान्तु भ्रातरः ! सर्व्वे वयमेकचित्तीभूय कल्पतरोरप्रार्थितोपनत तदमृतफल आस्वादयन्तो जरामरणविरहिता विराजामहे । इति शम् ।

कस्यचिद् गुरुचरणाश्रितस्य ।

---

# न्यायतत्त्वालोचनम्।

नमो गोतमादिभ्यः पूर्व्वेभ्यो गुरुभ्यः।

कस्मै अर्थाय न्यायशास्त्रम् अध्येयम्? तत्प्रकारो हि गोतमो निःश्रेयसं तदर्थत्वेन असूत्रयत् "प्रमाणप्रमेय संशय प्रयोजन दृष्टान्त सिद्धान्तावयवतर्कनिर्णय वादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानात् निःश्रेयसाधिगमः इति।" किमिदं निःश्रेयसं नाम? निःश्रेयसं मुक्तिः मोक्षः अपवर्ग इति अनर्थान्तरम्। स्मरति च अमरः "मुक्तिः कैवल्यनिर्वाण श्रेयोनिःश्रेयसामृतम्। मोक्षोऽपवर्गः" इति।' मोक्षात्मकं हि निःश्रेयसं परमपुरुषार्थः यस्मिन्नधिगते नापरम् अधिगन्तव्यम् अवशिष्यते। प्रमाणादीनां न्यायसूत्रप्रतिपादितानां तत्त्वज्ञानात् ईदृक् निःश्रेयसं भवितुमर्हति नवेति पृच्छा स्वतएव समुदेति आधुनिकानाम्। भाष्यकृतो वात्स्यायनात् प्रभृतिभिः सर्व्वैरेव टीकाकृद्भिर्निःश्रेयसपदेनात्र मोक्षो बोध्यते इत्यभिहितम्। तदस्मभ्यं न रोचते। वयं त्वत्र निःश्रेयसपदस्य कल्याणमात्रवचनत्वं प्रतीमः। तथाहि निःश्रेयसं तु कल्याणमोक्षयोः शङ्करे पुमान् इति कोशः, निश्चितं श्रेयो निःश्रेयसम् इति च वैयाकरणप्रसिद्धिः। निश्चितञ्च श्रेयो नापरं मोक्षादर्हति भवितुमिति नास्ति नियमः। वस्तुतस्तु येन शास्त्रेणाधीतेन यत् प्रयोजनं सिध्यति तदेव तत्र निःश्रेयसत्वेन व्यपदिश्यते। तथा चोक्तम् उद्द्योतकरेण न्यायभाष्यवार्त्तिके सर्व्वासु विद्यासु तत्त्वज्ञानमस्ति निःश्रेयसाधिगमश्च। त्रय्यां तावत् किं तत्त्वज्ञानं कश्च निःश्रेयसाधिगम इति? तत्त्वज्ञानं तावत् अग्निहोत्रादिसाधनानां

स्वागतादिपरिज्ञानं अनुपहतादि परिज्ञानं च। निःश्रेयसाधिगमोऽपि स्वर्गप्राप्तिः। तथाहि तत्र स्वर्गः फलत्वेन श्रूयते इति। अथ वार्त्तायां किं तत्त्वज्ञानं कश्च निःश्रेयसाधिगम इति? भूम्यादिपरिज्ञानं तत्त्वज्ञानं भूमिः कण्टकाद्यनुपहतेत्येतत्तत्त्वज्ञानं कृष्याद्यधिगमश्च निःश्रेयसमिति तत्फलत्वात्। दण्डनीत्यां किं तत्त्वज्ञानं कश्च निःश्रेयसाधिगम इति? सामदानदण्डभेदानां यथाकालं यथादेशं यथाशक्ति विनियोगस्तत्त्वज्ञानं निःश्रेयसं पृथिवीजय इति। इहत्वध्यात्मविद्यायाम् आत्मज्ञानं तत्त्वज्ञानं निःश्रेयसाधिगमोऽपवर्गप्राप्तिः इति। एतावता वार्त्तिक प्रवन्धेन इदमेव प्रतिपादितं भवति यत् प्रतिविद्यं निःश्रेयसं भिद्यते। तच्च मोक्षादृते अन्यदपि यथायोगं भवितुम् अर्हति वेदे स्वर्गः वार्त्तायां कृष्याद्यधिगमः दण्डनीत्यां च पृथिवीजय इति। निःश्रेयसपदस्यात्र सामान्यकल्याण वाचकत्वे, न निहतार्थत्वं दोषः कविभिस्तदर्थे वहुशः प्रयुक्तत्वात् सूत्रकारैश्च। तद् यथा—

नैःश्रेयसौ तु तौ ज्ञेयौ देशकालाविति स्थितिः।

महाभारतम् १।१४०।८५

मया निगदितं सर्व्वं पथ्यं निःश्रेयसं परम्।

महाभारतम् २।७३।३

पूर्व्वस्मिन् पूर्व्वस्मिन् वर्णे निःश्रेयसम् भूयः।

आपस्तम्बधर्मसूत्राणि १।१।८

न्यायेनाधीतेन किं परिज्ञातं भवति? किं वा प्रयोजनं सिध्यति? यद्धि परिज्ञायते तज्ज्ञानं तत्त्वज्ञानम् यच्च प्रयोजनं फलति तत्प्राप्ति निःश्रेयसाधिगमः इति। न्यायेनाधीतेन किं परिज्ञायत इत्यत्र सूत्रकृद्वचनमेव प्रमाणम्। सूत्रितञ्च भगवता

"प्रमाणप्रमेयसंशय प्रयोजन दृष्टान्त सिद्धान्तावयवतर्कनिर्णय वादजल्प वितण्डाहेत्वाभासच्छल जातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति। एतेन अधीते न्यायशास्त्रे प्रमाणादीनां षोड़शानामेव तत्त्वज्ञानं भवतीति मतं सूत्रकृतोऽसन्दिग्धं प्रतिभाति कण्ठत एव तथोक्तत्वात्। अतएव चेह "आत्मज्ञानं तत्त्वज्ञानम्" इति यद् वार्त्तिककृताभिहितं तद्धेयम् उपजीव्यविरोधात्। तेन चास्य न्यायसूत्रस्य अनात्मानमधिकृत्य प्रणीतस्य अध्यात्मविद्यात्वमपि तदुक्तं निराकृतं वेदितव्यम्। अथ न्यायेन किं प्रयोजनं सिद्धति इति चिन्त्यते। एतद्धि प्रकृत्य भाष्यकृता कश्चित् श्लोक उदाहृतः। यथा—

प्रदीपः सर्व्वविद्यानाम् उपायः सर्व्वकर्म्मणाम्।
आश्रयः सर्व्वधर्म्माणां विद्योद्देशे प्रकीर्त्तिता॥

प्रथमं तावत् न्यायः सर्व्वविद्यानां प्रदीपः। यथा प्रदीपोऽर्थान् प्रकाशयति, तथा अधीतोऽपि न्यायः सर्व्वाणि शास्त्राणि प्रकाशयति। न्यायेन बुद्धिस्तीक्ष्णा शास्त्रान्तर प्रवेश निपुणा जायते। अत्र वङ्गीय नैयायिक प्रवरा एव निदर्शनम्। तेहि गुरोर्नियमपूर्व्वकम् अनधीत्यापि काव्येतिहासपुराणस्मृतिसांख्यवेदान्तादीनि तत्र तत्र अनधीत शास्त्रेष्वपि न्यायापादिततैक्ष्ण्यशेमुषीसचिवाः कृतप्रवेशास्तत्तच्छास्त्राणि अध्यापयन्तो विस्मयमुत्पादयन्ति विजानताम्। अपि च आधुनिक ग्रन्थाः अलङ्कार स्मृतिवेदान्तादि शास्त्रीया अपि नव्यन्यायपरिकल्पित भाषायां प्रायशो निवद्धा उपलभ्यन्ते। के नाम अलङ्कारमपि रसगङ्गाधरं काव्यप्रकाशादर्शञ्च न्यायतत्त्वाज्ञाः वुध्येरन्? का कथा अद्वैतसिद्ध्यादीनां दर्शनग्रन्थानाम्। अतो न्यायः सर्व्वविद्यानां प्रदीप इत्यवदातम्। किं वहुना युरोपीया अपि पण्डिता न्यायं

विज्ञानानां विज्ञानम आचक्षाणा एतदेव न्यायस्य प्रयोजनं समर्थयन्ति ।

द्वितीयतस्तावत् न्यायः सर्व्वकर्म्मणां उपायः । अधीते न्याये बुद्धिस्तीक्ष्णा भवति, तीक्ष्णया च बुद्ध्या सर्व्वाण्यपि कर्म्माणि सुकराणि भवन्ति । न्याय निवेशित चित्तानां केषाञ्चित् पण्डितानां वाह्यज्ञान शून्यत्वं अर्थकामाधिगमा नैपुण्यञ्चावेक्ष्य न्यायस्य सर्व्वकर्म्मोपायत्वं नाभिमुमह्यं यतस्ते शास्त्ररसिकाः शास्त्रमेव परं मन्यमानाः शास्त्रस्य सुखेऽनासक्तमानसा अर्थकाम चिन्तां नैव निरन्तरं कुर्व्वन्ति । ते हि पुरुष प्रवराः समाजस्य भूयसे कल्याणाय भवन्ति । युरोपीयाः निउटन् काण्ट प्रमुखाः महीयांस ईदृश एवासन् । तेषाञ्च विज्ञानपरता अर्थाद्यरतिश्च यूरोपीयानां सकल श्रेयोमूलं । अस्म देशे च ईदृशानां महापुरुषाणामभाव एव अधुना सर्व्वतो विद्यते । अपरञ्च नैयायिकाश्चेत् अर्थकामयोः मनः समादधति तर्हि तेषां अर्थ-कामाद्यधिगमोपि भूयान् भवति इत्यत्रापि निदर्शनमस्ति । अतो न्यायस्य कर्म्मोपायत्वं सिद्धम् ।

तृतीयतस्तावत् न्यायः सर्व्वधर्म्माणाम् आश्रयः । न्यायमाश्रित्यैव धर्म्ममीमांसा विधेया । तथा च स्मृतिः "धर्म्मशास्त्रविरोधे तु युक्तियुक्तो विधिः स्मृतः" ( नारदः ) "प्रत्यक्षञ्चानुमानञ्च शास्त्रञ्च विविधागमम् । त्रयं सुविदितं कार्य्यं धर्म्मशुद्धिमभीप्सता ॥ आर्षं धर्म्मोपदेशञ्च वेदशास्त्रा विरोधिना । यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतरः ॥" (मनुः) "कारणाद्धर्म्ममन्विच्छेन्न लोकचरितञ्चरेत् ।" ( महाभारतम् )"युक्तिहीनविचारेतु धर्म्महानिः प्रजायते ।" युक्तिहीनविचारे धर्म्महानेः वहूनि उदाहरणानि अधुना अस्मत् समाजे उपलभ्यन्ते । तथाहि धर्म्मेनैवोपायेन अर्जितस्य वित्तस्य

दानाद् धर्म्मो भवतीति * शास्त्रे जागरूकेऽपि बहुवित्तायाससाध्यं शारदीयमहोत्सवादिकं श्राद्धादिभूरिभोजनादिकञ्च कुर्व्वन्तम् अधर्म्मोपार्ज्जितवित्तम् अपि प्रशंसन्ति आधुनिकाः पण्डितब्रुवाः, निन्दन्ति च धर्म्मविचारनिरतान् अज्ञातवाह्याडम्बरान् सत्यसन्धानपि पुरुषधौरेयान् । एतत्खलु न्यायाज्ञतायाः फलम् । अतो धर्म्मनिर्णयकामैः सर्व्वथा अध्येतव्यमेव न्यायशास्त्रम् ।

पक्षिलस्वामिभूतवचनोपात्तानि न्यायाध्ययन प्रयोजनानि विभज्य वर्णितानि । एतान्येव न्याये निःश्रेयसम् न तु मोक्षः । अत एव "निःश्रेयसाधिगमोऽपवर्ग प्राप्तिः" इति वार्त्तिकोक्तं, नादरणीयम् ।

सिद्धेऽपि न्यायस्य अनध्यात्मविद्यात्वे, न्याये आत्मानात्मविचारो नास्तीति न मन्तव्यम् । 'अपाय' सिद्धान्तः, प्रमाणतत्त्वे (विचारतत्त्व कथातत्त्वे वा *) न्यायसूत्राणां तात्पर्य्यम् । प्रमाणतत्त्वमेव तेषां मुख्यो विषयः इतरत् तदङ्गम् ॥ इति वन्द्यघटीय—[ एम्, ए ] श्रीवनमालि वेदान्ततीर्थ-वेदान्तरत्नस्य कृतिरियम् आर्य्यदर्शनालोचने सतां मन आकर्षतु, ऋषिवाक्यानां सद्व्याख्यायै च कल्पताम् । इति शम् ॥

---

* अन्यायोपगतं द्रव्यमभीक्ष्णं योऽल्पपण्डितः ।
धर्म्माभिशङ्की यजते न स धर्म्मफलं लभेत् ॥
न धर्म्मः प्रीयते तात दानैर्दत्तैर्महाफलैः ।
न्यायलब्धैर्यथा सूक्ष्मैः श्रद्धापूतैः स तुष्यति ॥

महाभारतम् । अश्वमेधपर्व्व ॥

* तिस्रः खलु कथा भवन्ति वादो जल्पो वितण्डा च । , कथा च यूरोपीयैः "डायेलेक्टिक," (Dialectic) इति शब्द्यते ।

# गुरुशिष्य संवादः ।

( पूर्व्वतोऽनुवृत्तः । )

किन्तु हन्त !! किंवा तदानीं चैतन्येन ? "चौरैगते वा किमु सावधानैः" सर्व्वएवपन्थान स्तदानीं तेषां कण्टकाकीर्णाः, नास्तिच समय स्तदुत्पाटनस्य, सुतरां पदेपद एव केवल मनर्थोपात आपतति । विद्योपार्ज्जनकालस्तु ललना लालनेनैवापलापितः, अहो का गतिः ? पितृभिश्चिन्तितया क्लेशसहिष्णुतापि नाभ्यस्ता, सुतरां कथं कथमपि अर्थावगमसामर्थ्य मनीक्षमानाः अर्थेन च विना संसारसाधनं सर्व्वथै-वाशक्यं मन्यमानास्ते हताशाः सर्व्वा आशाः शून्या अवलोकयन्ति । सर्व्वाभिश्च दुश्चिन्ताभिर्युगपत् समाक्रान्ताः सन्ततं विचिन्त्यापि नान्तः करणं शान्तयितुं शक्नुवन्ति । येतु सुविलक्षणविचक्षणता-साध्यं संसार संरक्षणं क्षणमपि नाकरिष्यन् सहसा शिरसि वर्त्तमानं तत्तेषां कीदृशं क्लेशसाध्यमिति त एव जानन्ति, विशेषतस्तु सत्शिक्षोपदेश विरहिताः । परन्तु समतीवासोढ़ेण संसारभारेणाभिभूतानां तेषां शरीरमपि क्षीणतरं जायते, ततश्च अस्ति नास्तीति विवेकविहीनै-र्व्वालकैराकुलीभूय याचनायैवागत्या मतिमर्पयन्ति, किन्तु तद्याचन-मपि अनभ्यस्ततया मरणादतिरिच्यते, तदुक्त मभियुक्तैः—

नवीन दीनभावस्य याचमानस्य मानिनः ।
वचो जीवनयोरासीत् पुरोनिःसरणे रणः ॥

याचन स्थानमपि साम्प्रतं विरलमेव, अशोपेतं दानन्तु नास्तीत्यपि नात्युक्तिः, विशेषतस्तु अशिक्षितेभ्यः । तस्मात् दुर्भिक्षादिदोष सङ्कुलेऽस्मिन्काले भिक्षालब्ध धनैः संसारनिर्व्वाहः सर्व्वथैवाशक्य इति

क्रमशस्ते एवं विपर्य्यस्ताभवेयु र्यत्किंकर्त्तव्यविमूढ़ा इतस्ततश्चलन्तः केवलमशान्तिमेवलभन्ते। प्रत्युपकार प्रत्याशा विरहात् के पि तदानीं तद्‌गृहं नायान्ति। बान्धवास्तु अन्धा इव नोपसर्पन्ति। समवयस्का अपि विज्ञतमास्तस्कानिव परित्यजन्ति। अन्ये च परिचिता अर्थं-प्रार्थन शङ्कातङ्किता इव तद्दर्शनपथं जहति। किन्तु केवल मुत्तमर्णा एव स्वद्रव्याणं वंशम्यमाणाः परिणाम विरसामपि दयालुतां वितरन्ति। अहो तद्दयालुतापि कियत्स्थायिनी? सम्पदनुगुणमेव ते ऋणं ददति, कियत्परमेव कुशीदादानकर्कशव्यवहारेण भृशं दर्शयेयुः। नितरां तेषां दर्शनमपि तदानीं दुर्द्धर्षं भवेत्।

हा हन्त! अन्तःपुरमपि न पूर्व्ववत् सन्तोषयेत्, यस्याः सम्मोह-ध्वान्तान्तरिताः किमपि पूर्व्वं नालोकयन्, यत्कृते अन्यस्मिन्नकृतश्रमा इदानीं सर्व्वकर्म्मानर्हाः सञ्जाताः, यदासक्ताः परमभक्तिभाजनयोर्जग-देकहितार्थिनोः पित्रोरपि विरक्ताः आसन्, प्राणप्रतिमा प्रियतमापि सा न पूर्व्ववदपूर्व्वच्छविभिः समीप माविर्भवति, नच दर्शनमात्रेण तदङ्गमङ्गलार्थिण्या अङ्गभङ्ग्या समालिङ्गते, नापि तदसामान्यलावण्य सन्दर्शनेन धन्यत्व मापादयति, नापि च नितरा मामोदप्रदेन सुमधुर संवादेन चित्तं प्रसादयति। परन्तु पश्यन्ती एवाति तरामुग्रमूर्त्तिः संसारस्य नानारूपाभाववार्त्तया सर्व्वथा स्फुर्त्तिभ्रंशकरीमार्त्ति मेवाभि-वर्द्धयति। "येन च पुत्रकलत्रादीनां साधारण भरणपोषणादिकमपि सम्पादयितुं न शक्यते विवाहकरणमेव तस्यातितरामसङ्गतमिति" दुर्व्विसह विषमविषोपम वाक्यवर्षणेन विमर्शयितुमपि न विरमेत्। तदानीञ्च तेषां मनसांभावः कीदृशोभवेदिति भावयितुमपि बिभेमि। असच्चरित्रा एव स्त्रियः पतिं प्रति तथा समाचरन्तीत्यपि नो चिन्त्यतां यस्मादभाव एव स्वभाव मपि परिवर्त्तयेत्। विलासोचितं वेशभूषा-

दिकं नैव वा सम्भाव्यतां, किन्तु यदि, लज्जापवारकं वसनं जीवनैक साधन मुदरान्नमपि नो सम्भवेत्तदा नितरां क्षुत्क्षामायाः मस्हिष्णुता कियत्क्षणं स्यातुं क्षमेत ? विशेषतस्तु अवस्थादि विज्ञान विकलो-बालो यदा क्षुधातिचञ्चलो मातुरञ्चलं विधृत्य भोजनीयं याचते तदानीं तत्प्रदानासामर्थ्ये च कोमलात् कोमलतरं ललनाहृदयं कियत्कालं धैर्य्यमालम्बितुं शक्नुयात् ? तदानीं स्वीयदुरदृष्टमेव प्रथमं विनिन्द्य सर्व्वथाभिनन्दनीयं वन्दनीयमपि पतिं अनिच्छयापि धैर्य्यच्युतेव तिरस्कुर्य्यात्। तिरस्कारा करणेपि स्त्रिया यदि तादृशी अवस्था स्वच्छैववातितरां दुःखस्य नेत्रपथवर्त्तिनी भवेत् तदा सोपि किं धैर्य्यमाश्रयितुं प्रभवेत् ? परन्तु नितरामधीरः "हे परमेश्वर करुणामय ! नैवशक्नोम्यतःपरं, विकटं दृश्यं सोढुं सत्वरमुपसंहरमा" मित्युच्चैरुच्चरन् भ्रमभ्रमणो मूर्च्छापन्नः निमीलिताक्षो मृत्युमेवापेक्षेत। कदाचि देतादृगवस्थाया मुद्बन्धनादिना आत्महत्याविवरण मपि श्रूयते।

तस्माद् यावच्च पुत्रादीना मध्ययनाद्यनन्तरमर्थोपार्जनादि सामर्थ्यं न भवेत्तावत् कदापि परिणाम दुःखावह विवाहबन्धनाद्यर्थ मुद्योगो नैव कर्त्तव्य स्तच्छुभार्थिभिरभिभावकवर्गैः। अतएवास्माकं धर्म्मशास्त्रेपि गर्भाष्टमे द्वादशे वा उपनयनात्परं द्वादशवर्षं गुरुकुले ब्रह्मचर्य्यं पूर्व्वकाध्ययनं विधाय ततः समावर्त्तनानन्तरं विवाहस्य प्रशस्तः कालो निर्द्दिष्टः, तस्मात्तस्य यस्य गर्भाष्टमे उपनयनं तस्यापि विंशतिवत्सरात् पूर्व्वं नैव विवाहः समभूत्। एवं शास्त्र मर्य्यादानुसारेण कार्य्यं मनुष्ठितवतां निष्ठावतां विंशाधिकवत्सरमस्खलिता-वस्थाया मवस्थामात् सुस्थशरीरतया सबलहृदयामां मध्ययनादिकं निर्व्बाधं समपद्यत। ततः कृतदारपरिग्रहाणाञ्च संयमिनाव्यग्रमनसां

तेषां सन्ताना अपि यथाकालोत्पन्नाः पितृगुणसम्पन्ना एव दीर्घायुष आसन्। आधुनिकानां पुनर्बालविवाह प्राबल्यादल्पकालेनैव दौर्ब्बल्यमधिगच्छतां अपरिणत मस्तिस्कावस्थायामेव ललनायां चित्तस्खलनात् समूलोत्पाटित सकलोन्नतिमूलैकस्वास्थ्याना मवस्थातु प्रत्यक्षत एव दृश्यते। प्रबलाध्यवसायसाध्य मध्ययनादिकमपि कुतस्तादृशव्याधिवाध्यानां, केवलमौषधपथ्य तथ्यानु सन्धानेनैव गच्छति तेषां समयः। परन्तु तादृश रोगग्रस्तानामपि असंयतचित्ततया व्यग्राणां अयथोचितकालोत्पन्नाः सन्तानाः पितृरोगादिसम्पन्ना नितरां क्षीणा विपन्ना म्रियमाना एव जायन्ते। अयञ्च दृष्टान्तः "ब्रह्मचर्य्ये प्रतिष्ठायां वीर्य्यलाभ" इति सिद्धान्तं सर्व्वथैवाभ्रान्तं संस्थापयति। किन्तु आश्चर्य्यं कालप्रभावात् सर्व्ववीर्य्यैकवीजस्य तद्ब्रह्मचर्य्यस्य नामापि प्रायोविलुप्तं। तदनुष्ठानमतितरां कष्टसाध्यमिति केपि न तत्र प्रवर्त्तन्ते। यदि केचन कदाचित्तदाचरितुमभिलषन्ति तदैव तदभिभावका अन्येपि आत्मीयस्वजना स्तान्प्रति हताशाः नानाविध प्रतिकूल दृष्टान्त प्रदर्शनेन प्रलोभनादिसन्दर्शनेन च येन केनचित् प्रकारेण यावत्तान् प्रत्यावर्त्तयितुं न शक्नुवन्ति यावच्च विवाहवन्धनादिना संसारिणः कर्त्तुं नार्हन्ति तावत्कथं कथमपि न शान्तिं लभन्ते। अहो कालवैचित्र्यं संसाराश्रमे यदि सर्व्वथा निष्कर्म्माणः कुकर्म्माणोपि वा तिष्ठन्ति, तदा तदर्थं यदि नानाविध मसहनीयं लोकगर्हनीयमपि दुःखं सहनीयं भवेत् यदि वा संसाराश्रमे स्थित्वा नानाविधासदनुष्ठानेनाकाले कालकवलमपि समालभेरन् तदापि तदभिभावका स्तथा न खिद्येरन् यथा तेषां ब्रह्मचर्य्यादि परिग्रहे। सुतरामेवमधःपतिते अस्मिन् देशे पूर्व्ववद्ब्रह्मचर्य्यस्य प्रवर्त्तनं भवेन्नवेति सर्व्वान्तर्यामी परमेश्वर एव जानाति। परन्तु यदि सर्व्वानर्थमूलीयं वालविवाहोपि

समाजान्नविलोयेत तदा कथं कथमपि शुभं न भवेत् ।

किन्तु वत्स ! मैवं मंस्थाः यदनेन कन्यकानामपि बाल्य विवाहो मया निरषेधि, तासां पुनर्व्बाल्य विवाह एव युक्तः, यतः पति गृह एव कन्यकानां मतिर्व्बिमला सुविशुद्धाच भवति । तत्रैव ननान्दृ प्रभृतीनां निन्दाभयात् श्वश्र्वादि गुरुजन गौरवाच्च लज्जाशीलता सांसारिक कर्म्मणि नैपुण्यञ्च जायते, अन्यच्च प्रतिपिचसञ्चारतया चाञ्चल्यमपि न पद मापद्यते, वहुभिरेव निषिद्धाभाषणतया वाचालतापि चालयितुं न शक्नोति । पितृवेश्मनि पुनःसम्यक् शासन-व्यवस्था-विरहात्बिःशङ्कतया कथञ्चित् स्वातन्त्र्येण च चाञ्चल्यादिदोषाणां सुयोग स्तिष्ठेत् । पित्रोः समादरेण च दरविरहात् यथेच्छमाचरितुं वाञ्छा जायते । तस्मादेवातिसूक्ष्मविवेचन चतुरैरस्माकं शास्त्रकारैर्दशमावधि-रेव कन्याविवाहस्य प्रशस्ततरः कालो निर्द्दिष्टः । असंस्कृताया रजो-दृष्टि दोषश्रुतिरपि नानाविध सदभिसन्धिमूला तिष्ठति । सुतरां दर्शितयुक्त्यादिभिर्विंशतिवत्सरात् परं पुंसां कन्यकानाञ्च दशमाभ्यन्तर एव यथा विवाहो भवेत्तत्रैव यत्नोविधेयः सर्व्वेषामेवाभिभावकानामिति किमत्रानल्पजल्पनेन ? कालोहि वलवत्तरः ।

क्रमशः—

---

## प्राचीन भारत चित्रम् ।

प्राचीन भारत चित्रं मनसा चिरंस्मरन्ती प्रवलानुतापानलेन दंदह्यमाना वर्त्तमान भारतवासिनामन्तिके रोदनाक्षमापि करुणस्वरेण रोदिमि । गुरुमुखादाकर्ण्य भारतस्य प्राचीनेतिहास-पाठेन च

यदवगतं सम्यक् ज्ञान विरहितयापिमया तेन प्रतीयते यद्भारतवर्ष एवैकदा सर्व्वविषये पृथिव्याः शीर्षस्थानीय आसीत्।

पुराखलु भारतवासिनः प्रायोब्रह्मचर्य्यं गार्हस्थ्य वाणप्रस्थ सन्न्यासेति आश्रम चतुष्टय भजमानाः स्वस्वाश्रमोचित कार्य्यानुष्ठानपरायणा आसन्। चतुराश्रमिणामेव मुख्योद्देश्यो धर्म्म एवासीत्। स्वाश्रमोचित व्यवहारेण च ते पृथिव्यां ज्वलन्तो दृष्टान्ताः चिरस्मरणीयाश्च। ते च प्रथमं ब्रह्मचर्य्याश्रमं प्रविश्य सात्विकाहारव्यवहारशिष्टाचारादिभि गुरुभक्ते रैकान्तिकीं पराकाष्ठां प्रदर्श्य स्वाभिलाषं सम्यग् विज्ञाय गुर्व्वाज्ञया परिचालिताः स्वाध्यायेन गुरुवसति मध्यवात्सुः। यथाविधि द्वादशवत्सर ब्रह्मचर्य्यान्ते आचार्य्यै र्ये समावर्त्तिता त एव संसाराश्रमं प्रविश्य सद्गुणादि सम्पन्नां कन्यामुपयम्य तस्यां पुन्नामनरकात्तारकं धार्म्मिकं पुत्र मुत्पाद्य गार्हस्थ्याश्रमोचित सदाचारेण सुखमन्वभूवन्। ततः पञ्चाशद्वर्षान्ते ब्रह्मचर्य्यात् प्रतिनिवृत्ते सर्व्वगुणसम्पन्ने पुत्रे भार्य्याया रक्षणावेक्षणभारं समर्प्य तयैव वा सार्द्धं वनमागत्य परे ब्रह्मणि चेतः समर्प्य तस्मिन् विलीना आसन्।

ब्रह्मचर्य्यञ्च—अष्टाङ्गमैथुन वर्ज्जनात्मकं, तथाचोक्तं—

स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणं।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।
विपरीतं ब्रह्मचर्य्यमेतदेवाष्टलक्षणम्॥

आहार संयमनादिकमपि ब्रह्मचर्य्याङ्गमुक्तं भगवता मनुना—

वर्ज्जयेन्मधुमांसञ्च गन्धं माल्यं रसान् स्त्रियः।
शुक्तानि यानि सर्व्वाणि प्राणिनाञ्चैव हिंसनं॥

अभ्यङ्ग मञ्जनश्चाक्ष्णो रुपानच्छत्रधारणं।
कामं क्रोधञ्च लोभञ्च नर्त्तनं गीतवादनं॥ इत्यादि—

वस्तुतो ब्रह्मचर्य्यप्रभावेनैव ते तादृग्वीर्य्यवन्त आसन्, तथाच योग-सूत्रं "ब्रह्मचर्य्य प्रतिष्ठायां वीर्य्यलाभ" इति। ब्रह्मचर्य्याभावादेवा-धुनिका क्षीणवीर्य्या अल्पायुषश्च भवन्ति यतो "मरणं विन्दुपातेन जीवनं विन्दुधारणा"दित्यादि शास्त्रमस्ति। अतएवान्यच्चोक्तं—

न तप स्तप इत्याहुर्ब्रह्मचर्य्यं तपोत्तमं।
ऊर्द्ध्वरेता भवेद्यस्तु सदेवोनतु मानुषः॥

ब्रह्मचर्य्य विहीनाना मध्ययनादिकमपि न निर्व्विघ्नं सम्पद्यते यत इन्द्रियसुख चिन्तयैव तेषां गच्छत्यधिकांशो समयः। अतएवोक्तं—

इन्द्रियाणां प्रसङ्गेन दोष मृच्छत्य संशयं।
संनियम्यतु तान्येव ततः सिद्धिं नियच्छति॥

तस्मादेवास्माकं धर्म्मशास्त्रे ब्रह्मचर्य्यादि विहीनाय अनधिकारिणे विद्यादानमपि निषिद्धं। तथाच मनुः—

विद्या ब्राह्मणमेत्याह सेवधिस्तेऽस्मि रक्ष मां।
असूयकाय मां मादास्तथास्यां वीर्य्यवत्तमा॥
यमेवतु शुचिं विद्या नियतं ब्रह्मचारिणं।
तस्मै मां ब्रूहि विप्राय निधिपाया प्रमादिने॥

अहो एतावद्दृष्टापि किं मस्माकं चैतन्यं न भवेत्?

सांख्य व्याकरणतीर्थ—श्रीवासन्ती ब्रह्मचारिण्याः
(जगत्पुराश्रमाश्रितायाः।)

# आर्य्यप्रभा ।

द्वितीयवर्षे { सुदुर्लभाः सर्वमनोरमा गिरः } चतुर्थसंख्या ।

## मासावतरणिका ।

सम्राट् शुभागमनतो जनयन् जनानां हर्षप्रकर्षमतुलं भरतस्य वर्षे ।
राज्याभिषेकजमहोत्सवमादधानो मार्गशिरस्मरणतां गत आगतोऽयम् ॥

## सम्राट्प्रशस्तिः ।

इंग्लण्डं सुखभाण्डमत्र सकलैः सन्मण्डनैर्मण्डितं
जन्मस्थानतयापि वाञ्छिततमं पुष्टिप्रदं तुष्टिदम् ।
भूस्वर्गप्रतिमं विहाय कृपया स्वं भारतं संश्रितः
सम्राट् पञ्चमजर्ज्ज् महोदय ! जय स्वस्थः स्वपत्नीयुतः ॥ १

पारावारमतीत्य दुस्तरतरं यद्भारते स्वागतं
हे कारुण्यनिधे ! तदत्र भवतो वात्सल्यमात्यन्तिकम् ।
एवं स्वीयदयावशंवदतया शश्वत् प्रजा रञ्जयन्
सम्राट् पञ्चमजर्ज्ज् महोदय ! जय स्वस्थः स्वपत्नीयुतः ॥ २

यत्रागत्य नृपाः पुराधिरुरुहुः सिंहासनं धार्म्मिकाः
यत्कीर्त्तिः समये गतेऽपि बहुले सर्वैः समाख्यायते ।
तद्दिल्लीनगरेऽधिराजमुकुटं बिभ्रत् स्वधर्मे स्थितः
सम्राट् पञ्चमजर्ज्ज् महोदय ! जय स्वस्थः स्वपत्नीयुतः ॥ ३

गीर्वाणी भवगेहिनी गणपतिः सूर्य्यस्तथा चन्द्रमा
ब्रह्मा विष्णुरुमापतिश्च सकलैर्देवैः समेत्योत्सवे ।
सर्वे मङ्गलमाचरन्तु भवतः संप्रार्थना नोऽनिशं
सम्राट् पञ्चमजर्ज्ज् महोदय ! जय स्वस्थः स्वपत्नीयुतः ॥ ४

सम्राड्-दर्शनजन्य-पुण्य-ममलं नो भारतीयप्रजा-
भाग्ये प्रागभवत्तदद्य सदयः सम्पाद्य संद्योतयन्।
औदार्य्यं नृपवर्य्य सर्वविषये वाञ्छाश्च नः पूरयन्
सम्राट् पञ्चमजर्ज्ज् महोदय ! जय स्वस्थः स्वपत्नीयुतः ॥ ५

दुर्वृत्तान् दमयन् रिपून् विनमयन् सम्मानयन् सज्जनान्
रक्षन् दुस्थजनान् स्वरक्षशरणान् मुग्धांश्च सम्बोधयन्।
प्राज्यं राज्यमिदं प्रशासदभयं कार्य्यैः प्रजा रञ्जयन्
सम्राट् पञ्चमजर्ज्ज् महोदय ! जय स्वस्थः स्वपत्नीयुतः ॥ ६

राजन् भारतवर्षहर्षजननः शान्तिं समासादयन्
पुत्रामात्यकलत्रबान्धवयुतो जीव्याश्चिरं सज्जनैः।
राजन्यैरभिनन्दितः स्वपरभूसंस्थैर्गुणैर्बाधितः
सम्राट् पञ्चमजर्ज्ज् महोदय ! जय स्वस्थः स्वपत्नीयुतः ॥ ७

सर्वेऽनन्तमुखैस्त्वदीयविजयं गायन्तु शान्ताश्चिरं
आनन्दोऽय-मनन्त-काल-मचलः स्वान्ते सम-स्तिष्ठतु।
भक्तिस्त्वय्यचला चिरं विलसतु प्रेम्णा यथाभीष्टदे
सम्राट् पञ्चमजर्ज्ज् महोदय ! जय स्वस्थः स्वपत्नीयुतः ॥ ८

## अभिषेक-महोत्सवः।

महामहिम-श्रीलश्रीयुक्त-सम्राट्-पञ्चमजर्ज्ज-महोदयस्य पूतचरिताया-स्तन्महिष्याश्च शुभाभिषेक-दिवसे———

जगत्पुराश्रम-मठेऽपि महासमारोहेणाभिषेक-महोत्सवः सम्पादितः। मार्गशीर्षस्य षड्विंशतितमे च तस्मिन् शुभेऽह्नि पूर्वाह्ने आश्रमप्रधानाध्यापकेन श्रीयुक्त-कुञ्जविहारि-तर्कतीर्थ-महाशयेन आश्रम-स्वामिना च स्वामिना श्रीयुक्त-पूर्णानन्देन सानन्दमभिवन्द्य भगवन्तं भूतभावनं नानाविधदेवार्च्चनादिना सम्राड्दम्पत्योर्निरामय-दीर्घजीवनं प्रार्थितम्। शुद्धस्वान्ता आश्रमान्तेवासिनोऽपि सब्रह्म-

चारिणो नानाविधदेवाराधनस्तोत्रपाठादिना तन्मङ्गल-ध्यानपरा एवासन्। उच्चानुच्च-शैलमालोपकण्ठ-राजिततया प्राकृतिकसुषमापरि-शोभितमपि तदानीं विचित्र-फल-पुष्प-पल्लव-लता-पताकादि-चित्रितं मूलालम्बित-मङ्गलकुम्भै रम्भास्तम्भैः परिशोभितप्रवेशमार्गं अमन्दा-नन्दपरिपूरितसर्वान्तरं जयारवमुखरित-गिरिगह्वरस्तदाश्रम-पदं सम्राड्दम्पति-विजयमाघोषय-दभूतपूर्वं भावमाधत्त। मध्याह्ने च सम्राड्दम्पतिमङ्गलार्थं सब्रह्मचारिविद्यार्थिनः अन्येऽपि बहवो जनाः सपरितोषं भोजिताः। अपराह्ने पुनरध्यापकाध्यासिता ब्रह्मचारि-विद्यार्थिसार्थैरन्यैश्च बहुभिः शिक्षिताशिक्षितैः परिवृता परिषत् समाशंसत् सम्राड्दम्पत्योरतुलनीयां दयादाक्षिण्यादि-गुणावलिम्। आश्रमस्थ-ब्रह्मचारिणोभिः सम्मिलित-मधुरकण्ठै-र्गीतेषु प्रथम-मुद्रितेषु प्रधानाध्यापक-महाशय-विरचित-सम्राट्-प्रशस्तिश्लोकेषु सभायाः कार्य्यं प्रावृतत्। तद्गानञ्चातीव श्रुतिमधुरं समाकर्षत् सर्वेषां सहृषंमनांसि। ततश्चाध्यापक-महाशयो राजभक्तिविषयक-मनति-संक्षिप्तं सारगर्भमुपदेशमुपन्यस्य सम्राड्दम्पति-प्रदत्तानि पदकानि आश्रममठस्य छात्रेभ्य-श्छात्रेभ्यश्च प्रदाय सम्राड्दम्पत्योर्जयघोषण-पूर्वकं स्ववक्तव्य-मुपसंहृतवान्, छात्रैरपि परमश्रद्धानिदर्शनरूपाणि तानि पदकानि सभक्ति प्रतिगृह्य समुच्चकण्ठै र्गीतेषु सम्राड्दम्पति-विजयेषु सभायाः कार्य्यं पर्य्यवसितम्। सायञ्च खधूप-धूपिताधि-त्यका-प्रदेशं वैद्युतालोकद्योतमानं दिनायमानमाश्रमस्थानं सम-नन्दय-द्दर्शकवृन्द-चेतांसि। उच्चानुच्च-शैलमालासन्निधापिता च श्रेणी-बद्धा दीपमाला अतीव लोचन-लोभनीया समपद्यत। अन्तरा-न्तरा च सम्राड्दम्पत्योर्विजयमाघोषयन्तः प्रशान्तस्वान्ता अन्तेवासिन आनन्द-सन्दोहान्दोलित-मानसा-स्तथैव तां निशा-मनैषुः॥

---

## श्रीनन्दनन्दनपदाम्बुजसंनतोऽहम्।

नात्युष्णो न च शीतलश्च पवनो याम्यः सुरम्यो यथा
लोकानन्दकरो मृदुश्च कठिनो भूत्वा स्वयं स्वप्रजाः।
संरच्याखिल-भूमिपैः स्तुतपदः सम्राट् स जार्जाभिधो
जीयात् पुत्र-कलत्र-मित्र-सहित-स्त्वस्तारिवर्गश्चिरम्॥ १

श्रीजार्जो मनुजेन्द्रवन्दितपदो धर्मासने संस्थितो
धर्मेणैव करोतु राज्यमखिलं क्षेत्रे शुभे भारते।
कृष्णोऽयं धवलश्च मानव इति त्यक्त्वा च भेदं यथा
चन्द्रोऽयं किरणैः करोति, धवलां भूमिं नता-श्चोन्नताम्॥ २

यशो हि जार्जस्य सुधांशुना समम् वदन्ति लोका रभसा मतं मम।
कलङ्कयुक्तः चययुक् सुधाकरो यशस्तु वृद्धं च कलङ्कितं न हि॥ ३

इन्द्राण्या मघवा यथा गिरिजया युक्तो गिरीशो गिरौ
चन्द्र-श्चन्द्रिकया तथा नृपवरो मेर्य्या महिष्या युतः।
रम्ये विश्रुतहस्तिनाख्यनगरे पट्टाभिषेकासने
तिष्ठन् भारतभूपतिर्विजयतामाचन्द्रमातारकम्॥ ४

सुत्रामा भूरि वर्षं वितरतु भवतु प्राज्यसस्या धरित्री
क्षीरिण्यः सन्तु गावः प्रचुरधन-युताः सप्रजाः सन्तु सर्वे।
भूयाद्धर्म्मे जनाना-मनवरतरति-र्व्याधि-नाशः समूलम्
भूपैर्युक्तो निजामो भवतु च सुखभाग्-जार्जमित्रं च नित्यम्॥५

श्रीहरिराम शास्त्री—
हायद्रावाद-निजाम-गभर्णमेण्ट्-विद्यालयाध्यापकः।

---

## सम्राट् प्रशस्तिः।

सम्राट्! राजतु राजवत् परहितं कुर्वन् किरन् द्योतनम्
स्निग्धं तापहरं सुशीतममलं सर्वप्रियं सर्वतः।
गाढ़ं दोषतमो निरस्य सहजैर्धर्मैः स्थिरं जीवनो
भुञ्जानो विषयान् समं परिकरै राज्ञ्या महाप्रज्ञया॥१

राज्ञी सर्वगुणान्विता गुणिगणैः संस्तूयमानाऽनिश-
मिन्द्राणीव पितामही तव पुरा यद्राज्यमध्यासिता।
आशान्तं यशसा सुशासनभुवा विभ्राजयन्ती सती
सन्तानानिव संपुपोष सदया प्रेम्णा प्रजाः सन्ततम्॥२

तात-स्ते पदवीं सुपुण्यसुलभा-मध्यास्य तस्मात्कीम्
शौर्य्यैरिन्द्रसमो धनैर्धनपती-स्तुल्यश्च वाग्भि-र्गुरोः।
गाम्भीर्य्यै-र्जलधेः सदृक् च दिवसस्वामीव तेजस्वयैः
उर्वीं सागरमेखलां पुरमिवाशास्तिस्म धर्मेण सन्!॥३

पूर्वैर्जुष्ट-महो तदेव मतिमन्! संसेवमानोऽयन-
मध्यारुह्य चिरं परं नयगुणै रिंलण्ड-सिंहासनम्।
अस्मान् साधु विचिन्त्य राजशरणान् राज्योद्भवाद्विप्लवात्
पायात् पक्षनिपात-दोषरहितः सन्तान-निर्भेदतः॥ ४

प्राकारैः परितः सुधाधवलितै रम्यैः परीता शुभा
सौधैः शैलजिगीषयेव सुतरामभ्रंकषैर्भास्वरैः।
उत्सर्पन्मणिरत्न-रश्मिनिकरै-र्नक्तं दिनोद्भ्रामिणी
प्रोद्याने-र्विकचप्रसून-निवहैः प्रालेय-मालावृता॥५

अश्वै-र्भृङ्गकदम्बकै-रविरतं व्याकीर्णगण्डस्थलै-
रुद्दामद्विरदैः समाकुलपथा तुल्यै र्नगेन्द्रोद्भवैः।
ऊर्द्ध्वं-श्यामघनाभ-धूमनिकरैः शैलेशवत्त्वत् पुरी
भास्वत्कान्तमुखी-र्मयूखप्रसवै रत्नैर्भृशं राजिता॥ ६

हित्वा तां करुणावशेन नृपते! स्वर्गीयसौख्यावहां
दृष्ट्या नन्दयितुं प्रजाः प्रियतमा-स्त्वद्दर्शनप्रोत्सुकाः।
इन्द्रप्रस्थपुरीं महेन्द्रनगरीसाम्यं पुरा लम्भयन्
आयासि स्वयमावहन् बहुतरं क्लेशं लघु भारतम्॥७

इन्द्रप्रस्थपुरी-नृपासनमिहाकृष्टाऽविषह्यप्रभम्
सम्राड्धीरयुधिष्ठिरो नयविदां वर्य्योऽविवर्ज्यः श्रिया।
धर्म्म्यै-धर्म्म इव श्रितः प्रियवपु-र्लोकोत्तरैः कर्म्मभी-
राज्यं प्राज्यमिदं बुभोज सुचिरं नित्यं प्रजा रञ्जयन्॥८

चौर्य्यं तस्य सुशासनैः खलु तदा नामावशेषायितम्
मिथ्यालीन-वपुर्विदूर-मगमत्त्रासेन वा दस्युता।
पर्ज्जन्यः समये ववर्ष सलिलं शस्यैर्मही श्यामला
दुर्भिक्षादिविपन्न-जातु विततिं लेभे सह व्याधिभिः॥९

भव्यं वर्त्म निषेव्य सत्यगुणभाग्! यौधिष्ठिरं भाववित्
वर्षं वर्षमिह प्रभूतकरुणावारीव वारिप्रदः।
अस्मद्दैन्य-दवाग्निदाह-मचिरात् शान्तिं समासादये-
दित्याशा-सरसी-रुहाणि सरसि स्वान्ते श्रियं बिभ्रति॥१०

विस्रब्धै-र्नयनैः पिपासिततमैः पेपीयमाना नृणा-
मुत्कण्ठैः शुभशंसिभि-र्नृपतिभिस्तु स्तूयमाना महन्।
पूर्वं भूपतयो न चात्र भवतः साम्राज्य-लक्ष्मीभृतो
माङ्गल्यै रभिषेक-वस्तुनिचयै राजेऽभिषिक्ताः पुरा॥११

आरोढ़ुन्त्वभिषेकपूर्वकमिदं सद्रत्नसिंहासनं
स्नेहादेति नृप! प्रजा-भिलषितं संपूरयन् भारते।
उत्प्रेक्षे फलमुत्तमं खलु भवेदस्माक-मस्मादिह
पुष्येणेन्दु-समागमः प्रसवति प्रायो विशिष्टं फलम्॥१२

श्रीहेरम्बनाथ-शर्म्म-तर्कतीर्थस्य

---

# श्रीमद्-भारत-राजराजेश्वर-प्रशस्ति-पत्रिका ।

राजन् भारतवर्षं त्वं नीत्यानित्यं प्रपालय

( धनुर्बन्धः ) १

प वेभ योऽङ्ग्याभू 'नृपयुराज्ञिकोस्तेत

लक्ष्मीरव्यभिचारिणी नयततिर्निर्बाधसञ्चारिणी
कीर्त्तिश्चाप्रतिपन्थिता रिपुगणोऽसिद्धोऽविरुद्धाः प्रजाः ।
सद्भक्तोऽस्तुलया निजान् गुणगणान् पक्षे स्वके पश्यतः
श्रीमत्-पञ्चमजार्ज-नाम नृपतेः सिद्धिर्वरीवृध्यताम् ॥ २

यस्मिन् राजनि राजकीयधिषणा-स्रोतस्विनी-निःसृतै-
र्नित्यं नीतिजलैर्मुहुः शीतलममलं संसिच्यमानं पुनः ।
श्रेयस्कामनया प्रजा इव निजाः सर्वाः प्रजाः प्राप्य तत्
पूर्णं क्षेमफलान्न-यवमधुनाश्नन्ति स्वयं भारते ॥ २

यस्येयं प्रकृतिर्मितैर्गुणिगणैः स्वायत्तलोकायत-
श्चैतन्यं प्रतिपद्य तत्त्वविभवैः पारार्थ्यमाराध्यति ।
तद्दत्तान् विषयान् पुमानिव समानासाद्य पुष्टैस्तया
श्रीमत्पञ्चमजार्जनाम नृपतिस्तादात्म्यमालम्बताम् ॥ ४

धरापतेरागमनं विदित्वा पुरीप्रवेशेषु परिष्कृतेषु ।
विराजते भारतभूमिरद्य वरागमे वासकसज्जिकेव ॥ ५

पुरातनैः पुण्यजलैः प्रजानां पुरा विरूढस्य मनोरथद्रोः ।
पुराधिनाथाद्यतनो त्ववाप्तां पुरीपलाभस्तु फलैर्यदृद्धि-नैः ॥ ६

तवाद्य शोकापनुदः प्रजानां तमोपहस्येव करप्रसारः ।
क्रमात्स्वमादायचरः पदव्यां करोपकर्षं जनताशिषः स्याः ॥ ७

स्वपीयमस्मान् परिपुष्णतस्ता-न्युपोढशोभापघनामृतानि ।
नृपेन्द्र ! यस्ते तृषिताक्षिभिः स्मो निपीय देवा इव निर्निमेषाः ॥ ८

कीर्त्तिप्रतापेन्दुविकर्त्तनश्री-र्देदीप्यमाने नृप ! तेऽन्तरीक्षे ।
नाम्नापि धाम्नापि शशी कलङ्की खद्योत एवाजनि सोऽपि सूर्य्यः ॥ ९

कथाप्रसङ्गेषु यदृच्छया गता वदान्यतायाः पुरुहूतसंसदि ।
शृणोति रोमन्थमपास्य नन्दिनी मुखात्त्वदीयान् स्तिमिता महीपते ॥ १०

वें

विलोपनात्ते नृप ! भारतानां कलौ कलानां परिपालकस्य।
विलोकना-न्नो विरमन्ति धीरा जलाशयस्येव मरौ तृषार्त्ताः॥ ११

सामन्तराजाधिप सुन्दरीणां सीमन्तसिन्दूर करम्बिताङ्घ्रिः।
सीमन्तिनीकान्तिरिवामृतांशोः सीमान्तकालं तव शान्तिदास्तु॥ १२

स्वर्लोकतुल्यश्रियमुल्लसन्तीं दिल्लीं निरीक्ष्य भवान् विलोक्य।
हल्लासकोल्लालन-फुल्लबाहुः कल्लोलवल्लीनति-वेल्लितः स्यात्॥ १३

वीक्ष्य भारतनपानभितस्त्वा दीक्षितस्त्वमभिषेकपदाय।
हे क्षितीश ! किमद्य भुजस्ते रक्षतीति ननु वेत्स्यसि तत्र॥ १४

प्रत्युद्गमाय तव भारतराजपङ्क्तिः स्थित्वादरेण पथि मूर्त्तिमतीव भक्तिः।
प्रीत्या प्रमोद-नयनाम्बु-घटाभिवर्षैः सत्यं भवन्तमभिषेक्ष्यति पूर्वमेव॥ १५

राजन्ति मुक्तामणयो मनोज्ञा राज्ञां किरीटेषु हि भारतानाम्।
आज्ञाक्षराणीव सदैव यस्य जीयात् स जार्जो नवसार्वभौमः॥ १६

लोकात्त्वमुद्योतकरं प्रगृह्णन् प्राज्ञान् परिष्कारपदे निरोप्य।
अर्थान् प्रदत्से जगदीशवाचां न्याये तु सामान्यनिरुक्तिरेषा॥ १७

मीमांसयाधिकरणेषु यथाश्रुतिस्थास्तवैव पावचयकं विधिना नियुज्य।
भुङ्क्ता प्रजापतिरिडां यजमानवत्सु श्रीपसम ! त्वमभिराजसि वैदिकः सन्॥ १८

वङ्ग एव हि गुणैः पक्षतैर्यद्वुद्धितत्त्वविषयानधिसाङ्ख्यम्।
अर्पितान् समनुभूय तयास्तां सत्पुमानिव जयाय परार्थम्॥ १९

राजयोगम-तिसाधयतस्ते चित्तवृत्तिमनुरुध्य जनेषु।
योगिराडिव समाहितचेता अष्टसिद्धिमचिरेण लभस्व॥ २०

त्वत्सत्तयैव त्वमयं प्रपञ्चो विभ्राजतेऽद्धाभव चक्रवर्त्ती।
निमीय मध्यासविचारणायां ब्रह्मैव जातः परमार्थदृष्ट्या॥ २१

धर्म्मात्मजप्रभृतिभिः प्रथितैर्महीन्द्रैः सम्मानितं मणिवरत्नचितं महार्घ्यम्।
धर्म्मासनं समधिरुह्य च पञ्चमश्रीसम्राडयं सुचिरमेव धरां बिभर्त्तु॥ २२

उद्यत्प्रताप ! तव सद्गुणसौरभाढ्यां पद्यप्रसूनततिमत्र विकीर्य भक्त्या।
विद्यावतामपि विधाय विनोदमेवं हृद्याभिषेकमहमद्य हि मोमुदीमः॥ २३

वाराणसेय—
रणवीरपाठशालान्ते-वासी

प्रणेता—गोविन्दशास्त्री
काव्यतीर्थ-व्याकरण-साहित्यशास्त्री

# आर्य्यप्रभा।

द्वितीयवर्षे { सुदुर्लभाः सर्व्वमनोरमा गिरः } पञ्चमसंख्या।

## मासावतरणिका।

सम्राट् प्रयातीति वियोगदुःखं स्मरन्निव क्लान्तमना नितान्तम्।
प्रालेयमालाश्रुजलप्रवाहैः परिप्लुतस्सञ्चरतीह पौषः॥

## राजराजेश्वरप्रस्थानम्।

अपार-करुणा-पारावारः ससागर-धरा-धीश्वरोऽस्माकं महा-महिमान्वितः सम्राट् श्रील-श्रीश्रीश्रीश्रीश्री-युक्तः पञ्चमजर्ज्ज-महोदयो निरामय एव सपत्नीकः पौषस्य पञ्चविंशद्दिवसे भारतं परित्यज्य सर्व्व-सुखभाण्डमिंलण्डं प्रति प्रस्थितः। यथा च सम्राट्-शुभागमनेन भारत-भूमि-रियं-मभूतपूर्व्व-मनिर्वचनीय-मानन्दोच्छ्वास-मधत्त चिर-प्रोषित-भर्त्तृका कुललनेवासाद्य हृद्यं स्वामिनं, तथैवाद्य प्रस्थानेन तस्य संस्थानरहितेव कमिवापूर्व्वमभावमनुभवन्ती सर्व्वतोऽतिविषाद-कालिमाच्छन्नता-मापद्यत. विजया-परदिने रत्नराशिविमण्डित-मपि शून्यमिव चण्डीमण्डपम्। अद्य स्मरामो वयमविरतं "किमस्या न प्रेयो यदि पुनरसह्यो न विरहः" इति भारतीय-कविगौरव-भवभूति-भारतीयगौरवम्।

राजानञ्च साक्षाद्देवांशमादिशन्त्य*स्माकं धर्म्मशास्त्राणि, भार-

*। "सोमाग्न्यर्कानिलेन्द्राणां वित्ताप्पत्योर्यमस्य च।
अष्टानां लोकपालानां वपुर्धारयते नृपः॥ मनुः ५म अः ९६।
बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।
महती देवता ह्येषा नररूपेण तिष्ठति॥" मनुः ७म अः ८।

तीयप्रजा अपि राजानं तथैव मन्यन्ते, तस्मात् सम्राड्दम्पति-शुभागमनेनातीव धन्यम्मन्या अनन्यकर्म्माण: सर्व्व एव भारतवासिन आनन्दा-दित्य-समुत्फुल्ल-वदना-रविन्दा: कं कथमाराधयेयु: पश्येयुरिति वा विनिश्चेतु नालमभूवन्। इमञ्च सदयहृदयं भारतेश्वरं प्रति सर्वेषामनुराग-साम्येऽपि केषाञ्चित् सुप्रसन्न-भागधेयानामिव तद्दर्शन-जनितशुभादृष्ट-मजनिष्ट। ये तु परमप्रजारञ्जकं साक्षाद्विराजमान-मालोकयितु नाशक्नुवन् तेऽपि साक्षादिव देवविग्रहं सम्राड्-दम्पति-प्रतिमूर्त्तिं स्वस्वगृहे संस्थाप्य यथाशक्ति समपूजयन्। सम्प्रति सम्राड्दम्पतिप्रतिकृति: कोटिकोटीश्वर-राज-प्रासादाच्चीर-वास-भिक्षुकनिवासं यावत् सर्वत्रैव विराजमाना जगद्व्यापकत्वमिव समाख्यापयति।

अगणितदिनं यावद्भारतभाग्य-गगने सम्राट्-सहस्रांशु-विकाशो नावकाश-मलभत, इत: पूर्व्वञ्च ये महानुभवा भारतसम्राजो व्यराजिषत, दूर्भाग्यतोऽस्माकं भारतललाटपटे तेषा-मटनं न संघटितम्, अयञ्च महात्मा भारतभाग्य-विधाता परमानुकम्पया तत्सम्पादयन् सर्वथैवास्माकमगण्य-धन्यवादार्ह:। परमसौभाग्य-शालिनी च भारत-राजलक्ष्मी: शुभक्षणेनासामान्य-गुणलावण्य-सम्पन्नं सर्वकार्य्य-दक्षं स्वामिनं प्रत्यक्षी-कृत्य विपक्ष-समक्ष-मसमकक्षतां स्वामिन: ख्यापयितुं नाधिक्षेपमाशङ्किष्यते। अस्य च प्रजापुञ्जानुरञ्जक-राजराजेश्वरस्य सम्राज्ञ्याश्च भारतमातृभूताया: सर्वविषयप्राज्ञाया: शुभागमनेन भारत-भूमौ यादृशामन्दानन्द-सिन्धु-प्रवाह: प्रसृत:, नैतादृश: कदाचिदपि केनानुभूतपूर्व:। राजभक्ता भारतवासिन: सर्व एवानुरक्ता: सम्प्रदाय-निर्विशेष-मनयोर्मङ्गलमाराधयन्त: परिलक्ष्यन्ते। नास्ति च भारते तादृशं नगरं जनपदं गृहं वा यत्रानयो-र्दयावतारयो-र्भारताभिषिकमहोत्सवानन्द-सन्दोहो रात्रिन्दिवं न प्रावृतत्। तस्मिंश्च शुभाभिषेक-दिवसे त्रिंशत्कोटिभारतीय-सोत्कण्ठकण्ठै: समकालमुद्घो-

च्चरिते जयारवे भारतीयाः कीदृशमभूतपूर्वं भावमन्वभूवन्निति वर्णयितुं न वर्णावलिमासादयामो भाषायाम्। आलोक-मालाभिरलङ्कृता च भारतजननी दिवसरजनीभेदबुद्धेरपि तिरस्करणी-समजनि। परम-सौभाग्यवती-समुल्लसिते च दिल्लीनगरे सोऽयमभिषेकमहोत्सवः कीदृगाडम्बरेण सम्पादित इति त एव जानन्ति ये भाग्यवन्तो दृष्टवन्तः। तत्रैवासामान्यपुण्य-सम्पन्ना अगण्यराजन्यवर्गा अपवर्गसोपान-मिवालभमानाः परमानुकम्पा-सम्पन्नसम्राड्दम्पतिपूजां सम्पादयन्तो धन्यतामात्मना-ममन्यन्त। कलिकाता-राजधान्यां सम्पादित-महोत्सवप्रसारोऽपि सर्वथा अभूतपूर्व एवेति निर्विवादं वक्तुं शक्यते, यदेतावन्महदनुष्ठानं न कैरपि दृष्टपूर्वमिति। अहो सौभाग्यं भारतीयानां यद्बहूनामिव जन्मजन्मान्तरीणा-गण्यपुण्यफलमिव दीनदुःखिनिर्विशेषं सम्राड्दम्पति-शुभसन्दर्शनं निर्बाधं समपद्यत।

संवत्सरं यावत् सम्राड्दम्पत्यो-र्भारतागमन-वार्त्ता-प्रचारतो भारतीयाः केवलं तदनुध्यानपरा एव समय-मतिवाहयन्तः तदागमनात् परतः क्षणेनैव मासाधिकव्यापकमपि तदानन्द-महोत्सवमत्यवाहयन्। अहो क्षिप्रगामित्वं सुखोपभोगकालस्य! पश्यतामेव भारतवासिनां स सुखस्वप्नस्तिरोहितः। सम्राजं प्रस्थापयन्तो नितान्तं खिन्नहृदया अपि भारतवासिन-स्तन्मङ्गलभङ्गभीरुका निर्निमेषमालोकयन्तो जयमङ्गल-ध्वनि-पूर्वकमेव तं स्वगृहं प्रति प्रास्थापयन्। अधुनापि सम्राड्-दम्पति-चरितालोचनं मृते नास्ति भारते कापि वार्त्ता। यत्र च द्वावपि समवेतौ तत्रापि केवलं सम्राड्-दम्पति-चरितानुगानमेव श्रूयते। बालवृद्धवनिताद्याः धनिदुःखिदरिद्रा विभिन्नधर्मावलम्बिनश्च सर्व एव भारतवासिन ऐकमत्येन काय-मनो-वाक्यै-राशीर्वादानयोः सुदीर्घजीवनं कामयन्ते। एतावतैवानुमातुं शक्यतेऽस्माकं दयावतारो राजराजेश्वरः अचिरकालेनैव कीदृगन्वरञ्जयत् प्रजापुञ्जमनांसि।

हे सम्राट्! तवागमेन धन्या भारतभूमिः कृतार्थाश्च भारतीयाः

प्रजाः, दयावता च भवता पूतचरितया महिष्या सममागम्य भारतभूमौ या चिरशान्तिर्विहिता सा समैवाकल्पकोटिकालं स्थास्यतीत्याशास्महे, भवदीया-सामान्य-दया-दाक्षिण्य-वदान्यतादिभिर्मुग्धा भारतीयाश्चिरकालं भवदनुग्रहं साग्रहं स्मरिष्यन्ति। सूक्ष्मदर्शितया कारुण्यप्रावीण्येन च भवतः शुभागमनावसरे यद्यत् शुभफलमाशातीतमस्माभि-रासादितं तेनातीव कृतज्ञा अपि किन्ते प्रतियच्छामः, यतः सर्वमेवास्माकं भवदायत्तं, वयमपि सर्वे भवदायत्ता एवेति केवलमविरलमीश्वर-समीपे समङ्गल-दीर्घजीवनन्ते समभ्यर्थयामः। हे करुणैकसिन्धो! सवन्धुनि-विघ्नं प्रविश्य स्वर्गप्रतिमामिंलण्डीय-राजधानीं लभस्व चिरशान्तिनिकेतनं मातृक्रोड़ं, मातापि ते नयनानन्दकरं वदनारविन्दमुपाघ्राय परमामोद-मापद्यताम्। इं लण्डमपि ते जयारवापूरित-दिङ्मण्डलं स्वागत-प्रश्न-कुतूहल-मुपजायताम्। करुणार्द्रचेतसा दुस्तरसागर-तरणक्लेश-मङ्गीकृत्य यद्दूरतर-भारतागमनमुररीकृतं तेनैव चिरकृतज्ञा अनुगृहीता बाधिताश्च वयं, कथन्ते भारते दीर्घावस्थानमभिलषितु-मर्हामः? किन्तु हे भारतैकविधातः! पुनरपि भवतः शुभागमनमभिलष्यते भवदपारदया-परिवर्द्धिताशै-र्भारतवासिभिः। नो जानीमो भारत-भाग्ये कदा तत् फलिष्यति? परन्तु भवतस्तद्दया-प्रवण-मूर्त्ति-दर्शनं कदापि भारतीयानां दुर्घटं न भवेत्, यतः सर्वेषामेव भारतवासिनां मानसपटेषु भवदीयातुलनीय-गुणावलि-शिल्पिभिः परिकल्पितानन्द-दायिनी मूर्त्तिश्चिरकालमेव विलासमालप्स्यते। सम्राज्ञी-सहितस्य भवतः कीर्त्तिकलापोऽपि भारतस्य प्रतिकक्ष-मुज्ज्वलस्वर्णाक्षरै-र्लिखितश्चिरकालमवस्थास्यतीति शम्।

सम्राट्! याहि गृहं सुखञ्च निवसन् स्वस्थो महिष्या समं
राज्यं शाधि सुहृद्गणैः परिवृतो निष्कण्टकं निष्कलम्।

काले कारुणिक! प्रसङ्गत इमाः स्वा भारतीयाः प्रजाः
स्मर्त्तव्याः कृपया तवापि विजयः सर्वैः समं गीयताम्॥
सर्वाशिषां फलमुषो भवतः किमन्य-दाशास्महे हितशतं नियतं विधाय।
मैर्य्या युतः सह सुतैर्भवदीर्घजीवी कीर्त्तिर्यथा तव चिरं विचरेत्त्रिलोके॥

---

## महिमान्वित-भारतसम्राड्-राज्याभिषेकाभि-नन्दन-पत्रम्।

कथम् प्रजानां मनसि प्रकाम-मभूतपूर्वं हि सुखं प्रजातम्।
कथम् पताका-कदलीप्रसूनैः कुम्भैश्च पूर्णा नगरी विभाति॥ १
मृदङ्ग-ढक्काकलगीतनादै-र्जयारवैः कण्ठभवै-र्वधूनाम्।
प्रजाजनानाञ्च शिवैर्निनादैः कथं मही व्याकुलितेव भाति॥ २
कृतं कठोरं बहुधा यदर्थ-न्तपः प्रजाभिः परिशुद्धहृद्भिः।
वशी प्रजानां हि स भारतेशः समागतो दुःख-विमोचनाय॥ ३
सरस्वती कुत्र सह श्रियापि न तिष्ठति द्वेषवशाज्जनेषु।
अस्मिंस्तु तुल्यत्व-महो द्वयोश्च भवेद्धि सर्वो वशगो गुणानाम्॥ ४
तनोत्यजस्रं गुणसम्पदा किं यशांसि राजा निजराज्य-यातः।
अहो विधुर्नाशयितुं तमिस्रं दिवोऽवतीर्णः स्वयमेव भाति॥ ५
निजं विधाय प्रतिबिम्बमेवं सुरैश्च सर्वैर्जगतां हितार्थम्।
किं प्रेषितोऽयं शतमन्युकल्प-श्चिरात् सनाथां पृथिवीं विधत्ते॥ ६
एवं जनानां हृदये निकामं सम्भावनां संजनयन् गुणौघैः।
त्वदागमो नीवृति निर्मलात्मन् न चञ्चलं कस्य मनो विधत्ते॥ ७
चित्ते मदीयेऽपि च शुष्कशुष्के पीयूषधाराद्य निपातिता यत्।
वाग्मित्व-हीनोऽपि कटुप्रलापी नेशोऽस्मि चेतः परिसंयमाय॥ ८
पिकालिकीराः कलनादिनो वै यथैव कूजन्ति मधौ वनान्ते।
तथैव काकाः प्रतिकूलवाचः कायन्ति किं नैव मदातिरेकात्॥ ९

ब्रह्माण्डभाण्डे तु यदेव किञ्चिच्चितञ्च रम्यञ्च सुदुर्लभञ्च।
सर्वन्त्वदायत्त-मतस्त्वदर्थं किमन्यदाशास्य-मिहास्ति वस्तु॥१०
जीव-श्चिरं धर्मनिविष्टचित्तो दिव्यं सुखं कान्तगुणोपभुङ्क्ष्व।
शुभ्रातिशुभ्रा तव सा च कीर्त्तिर्निरन्तरं धावतु दिग्दिगन्तम्॥११

साभार-चतुष्पाठी-अध्यापकेन—
श्रीपूर्णचन्द्रकाव्यविनोद-भट्टाचार्य्येण प्रदत्तम्।

---

## राज-राजेश्वराभिनन्दनम्।

राजन्नुत्सववाञ्छिनीं सुखकरीं वार्त्तान्त्वदीयां शुभां
श्रुत्वा सर्वजनैः समन्तत इह व्यस्तैरहो साम्प्रतम्।
स्थाप्यन्ते प्रतिवेश्म-चत्वरतले सिन्दूर-संमण्डिताः
कीलालैः परिपूर्णकुम्भनिवहाः सत्पल्लवे राजिताः॥१

तवागमेनैव निकुञ्जपुञ्जे कूजन्ति सर्वेऽविरतं विहङ्गाः।
प्रतिप्रसूनं लभमानभृङ्गाः गायन्ति राजन्! गुणगीतिकान्ते॥२

तवागमेनैव तु राजमार्गः कीलालसेकेन रजो-विहीनः।
सुतोरण-श्रेणिभिरुज्ज्वलश्रीः देदीप्यते केतनदीपसङ्घैः॥३

मुक्तालो-परिमण्डितां "कच्चिनुरैः" संदीप्यमानां सतीं
राज्ञीं दीनजनेषु तोषणपरां पूर्णेन्दुमञ्जुप्रभाम्।
मन्येऽहं बहुपुण्यसञ्चय-वशात् सार्द्धं त्वयाऽद्य प्रभो!
दृष्ट्वा भारतवासिनां समुदितं स्वान्तेऽप्यशान्ते सुखम्॥४

प्रजा प्रभूता प्रभुषु प्रधान! प्रीत्यब्धिपारं प्रगता प्रसन्ना।
त्वां शुभ्रभूर्त्तिं जित-शीत-रश्मिं समीक्षते स्वागत-वाचमुक्ता॥५

किन्त्वत्र हन्त सततं हृदि तीव्रदुःखं
यत् स्वामिदर्शनसुखं घटते न नित्यम्।
इत्येव कारण-वशाज्जनताऽद्य राजन्!
दृष्ट्वा मुहुस्तव मुखं लभते न तृप्तिम्॥६

राज्याभिषेके-रमरावतीव दिल्लीति जाता नगरीषु धन्या।
राजेन्द्रवृन्दैः परिसेव्यमाना एतेन राजं-स्त्रिदिवायते सा॥ ७
दिष्ट्यैव राजेन्द्र! तवास्य-पद्मं प्रजाकुलं द्रष्टुमहो समर्थम्।
जयोऽस्तु शब्दैरभिनन्दितस्त्वं प्रेक्षस्व हे तत्तु दयार्द्रनेत्रम्॥ ८
शुभोत्सवे ते बत मादृशानां देयन्तु वस्त्वत्र न चाऽस्ति किञ्चित्।
आशीर्वचोऽभिः खलु कामयेऽदः सम्राट्! सुदीर्घं कुरु राज्यभोगम्॥९

मयमनसिंह-आठारबाड़ी-ज्ञानदाचतुष्पाठ्यन्तेवासि—

श्रीदेवेन्द्रकुमार-भट्टाचार्य्यस्य।

---

## राजराजप्रशस्तिः।

जीयात् पञ्चमजर्ज्ज-भूपति-रतिप्रेम्णा प्रजाः पालयन्
जीव्याज्जीवितमेव नो न तु परं सर्वस्वरूपः स च।
जीयात्तन्महिषी महीतलहिते भर्त्तुः सदा सङ्गिनी
जीव्याज्जीवितमेव नो न तु परं सर्वस्वरूपा च सा॥ १

दैन्यं निजस्य न विविच्य परस्य हत्यात्
कौपीनमेव मनुते ननु भाग्यलक्ष्म।
हृष्टो नृपाय सकलेश्वरतां ददाति
आशीर्न निष्फलति भारत-पुण्ययोनेः॥ २

द्रव्यं रत्नेन्दु-यथा वा वणिगतिनिपुणो यद्‌यथा यत्र रम्यं
भर्त्ता तादृग्भुवोऽस्याः कलितमतिभरेणार्थजातं तदर्थम्।
आशा आपूर्य्य पारे जलधिजनगणा आययुर्भृङ्गवृन्ताः
क्लेशं स्वीकृत्य किन्तु त्वमिह पदमधात् प्रीतिहेतोः प्रजानाम्॥३
वर्षागमे भेककुलानि यद्वत्तथाधुना मोद-मियन्ति सर्वे।
मालञ्चिकाः काशयतीव नष्टाः जीयाच्चिरं जीवतु जीवकान्तः॥ ४
प्रियदर्शन! राजदर्शनम् हितमेवात्र परत्र चोदयेत्।
मतिमन् मतमेतदर्हतां प्रमदः प्रेष्ठ! कियान् प्रमीयताम्॥ ५

भूचम्पका इव मधौ मधुरे हटान-
सङ्गे पुनर्जगदुरेकमपूर्वभावम्।
हित्वा पुरातनवपुर्ननु भारतीया
जीया-दरो-हरणमूर्त्ति-हटानभूमिः॥ ६

दारिद्र्यदुर्भिक्ष-महार्घभावः शोकामयाकाल-मृतिर्नृपाल।
भूयात् पुनस्ते शिवसङ्गमेन सुवर्णभूमिः शिवभूमिरेषा॥ ७

पूजास्पदं नियमकालसपर्य्ययेति
श्रीभारते सुखरते मतिरासीदार्या।
इंलण्डभूर्मतमिदं बहुमन्यमाना
श्रीसम्पदा भुवनमूर्द्धि पदं विधत्ते॥ ८

सूर्य्याचन्द्रमसौ क्रियाफलविधौ सम्पादितौ साक्षिणौ।
त्वत्-साम्राज्यपरीक्षणं क्षच तयोर्नैकाहतो वीक्षणम्।
राज्यं प्राज्यमिदं न संष्ठुलतया नो वा त्वया पास्यते
भित्वा तत्स्थितिमण्डलं कुशल ते कीर्त्तिश्चिरं स्थास्यति॥ ९

प्रजासु प्रीति-स्ते प्रपद-मनुपश्यन्ति कुशला-
महोत्कश्रीपीनां स्मृतिशत-भरेणालस-कृशाम्।
अकार्षीर्हि क्षौं तां मिलनमुदितान् वङ्गसुतान्
कृतार्थीकर्त्तुं त्वं पुनरिह समागच्छसि नृप!॥ १०

छायेव जाया सहधर्म्मिणी मता भर्त्तुर्महिष्यास्त अनिन्द्यकर्म्मणः।
मातुः प्रकृत्या प्रचुरा गुणावली न चोदिता भिन्नतयेति श्रूयताम्॥ ११

मा याह्यस्मान् विकलहृदयानित्य मुक्त्वा तरिहत्
लक्ष्मी भूया ध्रुव इव सदा दूरसंस्थोऽपि सम्राट्।
दूरं तिष्ठन् तपति तपनः पालयन् प्राणिजातान्
आराध्योऽयं नतिमतिभरेणार्य्यजातेन सम्यक्॥ १२

गाङ्गाम्बुगाङ्गपीनश्री-चूपीग्रामनिवासिना।
राजप्रशस्तिः सैवेयं श्यामादासेन तन्यते॥

---

# मासावतरणिका ।

भृङ्गप्रियालिङ्गन निर्म्मित:सन् रसाललक्ष्मीं मुकुलं विहाय ।
उपागते फाल्गुन संज्ञ मासे उद्भ्रान्तचित्ता भ्रमतीव भृङ्गः ॥

— — ※ — —

# रसनाष्टकम् ।

आगासीद्रसने ! त्वयाऽलसया नामामृतं शाम्भवं
भव्यं भाविभवस्य नाशक महो दीपीयमानोऽनिशम् ।
सर्व्वक्लेश मपास्य हास्यवदन: स्थास्यामि हासन्परं
येनान्ते च कृतान्तसद्मनि पुन र्यानं न जायेत मे ॥१॥

किन्तु त्वं भ्रमत: सुरम्यमपि तन्नास्वादयस्याग्रहात्
व्यग्राऽसार रसे परत्र विरसे संसार सारोत्थिते ।
नोजाने तव किं चरित्रमिति वा प्रायोलयाद्यत्त्वणि
युक्तायुक्त विचारणा-विरहिता लोके समालोक्यते ॥२॥

अज्ञाख्यं यदि केवलं सुमधुरेप्यापातरम्ये रसे
विन्मूत्रादिफले प्रयासबहुले क्षुद्यान्नपानस्थिते ।
लुब्धं मा मतिमात्रलोभविकलं सम्पाद्य कृत्वानिशं
नेष्यस्येव मध स्तदा कि मयि ता मानिष्य मस्मिन्नपि ॥३॥
वृत्तं लुब्धजनस्य विश्वभुवने विश्वासयोग्योऽजनः
प्रायो नैव च तादृशो य इह तं लोभात् परावर्त्तयेत् ।
यस्मात्तत् सहवासमात्रवशतो लुब्धः स्वयं जायते
सत्यं शास्त्रवचः क्षणश्च विषमोऽसद्भिः समं सङ्गमः ॥४॥
एवं नीचजनोचिताश्च रसने ! वृत्तिं समालोक्य ते
किङ्कर्त्तव्यविमूढ़धीः पुन रहो त्वामेव याचे नतः ।
त्यक्त्वान्यत् समयस्थितौ कुरु मुहु र्नामामृतास्वादनं
शान्तं कः खलु याचनेन सुवशीकर्त्तुं क्षमो नीचगम् ॥५॥
तिष्ठ त्वत्परिचालकं यदि मनः साहाय्य सम्पादकं
कर्त्तुं सानुनय प्ररोचनशतैः शक्ष्यामि तद्दृच्छसि ।
दौर्ज्जन्यस्य फलं कियत् सुविषमं यस्मादिह स्वामिनः
सम्यक् शासन मुद्धतस्य दमने शस्तं समालम्बनम् ॥६॥
हाहा हन्त !! हतोऽस्मि चेतस इतः सन्तोषणार्थं गतः
मन्ये दुःसमये न कोपि सभयः सम्यक् सहायोभवेत् ।
नानाविदनरोदनान्यफलतां यातानि दुःखं परं
त्वत् पक्षे च विलक्षणा सकरुणा दृष्टि स्तदीयेच्छ्यते ॥७॥
किं दुष्यामि परं स्वयं न दृढ़तां शक्तः समालम्बितुं
नो चेत् किं रसने ! तवानुकुलता मांसु भवेद् व्यग्रता ।
कुञ्जोहं विकलः स्वपक्षरहितं कृत्स्नं जगल्लोकयन्
हे प्रभोऽनवलम्बनस्तव दयां निष्कारणां मर्थये ॥८॥

# मदिरा विकारः ।

( पौषतोऽनुवृत्तः । )

अस्मिन्नेव काले कश्चन जरठः समागम्य आलोक्य आलोच्य चैतेषां दशां विजज्ञौ, यदेते अविमृष्यकारिणः पथिका मदिरादेव्या एवं दशां गमिताः । उवाच च "भोः भोः पान्थाः ! किमिति यूयं सन्नमितप्रायेऽपि दिवसे निरातङ्का व्याघ्रभल्लुकादिभीषणेऽस्मिन् जीर्णकान्तारे कृताश्रया निरुद्यमा अवस्थिताः ? मानुषबाहुल्यं नचेदभविष्यत् तदा नूनमेव एतावत्यपि काले मृगादनाः क्रिमाणां शोनितपाने निजपिपासां न्यवर्त्तयिष्यन् । तद्यदि जीवितुमिष्यते तदा सत्वरं गृहं प्रति प्रस्थीयताम्" इति ।

अथ वचनमिदमाकर्ण्य राज्ञ्याः सहचरी सकोपमिदमाह राजानं 'ननु दृश्यतामयं जरत्काकः अस्माकं शान्तिभङ्गं कुर्व्वाणः किमिदं विलपति, निःसार्य्यतामिष स्वार्थानुसन्धानपरः' इति । राज्ञी च सहचरी मतमन्ववर्त्तिष्ट, अनुरुरोध च राजानं तथैव । राजा स्वाङ्कगतायाः सानुरागायाः प्रियतमाया अप्यनुमोदनं विज्ञाय द्वारपालमादिदेश 'निःसार्य्यतामयं अर्द्धचन्द्रपरिचयेन' इति । राजादेशश्च तत्क्षणादेव दौवारिकैः कर्म्मणा समर्थितः । सोऽपि वृद्धो दारुणं प्रहृतः हा हतोऽस्मीति विलपन् त्वरितपदो निज जीवनावनतत्परोऽभूत् । एतेषु पथिकेषु कश्चन कल्पितपुत्रस्य वदनसरोजं स्नेहेन परिचुम्बन्, कश्चिद्वा स्वप्रियया सह प्रेमनिर्भरं आलपन्, कश्चिद्‌द्वारस्थित आगच्छन्तीं मक्षिकां दण्डेन ताड़यन् स्वकर्त्तव्यमशून्यं कुर्व्वन्, कश्चन राजानं पल्लवैर्वीजयन्, कश्चन कस्यचिदपराधं राज्ञे सूचयन्, कश्चन वा तत्क्षणकल्पितस्य भ्रातुर्विवाहं निर्णयन् समय

मत्यवाहयत् । केनचिदपि गृहगमनस्य वार्त्तापि नोदलेखि । येनापि मनसा विचारितं उचितं गृहगमनमिति सोऽप्यतः परमेव यास्यामि इति तुष्णीं स्थितः । गन्तुमुद्यच्छन्तं वा कश्चिदपरे हस्तग्राह मुपवेशयामासुः । कश्चित् तत्क्षण कल्पितायाः प्रियायाः सम्भाषणेन जिगमिषां तत्याज । कश्चित् प्रियायाः आभरणानि यथा स्थान-विन्यासयन् गृहगमनं विसस्मार । कश्चिद्वा जिगमिषुः राज्ञः समर्पितानर्थान् प्रतिप्रार्थयमानः क्रुद्धेन राज्ञा कारके निबद्धः । एवं क्रमेन अवसित एव दिवसः । भगवानस्वरश्मिरपि न शशाक त्यक्तुं वारुणीसेवनानन्द सन्दोहानुबुभूषाम् । रक्तोऽपमानस्य वारुणीं मदेन घूर्णमान इव पपात क्रमशो नीचान्नीचैस्तरम् । प्रससर्प समन्तात्तमोजालम् । निशाचराः प्राणिनः सर्व्वे इतश्चेतश्च विचेरुः । मदिरामादकतायाः क्रमशः अपनोदनात् एतेऽपि पथिकाः भय व्याकुलित मनसो जीवनावनोपायं चिन्तयितुं समयमलभन्त ।

यावदेवोज्जृम्भते स्म ध्वान्तं, यथा च प्रविवेश भगवान् तमोपहः पश्चिमसरितपतिगर्भं, तावदेव तेषां मदिराविकारोऽपि शनैः शनैः अस्तमियाय । इदानीं क्व ते कान्दिशीकाः परस्परं मुखमालोकयन्तः राज्ञो सहचरीरूपेण कल्पितां तरुणीमेव सर्व्वानर्थमूलं मवधारयन्तो विलेपुः । राजापि अस्मिन् क्षणे अपगतमदः प्रथमं परिदृष्टां तरुणी-मेव त्राणोपायं पप्रच्छ । सा च राजानं भीतं मूढ़ञ्चालोक्यात्मरक्षण-परा द्रुतं पलायाञ्चक्रे । ततो हा हतोऽस्मि, कं गच्छामि शरणं इत्यादि स्त्रीबालानां रोदनैः क्वचित् हस्तिबृंहणैः, क्वचित् सगर्व्वं खड्गिभिरुत्पाट्यमानानां तरुराजीनां मर्म्मरध्वनिभिः, समन्ताच्चूर्य्य-माणानां अपरेषामपि श्वापदानां गर्ज्जितैः प्रतिक्षणं वनभूमिरकम्पतेव ।

पथिकेषु छिन्नाः श्वापदैरनुस्मृताः । केचित् महिषैः विकटं

ताड़िताः, केचित् भग्नपाणिपादाः, केचित् भीता दीनं रुवन्ति, कश्चित् उच्चैरुच्चचार, हा! अहं विपणिं प्रस्थितः, एतैर्मम सर्व्वाणि धनानि गृहीतानि, इदानीं मे प्राणा अपि श्वापदैर्गृह्यन्ते।

अपरः। यदि जीवति मयि कथमपि प्रभाता रजनीयं भवेत् तदा न पुनरास्वादयितव्यं मद्यं यावज्जीवं। हन्त ब्रुवतो मे हृदयं विदीर्य्यते यत्, तेन खलु साधुना कियन्नाम न चेष्टितम् अस्मत्-प्रबोधाय, किन्तु स एवास्मत्कुशलमिच्छन् अस्माभि स्ताड़ितः।

अन्यः। यदि अद्य जीवामि, न पुनस्तदा भगवतो मारजितो नाम मया विस्मर्त्तव्यम्।

एवं सर्व्वे एव विलापवचनान्युच्चारयामासुः। गतेषु क्षणेषु श्वापदगर्ज्जनभयादिव लोकानां हाहारवो विरराम। अश्रूयत तदा अन्तरान्तरा श्वापदानां परितोऽटाट्य मानानां गर्ज्जितमेव। मन्ये ते सर्व्वे एव घोरस्ताड़ं विलापिनः पथिकाः श्वापदैर्विलुप्ताः। हन्त एवं कतिचन सरलप्रकृतयः पार्व्वतीया मदिराया दाक्षिण्यमासाद्य गृहोपकण्ठ मेत्यापि मोहेन वनेषु दिवसमतिवाहयन्तः हा हतोऽस्मीति प्रलपन्तो दुर्गति मवापुः।

उपसंहारः।

ननु वाचक महोदयाः नूनं भवन्तः एतेषां गिरिकन्दरवास्तव्यानां अज्ञानां अविमृष्यकारितां दीर्घसूचिताञ्चालोचयन्तः दुःखिता भवेयुः, किन्तु एतत्समापराधेषु अस्मास्वपि किं नाम भवतां कृपाकटाक्षैर्न पतिष्यते? वयमपि ननु वासनाख्यया पिशाचिकया तरुण्येव, आतिथ्यमिव सहानुभूतिमिव दर्शयन्त्या वह्निलावण्यसन्दर्शनेन च भ्रममुत्पाद्य मोहमदिरां पायिताः। परिणामे विषमपि राज्याभिनयं सुखकरत्वेनावगमयन्त्या अनया विषमय विषये नियुक्ताः कामपि

मतरूतलवास परिचयां लावण्यवतीमिवालोक्यमानां भार्य्यारूपिणं प्रति-गृहलोमः, कोऽप्यपरिचितोमे पुत्रस्थानमलङ्करोति, कश्चित् परिचारक स्थानमशून्यं करोति, कश्चिन्मे वयस्यत्वमभिनयति, वृक्षतलमेव सर्व्वभयावहं पितृपैतामहिकमावसथं मन्यामहे, पितेति अपरिचित-स्यापि कस्यचित् अङ्कास्रय मभिलषामः, लभमानाश्च तदीय स्नेहचुम्बनं आत्मानं श्लाघ्यतमं विचारयामः, मातेति तत्कृपादृष्टायाः कस्याश्चित् वक्षोजरसं पिबन्तः सुधापायिनो देवानपि सौभाग्येन न्यक्कुर्म्महे, तदङ्कञ्च महेन्द्रसिंहासनादपि सुखाकरमालोचयामः। मोहमदिरा रसनेनैव अतिवाह्यते तरुणीसंसक्तचेतसामस्माकं यौवन कालः। चलति प्रौढ़े यदि कदाचित् चेतः स्मरति अभीष्टदेशगमनं, तदापि वासनावशंगतै रस्माभिः सा स्मृतिरेव गलहस्तीक्रियते। यदि च्देति वार्द्धक्यदशायां मनोमार्गे कदाचित् आत्मदेश-प्रयाणाभिलाषः, तदापि मोहवशात् दीर्घसूत्रतया विषयलिप्सया स्त्रीपुत्रादि स्नेहेन परमनो-रञ्जन प्रवृत्त्या वा वाध्यमाना वयं अस्मिन्नेव व्याघ्रादिसङ्कुले विजने प्रान्तरे वसामः। अन्तिममासादनीय मिदमेवाव धारयामः !! किन्तु हन्त !! अस्ताचल-शिखर मधिरोहति जीवनभानौ, प्रसरत्सु हृदयगुहा प्रलीनेषु तमःसु, यौवने अनुकूला अपि कामादयः दिवा-भीताः स्वापदा इव रजन्यां, तमः प्रसर्पादसहायान् दुर्व्वलान्नः विलु-म्पन्ति। ये पुरा वयस्याः, पुत्राः, पौत्राः, दाराः, पितरः, मातरः इति मया सादरं पोषिताः, स्वदेहशोणितमपि सलिलाय मत्वा तद्व्ययेन तोषिताः ते साम्प्रतं भयेन प्रष्टुमपि, किमहो ! प्रतीक्षितुमपि मां नाभिलषन्ति, सर्व्वे स्वजीवनाय यतन्ते। इदानीं हा हतोऽस्मीति प्रलाप एव अशरणस्य मे शरणम्। हन्त स प्रलापोऽपि न सोढ़ं शक्यते अमर्षिभिः कफादिभिः। तैरिदानीं मे गले पदं कल्पितम्।

इदानीं मे विलापोऽपि रुद्धः। शान्तिः।

श्रीसुरेन्द्रकुमार काव्य सांख्यतीर्थस्य।

---

## पुष्पदन्तादि विवरणम्।

### ( पाटलीपुत्र नगरीतिहासः )

( कात्तिकतोऽनुवृत्तम्।)

एकदा सतीर्थगणैन सहाहं समासीन आसम्। गुरुदेवश्च समाप्य सन्ध्यावन्दनादिकं विद्यामन्दिरे समुपविष्टः, अस्मिन्नवसरेऽस्माभिः पृष्टो गुरुदेवः, "गुरुदेव! कथमियं पाटलीपुत्र नगरी कमलालयायाः सरस्वत्याश्च निवास भूमिः?" अत्रैका प्राचीनगाथा अस्माकं स्मृतिपथे पान्थायते "रमा यत्र न वाक् तत्र यत्र वाक् तत्र नो रमेति" श्रूयते च लक्ष्मीः सरस्वती द्वे एकत्र न रमेताम्।

गुरुदेव स्त्वस्माकं वचनं निशम्य किञ्चिद्विहृष्टोऽप्यस्मत् कौतूहलोपशान्तयेऽवदत्—वत्सवृन्द! मन्ये श्रुतं युस्माभि र्मन्दाकिन्यवतरणस्थले कनखल नामकं पवित्रं तीर्थं वर्त्तते, तीर्थेऽस्मिन्नवस्थाय दक्षिणापथवास्तव्यः कश्चित् ब्राह्मणः सस्त्रीकस्तपोऽतप्यत, तस्य त्रयः पुत्राः। कालक्रमेणासौ द्विजवर्य्यः सभार्य्यः नियति नियोगतः कालकवले निपतितः।

ततश्च ब्राह्मणकुमारा अनाथा अनाथनाथं भूतनाथं चिन्तयन्तो

निरन्तरं विद्यालाभार्थं नृपतिनिलय मगच्छन्। तत्र कतिचिद् वर्णाश्रमव्यवस्थाय त्रैविद्येभ्य स्त्रयीं विद्या मधिगच्छन्त। अथैकदा ते जन्म-भूमि दिदृक्षया दक्षिणापथं प्रति प्रतस्थिरे। समासाद्य च तं प्रदेशं सागरसमीपवर्त्तिनि कस्मिंश्चिन्नगरे भोजकनामधेयस्य भूदेवस्य सदने आतिथ्य मुररीचक्रुः। सत्यपि सम्पत्प्राचुर्य्ये अपुत्रतया भृश विषादमुपगच्छतो द्विजवरस्य तिस्रः सुता एव विभवाधिकारिण्यः। स ब्राह्मणतनयत्रयमासाद्य सद्यः प्रमोद परिप्लुतमानसो निजनिवासे निवासयतिस्म सादरम्। एवं गच्छत्सु कतिपयदिवसेषु कदाचित् कथाप्रसङ्गेनासौ कन्यादानविषयकं स्वमनोरथं तेभ्यो विज्ञापयामास मुहुरन्वरीरुत्सोच्च तान् ताः परिणेतुं।

अथ तेषु विपुलविषयभोगलालसागृहगृस्ततया तथेत्यभिहितवत्सु सोऽपि वैवाहिक द्रव्यसम्भार सञ्चये सन्तत मन्तःकरणं समादधत् वहिःपुरं प्रेषयामास अनुचराननेकशः। निजपुरं पुरन्दरपुरमिव समुच्छ्रितध्वजराजिराजितं कुसुमदामनवपलाश-विलासिततोरणकं मणिमुक्तासमुज्ज्वलस्तम्भं विचित्रचित्राङ्कितभित्तिजातं विविधराग-रञ्जित-वितांशुककेतुकमनीयहर्म्यरम्यं समुच्चरत्तूर्य्यनादन्यक्कृत-जनौघकौतुककोलाहलं नीरजीकृतरथ्याभागं स्वधूपधूपितोपान्त प्रदेशं विवाह महोत्सवं सूचयच्चकाशे। ततः सुधाकरे करनिकरं विकिरत शुभेलग्ने तेभ्यः कन्यात्रयं भोजकः सम्प्रददे, कन्यासम्प्र-दानसमये तेन स्वीयसर्व्वसम्पत्तयो जामातृभ्य उपढौकिताः। अन-न्तरमसौ गङ्गासङ्गतसमीरणेन गङ्गोत्तुङ्गतरङ्गेणाच आत्मानं पवितु मसरद् वाराणसीम्।

ब्राह्मणकुमारा हर्षोत्फुल्ललोचनाः प्रकृतिपेलवाभिः पद्मपलाशा-क्षीभि नितम्बिनीभिः समं विस्रम्भालापकलापेन कालं नयन्ति,

पतिपरायणा ललना अपि परमाराध्यपतिपादपद्म-सेवनाय मनः समादधन्। सम्पत् सम्पद मनुगच्छति, सुतरां तदानीं सुखशान्ति प्रभृतयः परस्परं विजेतु कामा इव कुसुमसुकुमारान् ब्राह्मण कुमारान् समाश्रिताः। योषितस्तु भूलोक मधितिष्ठन्त्योऽपि स्वर्लोकशान्ति मुपभुञ्जतेतराम्।

किन्तु हन्त! चक्रिचक्रेण चक्रवत् परिवर्त्तते जन्यजातम् कश्चिकोऽपि चिराय चञ्चलां भाग्यलक्ष्मीं समीक्षितुं समर्थः। "सुख-स्यानन्तरं दुःखं दुःखस्यानन्तरं सुख"मिति विधिविधानम्। अहो गत निर्वाणप्राया तासां सुखदीपिका, जीवलोको निरालोक इवाव-लोक्यते।

लोकक्षयदक्षा दुर्भिक्षराक्षसी लोकान् ग्रसितुकामा व्यादत्तवदना समन्ता दटाट्यते, अन्नाभावतो हाहाकाररवेण दिङ्मण्डलं मुखरी-कृतम्, ज्वलति दारुणो दावानलः, मानवाः कङ्कालशेषाः पलाशशयना शयाना एव समय मतिपातयन्ति। केचन केचन आत्मोदर पूरणाय पुत्रकलत्रादीनपास्य स्वाभिलषितं देशं व्रजन्ति, भैक्ष्याभावेन प्रति-दिनं शतशो मानवा अकाले कालकवले निपतन्ति। लोकक्षय-करेऽस्मिन् काले भयङ्करे आहार्य्ये प्राचुर्य्यवैधुर्य्येण विभवसद्भावेऽपि अनेक एव आहार्य्यं संग्रहे असमर्थाः। अनेकेषां सुखभाण्ड मकाण्डे चिराय भग्नता मुपगतम्। येतु मनुजसत्तमाः स्नेहसूत्रनिवद्धा स्ते स्वपुत्रकलत्रादीन् विहाय न ययुः स्थानान्तरम्। हा हन्त!! नास्त्यस्मिन् संसारे नृशंसानां किमप्यकरणीयं मायादया स्नेह प्रभृतय स्तावदन्तर्हिता स्तेषामन्तःकरणात्।

अहो वहिर्मनोहराः पशुप्रकृतयः पुरुषापसदा विप्रपुत्राः पति-परायणा स्ता स्त्रियो ललनाः सहसा विहाय समीहितं देशं समाययुः।

निराश्रयाभिः प्रमदाभि रपदे प्रमादः समासादितः। किन्तु भगवान-नाथनाथो भूतनाथः सतीनां सहायः। पतिविनाकृताः पतिपरायणा दैवाश्रया अनशनशीर्णा स्ता योषितो गेहं विहाय पति पादपद्मं-चिन्तयन्त्यो निरन्तर मटवीमटन्त्यो लोकालय मालोकयन्, अतिकष्ट मत्रशिष्टं स्थानमतिक्रम्य तत्र उपतस्थिरे। तन्निलय निवासिनो मानवा धनिनो, मानिनो गुणिनः करुणापरतन्त्रहृदयाश्च, गेहस्वामी ललनात्रयं परिश्रान्तकलेवरं म्लानमुखं निरीक्ष्य समाश्वासयत् सुमधुरभाषितेन।

गृहस्वामी नाम्ना यज्ञदत्तः। यज्ञदत्त आलापकलापेनाज्ञासीत्—गेहागता रमण्य स्तस्य मित्रस्य कन्याः। ततः प्रभृत्यपत्यनिर्विशेष-मपश्यद् यज्ञदत्तः कन्यात्रयं, किन्तु सततं पतिचिन्तया म्रिय-माणानां तासा मन्तःकरणतः शान्ति रन्तर्हिता।

आसीत्तासु ललनासु काचिदन्तःसत्त्वा, कालेन प्रसवावसरे समुपस्थिते सा सुतमसुत, शशाङ्कसङ्काशं तनय-वदनं निरीक्षमाणाया स्तस्या विषण्णमानन मपि प्रसन्नं सम्पन्नम्। मानसक्षेत्रे पुनराशा-लताङ्कुरः समुद्गतः। तिसृणा मेव रमणीनां स्नेहवीक्षणमेकलक्ष्ये निपतितम्।

अथ कदाचिन्महानिशीथे निशीथनाथे मध्यगगनं विहरति रमणीत्रयं प्रबल निद्राभिभूतं, सर्व्वे प्राणिनो नीरवाः, निस्तब्धः समस्तो जीवलोकः, प्रसभं निष्प्रभं जगत्।

सहसा तिरोहिता निस्तब्धता, निद्रानिमीलितलोचना स्ता ललनाः स्वप्ने समीपे समुपस्थितं द्वीपिचर्म्मपरिदधानं जटाजूटमण्डितमुण्डं विभूतिविभूषितविग्रहं शशाङ्कलाञ्छितललाटं श्मश्रुराजिराजित मुखमण्डलं बाहुविधृत रुद्राक्षं विरूपाक्षमीक्षामासुः। क्रमशः—

श्रीहेरम्बनाथ शर्म्मसिद्धान्त शिरोमणेः।

## गुरुशिष्य संवादः।

( पूर्व्वतोऽनुवृत्तः। )

सुमुखः। गुरुदेव! यदि दशमावधिरेव कन्याविवाहस्य प्रशस्ततरः कालः, असंस्कृताया रजोदृष्टिरपि धर्म्मशास्त्र-विगर्हिता तत्किमस्मद्देशे कुलीनब्राह्मणेषु अन्यत्रापि च प्रायो वैपरीत्यं परिलक्ष्यते, दशमवर्षाभ्यन्तरे कन्यकानां विवाह स्तेषु कदाचिदेव भवेत् परन्तु पञ्चाशद्वर्षवयस्कानामपि कुमारीणां विवाहवार्त्ता श्रूयते।

गुरुः। कौलीन्यबन्धनमेवास्य वैपरीत्यस्य प्रधानतमं कारणं, तद्बन्धन मतिक्रम्य कन्यादानं समाजे निन्दनीयं, उपयुक्तस्थले च पात्राभावः, पात्रसत्त्वेऽपि तदभिभावकानामतितरामर्थ पिपासुतया तन्मेलकाद्यभावः, सुतरामनिच्छयापि ते वैपरीत्यमेव मनन्यगतिकतया समाचरन्ति।

सुमुखः। गुरुदेव! कन्याविनिमयेनार्थग्रहणवत् पुत्रविनिमयेनार्थग्रहणमपि किं पापजनकं न भवेत्? यत्तत्सर्व्वेषामेवाप्रतिहता प्रवृत्तिः धार्म्मिका नामपि समाज-शिरसि वर्त्तमानानाम्।

गुरुः। विनिमये पापवैषम्याभावेऽपि पुत्रविनिमयाहृत मर्थजातं यौतुकत्वेन परिकल्प्य धार्म्मिकाभिमानित्वं सार्थकयन्ति स्वार्थान्धाः सामाजिकाः।

सुमुखः। सम्प्रति बहूनामेव समाजसंस्कारकाणां वैवाहिकार्थादान प्रदान निवारणे बद्धपरिकरता दृश्यते,मन्ये तत्फलतः कुरीतिरियं परित्यज्येत।

गुरुः। अहो भ्रान्तिः!! एतैः स्वार्थतत्पर समाजसंस्कारकैः

कार्य्यत: किमपि न भवेत्, वाक्यवीराः खलु एते। केवलं परोपदेश एवाधिपत्यमेषां पाण्डित्यस्य,प्रकृतो धर्मभावो मर्म्मणि नाभिसम्बद्धः। यावद्धर्मभावाभ्युत्थानं न भवे त्तावदेषां समाजसंस्कार स्तिरस्कार पदमेवालभेत। साक्षात् प्रत्यक्षीकृतं मया ये स्फीतवक्षस: साक्षेप हुङ्कारोत्या सभासमक्षं भ्रुकुटी-विक्षेपे रन्यानधिक्षिप्य चक्षुर्जलेन वक्ष:-स्थलं प्लावयन्ति, संवादपत्रे नियतं विलिख्यापि ख्यापयन्ति स्वदेश हितैषिताम्. ये च वाग्मिता प्रभावेण सर्व्वानाकुलीकृत्य चटाचट करतलध्वनिभिर्मुखरयन्ति सभाक्षेत्र, वादयन्ति च स्वार्थत्याग दुन्दुभिं, येपि च संस्कारकाग्रेसरा: प्रतिसभमत्युच्चकण्ठैर्घोषीकृत्य कथयन्ति— "यावद्वैवाहिक धनादानप्रदानत: समाजो न विमुच्येत तावत् कथं कथमपि मङ्गलं न भवेत्। अहो !! एवं दुर्व्यवस्थात: कन्यादायग्रस्त दुस्थानामवस्था मालोक्य केषां सहृदयानां हृदयं न विदीर्य्येत ? कति शुद्धस्वान्ता सर्व्वस्वान्ता अपि सन्तानममलया वरपक्ष मन्तोषयितुं न शक्नुवन्ति। कति अनाथा असहनीय-कन्यापोषणव्यथा अपि पुनस्तत् प्रदान चिन्ताक्रान्ता उन्मत्ता जायन्ते। कति धनिनोपि वरस्वामिन: अस्वाभाविक माक्रमण मसहमाना विपर्य्यस्ता भवन्ति। एतदतिजघन्य--धनादानप्रदाननिर्बन्धन--फलतः वरकन्यापक्षयो श्चित्तविक्षेपाक्षेप वार्त्तापि प्रायश एव श्रूयते, तत्परिणामतश्च वरवंशाप्रतिष्ठत प्रमुख विकाशेन कन्यका यावज्जीवं पितृगृहमपि गन्तुं नार्हन्ति। हा हन्त !! किमस्मिन् शिक्षितानां चक्षुर्न निपतेत् ? प्रतिगृहमेव विचित्र चित्र मालोक्यापि येषां चित्तं नाप्लवेत नोजाने किमुपादानेनोपपादितं तेषां हृदयम्। सभाक्षेत्रे चन्द्र सूर्य्यादीन् आलोकृत्याहं प्रति जाने यावन्मे धमन्यामेक विन्दु शोनितमपि प्रवहेत् तावत् सर्व्वस्वव्ययेनापि राक्षसवत् कर्कश मिमं व्यवहारं समूल

मुन्मूलयितु यतिष्यइति ।" येषाञ्च तद्‌गगनभेदि शब्दैः स्तब्धा इव सञ्जाताः । अहो अधःपातः !! त एव वाक्यवागीशाः सहस्राधिक मुद्राप्रदान प्रतिश्रुतिमन्तरेण स्वपुत्रोद्वाहस्य कथामपि नावतारयन्ति । इत्थं सुतरा मेव त्यागशीलानां समाज संस्कारकाणां वचःसु के बुद्धिमन्तः श्रद्दधेयुः ! केवलं वाक्येन नो तुष्यन्ति सन्तः, कार्य्येणा-दर्शं चरित्वा यदि वाक्येनोपदिशन्ति तदैव तत्पन्थान मनुवर्त्तन्ते । सर्व्वदापि वाक्यतः शयमाहारविहारादीनां दोष मुद्‌घोष्य यः स्वयं सम्भोगविलास पराकाष्ठामधिरोहति, के तद्वाक्य मनुवर्त्तेरन् ? अनु-वर्त्तमाना अपि तात्कालिकवाक्यविमोहेन क्रमशस्तद्व्यवहारादविश्वस्ता नितरां विरक्ता भवेयुः । सुतरामेभ्यः समाज संस्कार प्रतारकेभ्य एव कुसंस्कार वशवर्त्तिनो मूर्खा इति मन्तव्यम् ।

---

## कोकिलालापः ।

अयि कोकिल ! मामकं रुतं ननु हृद्यं खलु गद्यते बुधैः ।
इति मा भज गर्व्वदुर्भरं तव जेता किल मानिनो रवः ॥१॥
किमु विवेक विहीन पतत्रिणं कलरुतं सृजता जगतीकृता ।
बुधपराभवलोक निवर्हणं वत वहिस्खलितं परमेष्ठिना ॥२॥
अयि पिक ! त्वमुपात्तकलो रवे नहि तथापि तवात्र सभाजना ।
वत वसन्तमृतुं यदपेक्षसे यदभिकाङ्क्षसि चूततरुं परं ॥३॥
पिक ! भवन्तमहो कलकूजिनं वत पतत्रिणमेवससर्जिवान् ।
तदनुलोक सभाजनमात्मभूः अनिपुणोऽत्र च नप्रतिपेदिवान् ॥४॥
भृशमये श्रुति निष्ठुरमारटन् करट एष तवानुकरोति च ।
यदि न ते ऽस्तिहि पञ्चमनैपुनी पिक ! कदापि च गीत समुत्थितिः ॥५॥

दण्डयतीमठ भट्ट—श्रीश्रीनिवास शास्त्रिणः—

## कौतुककणा।

### अभिलाषिणी।

कस्याश्चिद्ब्राह्मण्या मत्स्य-भक्षणार्थं मभिलाषः समभवत्। ततः सा स्वामिनं प्राह "मत्स्यमनानयतः ते बहुदिनानि अतीतानि, अद्य मत्स्यमेकमानय।" ब्राह्मणः अपराह्णे हट्टं गत्वा एकं रोहितमत्स्यं जीवन्तं क्रीतवान्, मनसि चिन्तितवांश्च "अन्यानि द्रव्याणि गृहीत्वा गमने मे विलम्बो भवेत्, प्रेरयाम्येनम्। तत्कथं प्रेषयामि, किमङ्गोड्डीयमान-श्येनेन साकं प्रेरयामि—नहि नहि, स यदि न मे गृहं परिचिनोति। जलपथेन मत्स्यमेवप्रेरयामि सोऽपि अन्यैः मीलितो भवेत्; भवतु चिह्नितं करोमि" इति चिन्तयित्वा वणिजामापणं गत्वा सिन्दूरेण तमलङ्कृतम् जले विसृज्योक्तवान्।

"गच्छरे मत्स्य ! गच्छ, अन्यानि द्रव्याणि नीत्वा अहमागच्छामि, ब्राह्मणीं ब्रूहि। अवश्यं मम ताम्रमुद्राक्रीतस्त्वं मद्गृहं परिचिनोष्येव।" ततो गृहमागतोविप्रः भोजनवेलायां पात्रं मत्स्यहीनं दृष्ट्वा ब्राह्मणी मुक्तवान् 'मत्स्यः कुत्रगतः' इति; साह 'कुतोमत्स्यः ?'; तेनोक्तम् "किं कथयसि, मया सिन्दूरेणालङ्कृतो मत्स्यः प्रेरितः, साक्षी च मे क्रीतसिन्दूरोवणिग्वर्त्तते।" तत स्तया तिरस्कृतो ब्राह्मणः स्वकीयां मूर्खतां बुद्धवान्।

काव्य-व्याकरणतीर्थ—श्रीआशुतोष भट्टाचार्य्यः, ( वरिशालवासी। )

## प्राप्तग्रन्थानां संक्षिप्तसमालोचनानि।

### सहजे संस्कृतशिक्षा।

पुस्तकमिदं सुप्रणालीवत्तया सुकुमारमतीनां शिशूना मपि आशु बोधगम्यत्वेन प्रथम संस्कृतशिक्षार्थिना मतीवोपयोगीति मन्यामहे।

अस्यच कृतोप्रणीता श्रीयुक्त वनमालि वेदान्ततीर्थ एम्, ए महाशय: स्वोयोद्देश्य सिद्धौ सिद्धमनोरथ इति दृष्ट्वा समतीव सन्तुष्टा वयं विद्यालयेषु प्रचारवाहुल्य मस्याभिलषामः। संस्कृत चतुष्पाठी स्थितानते वासिनामपि अस्य पुस्तकस्य व्यवहारो रचनानुवाद-शिक्षण विधौ विलक्षण फलप्रदो भवेत् ।

आनन्द विज्ञान ।

स्वामि श्रीमत् परमानन्द परमहंस विरचितं वङ्गभाषामयपद्य निवद्धमिदं माध्यात्मिक काव्यं श्रीयुक्त शशधर विद्याविनोद भट्टाचार्य्येण ( कलिकाता, जोरावागान, १४ नं हरलाल दासेर लेन ) स्थितभवनात् प्रकाशितं। मूल्यमेकरूपकं। ग्रन्थकारोयं साधारण वोध्य हृद्य पद्यभाषया वेदान्त-प्रतिपाद्यविषयान् वोधयितुं यथेष्ट मचेष्टत। पुस्तकाध्ययनेनाध्यात्मिकोन्नति सोपान मध्यारूढ़ोऽयं महानुभव इति निर्व्वाध ममवुध्यते, नो चे देताहृश सारगर्भं सरसोपदेशावलिप्रदर्शनं दूरदर्शि जनोचितं नैव सम्भाव्येत। ग्रन्थकारस्य संक्षिप्त जीवन वृत्तान्तः प्रतिकृतिश्च पुस्तकैकदेशे वर्त्तते। तस्मात् सर्व्वैरेव ज्ञान पिपासुभिरध्येतव्य मिदं माध्यात्मिककाव्य मित्यनुरुध्यते ।

रुक्मिणी हरणम् ।

पावना वास्तव्येन एम् ए कविभूषणोपाधिना श्रीहेमचन्द्र रायेण विरचितम् । काव्येऽस्मिन् वहव एव श्लोकाः सरल सरसपदविन्यास तया सुखपाठ्याः । कवित्व परिचयोपि रचयितुः स्थाने स्थाने परिस्फुट स्तिष्ठति। अधः पतितेऽस्मिन् देशे संस्कृत पण्डितानामपि सम्प्रति संस्कृतकाव्यप्रणयण प्रयासः प्रायशो न दृश्यत इति पाश्चात्य विद्याविशारदस्यापि अस्यायमुद्यमः सर्व्वथैवाशाप्रदः प्रशंसनीयश्च । आशास्यतेचैवमुत्तरोत्तरमस्य कवित्वशक्ते र्व्विकाशः परिदृश्यत इति शम्।

# संस्कृतोपाधिपरीक्षा, १९०४ ।

## व्याकरणानां साधारणप्रश्नाः

१ । वर्षमधीते, वर्षेणाधीते, मेघानधोऽधः, मेघानामधः, एतेषां वाक्यानां परस्परमर्थभेदोऽस्ति न वा ? अस्ति चेत् कीदृक्, नास्ति चेत् विभक्तिभेदः कथम्, सानुशासनमुत्तरं लेख्यम् । १०

२ । अजागरीदिव मे प्रज्ञा आशां छेतास्तवाश्रयीत ।
मन्युर्मन्य ममास्तम्भी दधासीदिव मे मतिम् ।
अस्मिन् श्लोके क्रियापदानां वैकल्पिकानि रूपान्तराणि दर्शय । १६

३ । अलं विलम्ब्य त्वरितुं हि वेला । क्रमेण पेष्टुं भुवनं द्विषामपि । सा लक्ष्मीरुपकुरुते यया परेषाम् । उक्तवाक्येषु विलम्ब्येत्यत्र क्त्वाचः त्वरितुमित्यत्र तुमः द्विषामित्यत्र परेषामित्यत्र च षष्ठ्याश्च स्वस्वान्यनुशासनानि प्रदर्शय । १२

४ । विमृश्वरणाः ऊर्द्धगुः असिक्नी युवजानिः उदन्वन् वहुलुणाम् एतानि पदानि साधय । १४

५ । समां समां प्रसूते, मुद्गानां भवनं क्षेत्रम्, कुत्सितो नरः, अध्यापको भूतपूर्व्वः, वेदान्तेन ख्यातो वित्तो वा, एतेषु वाक्येषु तद्धितप्रत्यये कृते पदानि कीदृशानि भवन्ति । २०

६ । भार्य्यायै क्रुध्यति स्वामी पुत्रः पित्रे प्रक्रुध्यति ।
दण्डानाय भीषयति रोचतेऽस्य न किञ्चन ।
आह्वते शत्रुवत्साऽसौ उत्तपत्यात्मनः करम् ।
पीठादुत्तिष्ठमानस्य उपतिष्ठति भोजने । १६
सूत्रोल्लेखपूर्व्वकं पद्यद्वयस्थानां क्रियापदानां साधुत्वमसाधुत्वं वा दर्शनीयम् । १२

७ । अधिशेते स्त्रियो दीव्यन् परिक्रीतः शतेन च ।
हारयन् वृषभं भारं पुत्रं दर्शयते गुरुम् ।
अत्र पदविशेषेषु विभक्त्यन्तरप्राप्तिसम्भवे तदुल्लेखः कार्य्यः । १२

## मासावतरणिका ।

मन्ये वसन्त ऋतु मावमन्तं समर्च्चितुं सञ्चित पुष्पराजिः ।
वैरः परिवीकृतभूविभागो विचित्रपत्रावलि चित्रितोऽयम् ॥

---

## न्यायसूत्रालोचन समालोचनम् ।

( लेखक एवात्र प्रतिभूर्न सम्पादकः )

---

षष्ठ संख्यायामार्य्यप्रभाया आर्य्यवर्य्येण विद्वद्वरेण्येन एम्, ए (M. A.) इत्युपाधि विमण्डितेन श्रीयुक्तवनमालिवेदान्ततीर्थ महोदयेन निबद्धो न्यायसूत्रालोचन शीर्षकः प्रबन्धः विजानतां सर्व्वेषामेव मनःप्रीतिकरः । वस्तुतः सन्नाजितं न [illegible] तदपि चेद्युतया उपोढ़ भवेत्तदा मणिकाञ्चन [illegible]

चेतस्तदुपलभमानानाम्। परन्तु मम तावन्मन्दभाग्यस्यास्मिन् प्रबन्धे बहव एव सन्देहाः समजनिषत, ते इदानीं प्रकाश्यन्ते

तत्रभवता वेदान्ततीर्थ महोदयेन प्रतिपादितं "प्रमाणप्रमेय"-त्यादि न्यायसूत्रे निःश्रेयसपदं कल्याण सामान्यपरं नतु मोक्षपरं, षोड़शपदार्थज्ञानान्मोक्षासम्भवात्। वार्त्तिककृतः "आत्मज्ञानमिह तत्त्वज्ञान" मित्युक्तिस्तु भ्रान्तिमूला, षोड़शपदार्थज्ञानस्यैवात्र तत्त्वज्ञानत्वात्। एवञ्च सति षोड़शपदार्थानधिकृत्य प्रवृत्तत्वादस्याक्षपाद दर्शनस्याध्यात्मविद्यात्वमपि वार्त्तिकोक्तं निरस्तं। निःश्रेयसपदस्य कल्याणार्थकत्वे तत्त्वज्ञानस्य च आत्मज्ञानेतरार्थकत्वे प्रमाणान्यपि तत्रभवता संगृहीतानि। किञ्च अधीतेन न्यायेन कल्याणान्याकृष्यन्ते इत्यपि उदाहरणेन प्रतिपादितं। बुद्धिश्च तीक्ष्णा भवतीत्यत्राधुनिका नैयायिका एव प्रमाणत्वेनाकृष्टाः। तत्र च नास्माकं काचिदपि विद्यते विप्रतिपत्तिः। एतत् पुनरचारुतरं तत्रभवतो वेदान्तिक-धुरीणस्य यद्वेदान्तसिद्ध सिद्धान्तमपहाय न्यायसूत्रमेवालोचितम्। मन्ये "प्रभा" सम्पादकस्य नैयायिकत्वं परिज्ञाय तन्मनोविनोदनाय न्यायसूत्रमेवालोच्यत्वेन गृहीतं मन्ये भवता नानाविधपाण्डित्यमण्डन मण्डितेन पण्डितप्रकाण्डेन वेदान्तिना। तत्रभवता प्रदर्शितोऽर्थ-श्चास्माभिरगृहीष्यत यद्येतन्न्यायदर्शनं आर्य्यदर्शनान्यतरन्नाभविष्यत्। कुण्ठामीवयं न्यायदर्शनस्य प्रतिपाद्यं बौद्धादि नास्तिकदर्शनैरपि परित्यक्तं कल्याणमाचष्टुम्। न जातु भारतीया आर्य्याः क्वचित् श्रेयःसरणिं परिहाय प्रेयःसरणि मनुसरेयुः। विगर्हिता हि श्रेयः प्रार्थनातः प्रेयः प्रार्थनेति धूलिधूसरितचरणा भारतीया बालिका अपि प्रतिपद्यन्ते। तिथ्यादि विशेषे द्रव्यविशेषाणामनुपयोगादयः प्रमाणानि श्रेयः प्रार्थनापरतां माय्याणाम्। एव मार्य्याणां सर्व्वेनियमाः

श्रेयसि ननु प्रेयसि ।

एवञ्च कल्याणं हि प्रतिपुरुषं भिद्यते रागद्वेषादि भेदात् । विष्णुमित्रो देवदत्तस्योपकारक इति विष्णुमित्र जीवनं देवदत्तस्य कल्याणकरं, यज्ञदत्तस्याहितइति तज्जीवनं न तस्य कल्याणकरं, इत्येवं कल्याणं हि प्रतिपुरुषं नानारूपं गौतमनये दोष मध्य एव निवेक्ष्यते, न जातु हेयो-दोषः शास्त्राध्ययनोद्देश्यो भवितु मर्हति । "तदत्यन्त विमोक्षोऽपवर्गः" इत्यादि निर्द्दिष्टस्यापवर्गस्यैव शास्त्राध्ययन प्रयोजनत्वेन निर्द्धारितत्वात् ।

किञ्च यदि नाम "दुःखजन्म प्रवृत्तिदोष मिथ्याज्ञानाना मुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इत्यादीनि सूत्राणि नास्यासन्निह दर्शने तदापि नास्यास्यदर्शनस्य कल्याणार्थकत्वं कथमपि उपापत्स्यत । न खलु अपवर्गशब्देनापि कल्याणार्थकत्वं वक्तुं शक्येत ।

तत्र भवता यत्र उदाहृतं नैयायिकाः कल्याणं लभन्ते इति तत्र इदानीन्तना न्यायशास्त्रविदो दोषविद एव प्रमाणमिति तद्दृष्यं नैयायिकैः नास्ति कल्याणस्य परिचयोपि इत्यस्यैव इदानीन्तना नैयायिकाः प्रमाणम् । अधीते न्यायशास्त्रे बुद्धि स्तीक्ष्णा भवतीति मन्ये तत्रभवता नव्यन्यायाध्ययन परिणतक्लेशान् तार्किकानभिसन्धायैवोक्तं, अन्यथा यथा न्यायसूत्राध्ययनात् बुद्धिस्तीक्ष्णा भवति तथा वेदान्तादिशास्त्रानुशीलनेनापि भवेत् । गौतम सूत्रमप्यधीत्य लब्धप्रतिष्ठो न कोपि अनधीत्याद्वैतसिद्ध्यादीनि पुस्तकानि अंशतोपि व्याख्यातुं प्रभवति, प्रभवन्ति पुनः प्रतियोगितावच्छेदकतापरिच्छिन्नहृदयमस्तिष्काः केचन तार्किका एव । परन्तु न खलु बुद्धे स्तैक्ष्ण्यं शास्त्राध्ययनस्य प्रयोजनं भवितु मर्हति अपितु प्रासङ्गिकमेव तदिति मन्यामहे ।

अथ यदि नामेदं दर्शनं कल्याणपरत्वेनाध्यात्म शास्त्रासनादाच-

विष्यत् व्यासोपि तदाध्यात्मशास्त्रखण्डन स्तावे नाऽखण्डयिष्यदिदं दर्शनम्। नहि कल्याणपराणि कामन्दकीयनीत्यादीनि तत्रभवता खण्डितानि। गौतमसूत्र खण्डने च भवगान् शङ्करः किंवदन्ती अपि नाऽभविष्यत्। षोड़शादिष्वप्येवमिति सूचयतः कपिलस्यापि एतदध्यात्म शास्त्रमिति सम्मतिः परिलक्ष्यते।

महाभारते भवतु नाम कल्याणवाचि निःश्रेयसपदं नतु तद्दृष्टान्त मात्र मालम्ब्य भवितुमर्हति आस्तिकदर्शनेपि अमुष्मिन्। भारतीयार्य्यदर्शनान्यतमे नश्वरसुखभोगोपाय कल्याणं प्रतिपाद्यमिति वक्तु न निःसरन्तीव नो वाचः। वेदे स्वर्गएवाधिगमनीय इत्यपि अधमाधिकारिभ्यः प्रशस्त एव नतु मुख्यतः, उपनिषदादीनां मोक्षपरत्वात्।

यदप्युक्तं मोक्षादन्यदपि मङ्गलं सम्भवतीति तदपि मनोरथमात्रं रागद्वेषादिमूलकत्वात् मोक्षेतरकल्याणस्य दोषमध्ये, जन्मजरामरणादि जनकस्य कल्याणस्य हेयमध्ये निक्षिपतो मते मोक्षस्यैव वस्तुतः कल्याणत्वात्। किञ्च यदि कल्याणमेव न्यायदर्शनस्य उद्देश्यं स्यात्तदा अन्तरेणापीश्वरादीनां प्रमेयानां विज्ञानं तत्सिद्धतीति तेषां ग्रहणं निरर्थकं स्यात्। तज्ज्ञानविरूढ़ानामपि नीतिविदां विदां कल्याण लाभदर्शनात्। वस्तुत आत्मेश्वरज्ञाने जाते मुक्तिर्जायत इति कस्तज्ज्ञानतः विषमयविषयसुखं प्रार्थयमानः आत्मनो रासभ स्वभावत्वं प्रकटयेत्। तथाहि भारविः—

य: करोति वधोदर्का निःश्रेयसकरीः क्रियाः।
ग्लानिदोषच्छिदः स्वच्छाः स मूढ़ः पङ्कयत्यपः॥

इष्यते न जातु अन्तरायरहितं कोटि पतित्वं परित्यज्य शतपतित्वं प्रार्थयते कश्चिद्धनलोलुप इति। आत्मज्ञानेन च मोक्षं ब्रवीति

श्रुतिः—"तमेव विदित्वा अति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्येष साक्षी। तस्मान्नास्ति कामनापरत्वं निःश्रेयसशब्दस्य अपितु मोक्षपरत्वमेव।

षोड़शपदार्थज्ञानात् कथं नाम मोक्षावाप्तिरित्यत्र तत्रत्यानि सूत्राण्येव प्रमाणम्। प्रमेयज्ञानाय प्रमाणमपेक्षितं सुतरां प्रथममेव प्रमाणं तत्त्वतो ज्ञातव्यं। प्रमेयन्तु आत्मादिकं विज्ञाय कथं न मोक्षः प्राप्तव्य इति तत्र भवानेव जानीते। मोक्षमार्गेऽपि प्रतिनियतमेवोदयन्ति संशयादीनि, हेयानि च तान्यविज्ञाय न त्यक्तुमर्हति कश्चिदिति तेषां ज्ञानमपेक्षितं मोक्षार्थिनां कृपावारिधिना सूत्रं जिज्ञासो-रन्यथा। किं नाम प्रयोजनमात्मज्ञानस्य इत्यविज्ञाय कथं नाम प्रवर्त्तेत जीवः दुष्करे बहुजन्मपरम्परायासजन्यज्ञाने 'आत्मेश्वर-तत्त्वे' इति प्रयोजनज्ञानमपेक्षितं। अप्रत्यक्षस्य ईश्वरस्य ज्ञानं न जातु दृष्टान्तमन्तरेण सम्भाव्यते इति दृष्टान्तज्ञानमपि। सिद्धान्तज्ञानं स्वरूपतः एवापेक्षितं नहि अनिर्धारितेऽर्थे प्रवर्त्तितुमर्हति कश्चित्। यदि नाम कदाचित् पाषण्डो नास्तिकः कश्चित् तर्काभास प्रदर्शनेन वादादिभि भ्रान्तिमार्गमनुसारयेदिति तस्मा-दात्मानं सुहृद्धीपेता वादजल्पवितण्डाहेत्वाभासच्छलादिकं तत्त्वतो विज्ञाय सावहितेन स्वनिर्धारिते च वर्त्मनि दृढेन भाव्यमिति तेषां ग्रहः कृतो गौतमेन। एवमुदाहरणादिभिः स्वमतं दृढीकर्त्तु-मवयवानां। परमत निराकरणाय च जाति निग्रहस्थानादीना-मुपयोगः।

यदि कालनाशपरमिव दर्शनमस्त्विति इहलौकिकपदार्थैः स्वास्थ्याधिगमः, ईदृश आचारः कर्त्तव्यो गृहिभिः, एवं धनाधिगमः, एवं यशोलाभः, इत्यादि व्यवहारो गौतमादिशास्त्रे वर्ण्येत? नतु उक्तः। परन्तु

ईदृश ईश्वरः, एतद्‌द्वं, एवं तस्मान्निवृत्तिः, ईदृशः संसार इत्यादिकमेव सविस्तरं निर्णीतं न्यायदर्शने।

तस्माद्दुःखिता वयं यत्तत्रभवता दर्शनशास्त्राध्यापकेन पण्डितप्रकाण्डेन एतत्प्रबन्धमारचयता गौतमोयैकसूत्राध्यायित्वमात्मनः प्रमाणीकृतमिति। यदि तावदाद्योपान्तमध्यैष्यत तदा तावदीदृशार्थलिखने न प्रावर्त्तिष्यत इति मदीया मतिः।

"निन्दन्ति पण्डितब्रुवा अकृतशास्त्राडम्बरान् सतामन्यानपि पुरुषधौरेयान् प्रशंसन्ति च श्राद्धे भूरिभोजनादिकं कुर्व्वन्तं अधर्म्मोपार्जितवित्तमपि" इत्येव वेदान्ततीर्थमहाशय प्रदर्शितं न तावत् गौतम सूत्रापरिज्ञानस्य फलम् अपि तु धर्म्मशास्त्राज्ञतायाः तथाच वेदान्ततीर्थमहाशयेनापि "अन्यायोपगत"मित्यादि धर्म्मशास्त्रवचनमेवात्र प्रमाणत्वेन परिगृहीतम्।

तिलमपि तालप्रमाणं प्रमाणयन्तो मोहयन्ति प्राकृतानां मनांसि पदवाक्यप्रमाणतत्त्वरसिकाः, सुतरां वाक्‌चातुर्य्यरहितेन साधु अपि कथितं मया न वाचकमहोदयगणमनांसि तोषयितुं प्रभवेत्। तस्मात् सर्व्वैरेवास्मिन्ननुध्यान परायणैर्भवितव्यमिति।

वस्तुतः अनुचितमेतत् वेदान्तरत्नमहोदयस्य भ्रान्तिपथ प्रदर्शनं मन्दमतीनां मतिव्यामोहजनकं यत्तेन मोक्षपरमपि शास्त्रं आपाततस्य कलाणपरत्वेन व्याख्यातु मभीप्सितम्। अथवा मन्ये तत्रभवता शिक्षार्थिनां मतिवैशद्यपरीक्षार्थे एव ईदृशव्याख्योपि कल्पोऽस्तु कृतः। यदि तेनैतत् कृत एवायं निबद्धः प्रबन्धः कृतःस्यात्तदा चपलो वालोऽयं मन्तव्यः। नाधीतं गुरुतो न्यायदर्शनं कदाचिदिति भ्रान्तिर्म्मे

सुलभा। यदिस्यामहं भ्रान्तस्तदा आशंसे तत्र भवानार्य्यपादः अपनोदयिष्यति तां संख्यान्तरे इति शम्।

आवेदनमिदं—

श्रीसुरेन्द्रकुमार काव्य सांख्यतीर्थस्य।

—※—※—

## देशीय पण्डित समाजस्यावस्था।

दिने दिन एव ब्राह्मण पण्डितसमाजस्यावस्था शोचनीयतां गच्छति। क्रमश एव पण्डितानां यादृग् विलोपो दृश्यते तेन ब्राह्मण पण्डित समाजस्यास्तित्वं स्थास्यति नवेति चिन्ता समुदेति। यस्यां वङ्गभूमौ नासीत्तादृशं जनपदं यत्र पदं पण्डितानां, यत्र च शत शतान्तेवासिनो नाध्यगीषत वेदवेदान्तादि शास्त्राणि। नासीच्च तादृशो द्विजन्मा आजन्मतो नाधीतं येन संस्कृतम्। हा हन्त!! तस्यामिव वङ्गभूमौ क्वचिदेव जनपदे कदाचिदेव कतिचिदेव जनाः संस्कृत मधीयते। या वङ्गभूमिरेकदा संस्कृत चर्च्चया सर्व्वोच्चस्थान मधिचकार। यद्वङ्गभूमि भूमिष्ठभु यष्टपण्डितमण्डलीनां प्रचण्ड पाण्डित्यवार्त्तया विमण्डित मद्यापि दिगन्तरालम्। यत् सुसन्तान परिनिर्म्मित संस्कृतग्रन्थाना मध्ययनाध्यापनान्यद्यापि प्रचलन्ति

देशेषु सर्व्वेषु। ब्राह्मणपण्डिता एव यद्वङ्गभूमेरङ्गमण्डनानि प्रधानतमान्यासन् ( वक्तुञ्च हृदयं विदीर्य्यते ) सैव वङ्गभूमिः कालप्रभावात् तादृशपण्डितविहीनेव क्षीणप्रभा प्रतिभाति। चतुष्पाठी तु प्रायेण प्रतिष्ठते। वङ्गदेशेष्वपि संस्कृतचर्च्चया प्राचीनतमयोर्नवद्वीप-विक्रमपुरयोर्वर्त्तमानसंस्कृतचर्च्चावस्थामालोचयद्भिरेव संस्कृतानुरागिभिरनायासेनावगन्तुं शक्यते संस्कृतचर्च्चावनतिः कियदुन्नति-सोपानमध्यारूढेति। यत्र च नवद्वीप-विक्रमपुरयोर्नानादिग्देशागतान् विद्यार्थिनो भिक्षालब्धधनैर्भक्षयित्वा निर्व्वाधमध्यापयामासुरध्यापकाः, यत्राध्ययनस्थान मलभमाना विद्यार्थिनः कदाचिदपि न प्रत्यावर्त्तिषत, परन्तु समागतेषु न्यायशास्त्रादिविद्यार्थिषु अन्न-पूर्व्विकयैवाध्यापकास्तान् संगृहीतु माग्रहीषत, तत्रैवाधुना अध्ययन स्थानस्यैतादृगभावो यत् प्रायश एव छात्राः स्थानमलभमाना इतस्ततः सञ्चरन्ति। यत्र चैकैकस्य सर्व्वप्रधानपण्डितस्य स्वर्गारोहणे वहुनेव समकक्षान्निरीक्ष्य पक्षपातभीरुकं सर्व्वप्राधान्य मति प्राक्प्रधानत एकः सर्व्वप्रधान मशिश्रियत् तत्रैवाधुना एकैकस्याभावे तदेव प्राधान्यं निराश्रयमिव यथेच्छ मेकैका माश्रित्य कथञ्चित् स्वीयास्तित्वं स्थापयति किमतो ऽतःपरं दुःखजनकमिति। अधुनापि ये सन्ति सन्तः कतिचित् प्रधाना स्तेषां पुनरभावे देशस्य दशा कीदृशी भवेदिति विधातैव सर्व्वान्तर्यामी जानाति, यतस्तत् स्थानं पूरयितुं शक्ष्यन्तीत्येतादृशा अपि केचिज्जायमाना नो निरीक्ष्यन्ते।

किमत्र कारणमिति चेद्देशीय धनिना मत्रानुत्साह एवेति प्रतीमः। यस्माद् ब्राह्मण पण्डिताः सर्व्वे एव निःस्वाः, अस्मिन् दुर्द्दिने केवलं स्वावलम्बनेन भिक्षालब्ध धनैश्छात्र संरक्षणं कथं कथमपि न सम्भवेत्। ( आगामि संख्यायां समाप्यते। )

# आर्य्यप्रभा।

द्वितीयवर्षे। } सुदुर्ल्लभाः सर्व्वमनोरमा गिरः। { ७म संख्या।

## मासावतरणिका।

गोविन्द-मानन्दभरेण नूनं समर्च्चितुं सञ्चित-पुण्यराशिः।
फल्गूत्सवामोदित-दिग्विभागः समागतः फाल्गुन-मंज्ञमासः॥

## धर्म्मः।

सुखात् परं दुःखं दुःखात् परं सुखं, अभ्युत्थानात् पतनं पतनादभ्युत्थानं, जन्मनो मरणं मरणाच्च जन्म, सर्व्वमेवैतत्कर्म्मानुसारेण जन्मिनां परिवर्त्तते, सुतरामधः-पतितानामपि मानवाना-मवश्यमेव कदाचिदभ्युत्थान-सम्भव इति मन्यामहे अधःपातचरमतामुपगते सम्प्रति भारते मादृशामपि शिश्नोदरपरायणानां धर्म्मानुसन्धित्सा समासाद्यते। सम्प्रति प्रायः सर्व्वेषामेव मर्म्मणि धर्म्मभाववीजमङ्कुरितं तच्च यदि सदुपदेशाद्यमृतसेचनैः पल्लवितमपि कर्त्तुं शक्येत तदा क्रमशः शाखाप्रशाखादिभिर्व्वर्द्धमानं वृक्षपदवीमापद्येत, तत्फलतश्च परमा प्रीतिरुत्पद्येत इत्याशास्महे। इतःपूर्व्वञ्च ये नव्यशिक्षिता धर्म्मकथानामत एव श्रवणं पिधाय भ्रू-कुटिविक्षेपेण पलायाञ्चक्रिरे, वञ्चकानिव धर्म्मयाजकान् मन्यमाना यथेच्छमवामंसत, कालप्रभावात्त एव सम्प्रति तेषामेव धर्म्मयाजकानामुपदेशान् शिरसि सादरं दिधीर्षन्ति, किमतःपरमन्यो सौभाग्यजनकमिति। सम्प्रति बहूनां नव्यभव्यसभ्यानाम-परिणतमस्तिष्काणाञ्च बालकानां धर्म्मबुभुत्सा-सन्दर्शनेन मानसक्षेत्रे कथञ्चिदाशालता विलसति। किन्तु दुःखमेतावदेव यद्धर्म्मबुभुत्सैव तेषां वर्त्तते, न तु धर्म्मकर्म्मानुष्ठानं

प्रति मनस्तिष्ठति। अबुद्धा न किमपि ते कर्त्तुं बाध्याः, सर्व्वेष्वेव कार्य्यकलापेषु केवलं युक्तिमभिलषन्ति। युक्तिस्तते न कुत्रापि तेषामनुरक्तिर्दृश्यते। किन्तु कर्म्मानुष्ठानं विना धर्म्मस्य प्रकृतं मर्म्म नैवावगन्तुं शक्यते, वाह्यदृष्ट्या धर्म्मतत्त्वनिर्द्धारणमतीवाशक्यम्। समतीव सूक्ष्मा धर्म्मस्य गतिः, तदुक्तम्—

"कानीनस्य मुनेः सहोदरवधू वैधव्यविध्वंसिनो
नप्तारः किल गोलकस्य तनयाः कुण्डाः स्वयं पाण्डवाः।
तेऽमी चैकवधूपभोगनिपुणास्तेषाञ्च सङ्कीर्त्तनात्
शान्तिः स्वस्त्ययनं भवेदनुदिनं धर्म्मस्य सूक्ष्मा गतिः॥ १

यातः क्ष्मामखिलां प्रदाय हरये पातालमूलं बलिः
शक्रप्रस्थविसर्ज्जनेन सततं स्वर्गं मुनेरत्ययम्।
आबाल्यादसती सती गुणवती कुन्ती पुरीमामरीं
हा सीता पतिदेवताऽगमदधो धर्म्मस्य सूक्ष्मा गतिः॥" २ *

अपरैश्च लब्धयोगमाहात्म्यैर्भूयोभूयः सन्दिष्टं "धर्म्मतत्त्वं न साधारण-लौकिक-दृष्टान्तैरधिगम्यं, परन्तु योगानुष्ठानादि-विशुद्धचेतसा-मनायासलभ्यमिति प्रथमतः केवलं मान्यमेव" अतएव धार्म्मिकधुरीणेन धर्म्मनन्दनयुधिष्ठिरेणाप्यभिहितं "धर्म्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्था" इति। तस्माद्धर्म्मबुभुत्सुभि-र्युक्तिं निर्द्धारयितुमसमर्थैरपि आप्तवाक्यविश्वासेनावश्यं तन्निर्दिष्टं कर्म्मानुष्ठातव्यम्। एतच्च तैरवहितैश्चिन्तनीयं "यस्मादृष्टैरदृष्टयुक्तिकत्वेऽपि तद्वचनप्रतिपाद्य-विषयाणामप्रामाण्यं नार्हति भवितुं" यस्माद्दृष्टादृष्ट-युक्तिकानां बहूनामेव विषयाणां प्रामाण्यमनुमन्यते। योगबलेन स्थूलसूक्ष्मभूतभविष्यद्वर्त्तमानसर्व्वविषयेषु तुल्यदृष्टयः खल्वस्माकं

---

* कानीनः कन्यकाजातः। अमृते जारजः कुण्डो मृते भर्त्तरि गोलकः। इत्यादिकममरोक्तं विदत्यासपाण्डुपाण्डवानां जन्मविवरणञ्च महाभारत-प्रसिद्धमनुसृत्यास्य श्लोकस्य तात्पर्य्यमवधार्य्यम्।

शास्त्रकारा विशेषतो युक्तितत्त्वतात्पर्य्यादिकमवधार्य्यैव शास्त्राणि प्रणीयुः। वेदास्तु ह्यथा अनादिसिद्धाः सर्व्वथैव दोषाशङ्काकलङ्कासङ्कुलाः, तदुक्तं—"दोषाः सन्ति न सन्तीति पौरुषेयेषु युज्यते। वेदे कर्त्तुरभावाच्च दोषाशङ्कैव नास्ति नः" इति। तस्मात्तत्तत्-प्रतिपाद्यं सर्व्वमेव युक्तिसिद्धमित्यवबोध्यम्। सयुक्तिकत्वे तु कथमस्माभिर्न सर्व्वत्रावबुध्यन्ते युक्तय इति कोऽयं विषादः? यत आधुनिकविज्ञानविदां क्रियाकलापादीनां तात्पर्य्यमपि नाकलय्यते मादृशैः।

अबुद्ध्वा कार्य्यकरणे फलावाप्तिरेव न भवेदित्यपि नाशङ्कनीयं बहूनामेवाज्ञातफलयुक्तिककार्य्याणां फलदर्शनात्। दाहकत्वमजानन्नपि वह्नौ पतन्नविदग्धः किं दग्धो न भवेत्? तृष्णानिवारकत्वमजानन्नपि जलं पिबन् वितृष्णः किं न जायते? यत्तु ताड़ितयन्त्रेण संवादप्रेषणादिकं मादृशां धारणातीतं सर्व्वदा सम्पद्यते, तत्र नियुक्ता अपि कर्म्मचारिणः किं "कथमेकत्र कृतः शब्दः सुदूरतरापरप्रदेशे गच्छतीति" सयुक्तिकं प्रतिपादयितुं शक्नुवन्ति? परन्तु नैव, किन्तु तथापि ते यथारीति हस्तसञ्चालनादिना संवादादानप्रदानादिरूपं फलं लभन्त एव। तस्मात् केवलं युक्त्यनुसरणं परित्यज्य गुरुवाक्यानुसारेण वेदोक्तरीत्या यथायथं साङ्गमुपासनादिकमङ्गीकर्त्तव्यमेव। तेन च क्रमादग्रेसरीभूय स्वत एव क्रियानुष्ठानफलेन युक्त्यादिकमवधारयितुं शक्यते, नोचेत् केवलं कर्कशतर्केण युक्त्याद्यनुसन्धानत एवायुः क्षीयते। बुद्ध्वा करोमीति कृत्वा कर्म्माण्यननुतिष्ठतः केवलमनल्पं जल्पयतो बोधः करणञ्च द्वयमपि दुःसम्पाद्यम्। वस्तुतो यं कमपि विषयं दिधारयिषुभिरेव प्रथमतस्तूष्णीम्भूयोपदेष्टुर्व्वाक्यार्थो ग्रहीतव्यः, ततश्च क्रमशस्तत्र निविष्टैः स्वचेष्टयैव बहवः संशया उच्छेत्तुं शक्येरन्, शिष्टाः पुनरुपदेष्टुरुपदेशपरम्परया। अन्यथा प्रथमत एव यदि ते संशयापसारणे यतेरंस्तदा बहूपदेशतोऽपि प्रकृतं

तत्त्वमवधारयितुमसमर्था अपार एव संशयपारावारे निमज्जेयुः। सर्वदैवैतदुपलभ्यते यानि कानिचित् शास्त्राणि विशेषतो नव्यन्यायादि-दर्शन-शास्त्राण्यध्येतुं प्रवृत्ता धीरधिषणा अपि यदि प्रथमत एव सर्व्वं युक्त्यादिभिर्ब्बोद्धुं प्रवर्त्तेरंस्तदा कथं कथमपि तत्तात्पर्य्यमवधारयितं न प्रभवेयुः, परन्तु बोद्धुमशक्नुवन्तः कर्कशकुतर्कसङ्कुलतामापादयन्त-स्तत्र विरक्ता-स्तदध्ययनमेव परित्यजेयुः। किन्तु त एव यदि किञ्चिद्धैर्य्यमवलम्ब्य गुरूपदेशनिविष्टमानसः कांश्चिद्ग्रन्थान् सम्यगनुबुद्ध्वैवाधिगच्छेयुस्तदा क्रमशस्तत्र प्रविष्टाः स्वचेष्टयैव बोद्धुं शक्नुयुः कीदृगिष्टकारीणि युक्तियुक्तानि च तानि शास्त्राणि। बहिःस्थिताः कदाचिदपि नावगन्तुमर्हन्त्यभ्यन्तरविवरणम्, परन्तु केवलं कदर्थमेव परिकल्पयन्ति।

यथाच हट्टाद्बहि-रटाट्यमानाः केवलं कलहव्यञ्जकं कोलाहलमेवाकलयन्तः हट्टस्थितानां वितण्डाकारित्वं विभावयन्ति, त एव पुनस्तत्र प्रविशन्तः स्वीयकार्य्ये च मनोनिवेशयन्तस्तादृशं कलरवं नाकर्णयन्ति, पश्यन्ति च सर्व्वानेव स्वस्वकार्य्ये व्यापृतान्, शक्नुवन्ति च स्वस्वप्रयोजनसाधका एव शब्दाः परस्परं मिलितास्तत्तुमुलकोलाहलरूपेण परिणताः, नास्ति तत्र कलहलेशोऽपीति ज्ञातुम्। तथैव यावदस्य धर्म्मापणस्य बहिरवतिष्ठन्ते धर्म्मिष्ठा अपि युक्त्यनुशीलनतत्पराः कर्म्माणि च नानुतिष्ठन्ति लोकास्तावदेव सर्व्वं विवादास्पदमनुभवन्ति। यदि च कथञ्चित्तत्र प्रविश्य मनोनिवेशयितुमर्हन्ति तदा तत्र न विवादलेशमपि समालोकयन्ति पश्यन्ति सर्व्वानेव धर्म्मापणप्रविष्टान् स्वस्वकार्य्यानुष्ठानतत्परान्। शक्नुवन्ति च सर्वेषामेव पुरुषार्थसाधकतामालोक्य सार्थकतामात्मनः सम्पादयितुम्।

(क्रमशः)

---

# शोकोच्छ्वासः ।*

कैलासचन्द्रे विदुषां शिरोमणौ कैलासशैले सहसा समागते ।
कैलासचन्द्रेण सदा समन्विते दृश्यो ह्यपूर्व्वोऽद्य जनैस्तु दृश्यते ॥१

कैलासचन्द्रद्वयमीक्षितुं मुदा सर्व्वे समेता अमरास्त्वरान्विताः ।
बृहस्पतिस्तु प्रपलायितः कुतः संशय्यते जीवित एव वा मृतः ॥२

निस्पन्दनेत्राः परितो दिवौकसो भ्रूमध्यवक्रा दृढ़चिन्तयाकुलाः ।
चित्रायमाणा इव तत्र संस्थिताः प्रणामसम्मानविधौ विमूढ़काः ॥३

हे तात ! हेताताङ्कगतं कुरुष्व मा-मिति ब्रुवन् भ्रातरिदं किमुच्यते ।
इत्युक्त एतेन गणाधिपश्चलन् संवीक्षमाणोऽन्य-मचिन्तयद्‌ भृशम् ॥४

हसन् प्रधावन् अयि तात ! तात भोः ! इति ब्रुवन् फुल्लमनाः
षड़ाननः ।
तातद्वयं वीक्ष्य विमूढ़मानसो दण्डायमानः पुरतस्त्वचिन्तयत् ॥५

शैलेशपुत्र्या रमणीशिरोमणेर्मनस्तु दोलेव चलत्यलं सदा ।
न जानके लब्धमशेषपुण्यतः सतीत्वरत्नं कुत एव तिष्ठति ॥६

किमेव हंहो प्रविचिन्त्य पार्व्वती प्रियेति सम्भाषितुमुद्यता यदा ।
अन्तर्दधे हन्त तदैव शङ्करः कर्त्तव्यमूढ़स्तमसा समाकुलः ॥७

करोषि किं मातरिदं सुते मयोत्युक्ता यदैतेन तथाविधा सती ।
त्रपास्मिताधोवदनाऽभवत्तदा नानाविधा सम्प्रति तत्र चित्रता ॥८

प्रभुद्वयं वीक्ष्य वृषोऽपि साम्प्रतं कथं वहाम्येकक इत्यचिन्तयत् ।
एको यदा त्वन्तरधीयत चणात् उत्पुच्छकर्णस्तु तदा स नृत्यति ॥९

धन्योऽसि धन्योऽसि नु वङ्गगौरव ! धन्यः पिता भारतगौरवाद्य ते ।
धन्या प्रसूतिर्जठरे यया धृतः काशीपुरीगौरव ! मुक्तिमाप्तवान् ॥१०

---

* वाराणसी-संस्कृतपाठशाला-प्रधानाध्यापक-पूज्यपादोपाध्याय-महामहोपाध्याय-कैलासचन्द्र-शिरोमणि-महाशयस्य मृत्युदिवसमधिकृत्य रचितोऽयम् ।

मोक्षस्तवासौ-दनिवार्य्य एव हि स्वज्ञानसामर्थ्यवशात् शिरोमणे!
अपेक्षितो नैव शिवास्ततस्त्वया ब्रह्मोपदेशः श्रमलाघवः शिव: ॥११

तवान्तिके चौरकृतघ्ननिन्दका अपि प्रफुल्लाः कृतकृत्यतां गताः।
उक्तिश्च सर्व्वेष्वमला सुकोमला सत्यं किलेयं समदर्शिता सताम् ॥१२

मुक्तोऽसि युक्तोऽसि शिवेऽथवा भवन् इतीव दुःखं न हि मृत्युत-स्तव।
पुनःपुनश्चेह जनिष्यते भवान् तदा भविष्याम इहाप्तसम्पदः ॥१३

छात्राः पित्रेव हीनाः स्युः पुत्रा मात्रेव हीनकाः।
काशी विश्वेश्वशून्येव शिरःशून्याश्च पण्डिताः ॥ १४ ॥

शिरोमणिपदे द्वन्द्वो नैव तत्पुरुषो मतः।
येन हीनमिदं हन्त कबन्धमिव भारतम् ॥१५॥

वङ्गविद्वत्कुलशिरः-शिरोमणिशिरोमणिः।
अनेतत्स्थोऽपि सततं सूर्य्यवद्भासयत्यसौ ॥१६

सांख्यतीर्थोपनामक—श्रीगोपीचन्द्र शर्म्मणः
काशीधामवासिनः।

---

## स्वार्थान्धो विपदां पदम्।

इह खलु सृष्टिवैचित्र्यचित्रिते जीवलोके प्रतिप्राणिमानसमेव स्वार्थो वर्त्तते, स च सदर्थकः असदर्थकश्च। प्रतिजीवमेव तस्य वैचित्र्यं, कस्यचिद्भगवदाराधनं स्वार्थः, कस्यचिद्-विद्यानुशीलनं, कस्यचिन्मातापित्रोः शुश्रूषणं, कस्यचित् स्तेयः, कस्यचिदात्मोदर-पोषणम्, कस्यचित् परानिष्टसम्पादनम्, कस्यचिन्मलमूत्रनिषेवणं, कस्यचित् स्वकान्तामुखकान्तिविलोकनं, कस्यचित् परयोषिदव-लोकनं, कस्यचित् पैशाचिकाभिलाषसम्पादनम्, कस्यचिच्च परवञ्चन-

परायणता, एवं बहुविधोऽस्य प्रकारः। कानने हिंस्राः स्वसन्तान-प्रतिपालनार्थं, स्वक्षुधा-प्रशमनार्थमेव च यतन्ते, समुपस्थिते च कस्मिंश्चित् प्रतिकूलकारिणि उच्चैस्तर्ज्जनेन तं ताड़यन्ति। पादपे विहङ्गकुलं स्वकुलायमेव निर्म्माति, नीराहारसमाहरणेन पुनः प्रति-पुष्णाति स्वशावकमेव, जिघांसौ समागते च तमुत्त्रापयते। जले च यादोगणाः सन्ततं स्वापत्यसंरक्षणदत्तेक्षणाः क्रीड़ति, सन्निहिते च शावकभक्षार्थिनि तं सुदूरं गमयति। ये च चैतन्यचन्द्रोदयहत-तमसो महात्मानः सुप्रकारप्राकारपरिखीकृतां कलधौतधौतसौधा-वलीं नदद्‌मदकलहंसमालाकवलीकृतमृणालकमलं सरोवरं नयनाभिराममारामं अशेष-सुखपात्रपुत्रमित्रकलत्रादिकं सन्त्यज्य दिग्वसनं वसाना निविड़काननमधिवसन्तस्तपस्तप्यन्ते तेषामपि तपश्चरणं परमेशसाक्षात्कारात्मक-स्वार्थमूलकमेव, अयन्तु स्वार्थः सदर्थं प्रशंसनीयो नितरां सुधीरनिकरैः न स्यात्तेन स्वार्थान्धता। ये च स्वार्थसाधनसमाहितमनसः कर्त्तव्याकर्त्तव्यविवेकविहीनाः स्वार्थार्थ-मतिगर्हितमपि कर्म्म समाचरन्ति त एव स्वार्थान्धाः। स्वार्थान्धाना-मनुपदं विपद् विहरति। अहोबत! यद्‌घोरघटनावलीस्मरणेन सरोमहर्षं शरीर-मवसीदति, मुखं परिशुष्यति, हृदयं वेपते, घूर्णते च शिरः, स्वार्थान्धा निराबाधं तद्‌वधादिकं समनुतिष्ठन्ति। विलोक्यते चैवम्—उपरते पितरि भ्रातरं प्रतार्य्य पैतृकविभवं स्वयमात्मसात्-कर्त्तुं बहुच्छलं समातनोति, यदि तेन स्वाभिप्रायो न निष्पद्यते, तदा स्वार्थान्धतया परिणामफलमनालोक्य भ्रातरं शमनसदनं प्रेष्यापि स्वार्थान्धो विपदां पदं सम्पदमात्मसात् कर्त्तुं नो कुण्ठति, ततश्च भ्रातुष्पुत्रेण तद्वियोगाभियोगे राजकीयधर्म्माधिकरणे निवेदिते विचारपतिप्रेषितराजदूतैर्लौहनिगड़निपीड़ितकरः स पापीयान् धर्म्माधिकरणं प्रापय्य दिनकरकरनिकररहिते निविड़ान्धकारसमाच्छन्ने कारागारे संस्थाप्यते, अतीते च दिनकतिपये विचारपतिना

समादिष्टे अनिष्टे प्राणदण्डे स पाषण्डः अखण्डं ब्रह्माण्डं शून्यमिवावलोकयन् प्रचण्डपापमार्त्तण्डदग्धो ध्वान्तपथं समाश्रयते।

सबलवाहनायुधे यौवनराजे मानसराज्ये साम्राज्यं वितरति कुसुमबाणबाणसमाकुला कुलटा कुलललना स्वार्थं साधयितुमुपपतिं भजते। भवनमुपगते च भर्त्तरि कलुषचरित्रतया सञ्जातशङ्का सदा समयमतिपातयति यथेच्छं व्यवहर्त्तुञ्च नैव पारयति, ततस्तूपपतिः स्वार्थान्तरायभूतं तमन्तरयितुं मन्त्रयति, निशाचरीचरित्रा सापि स्वार्थान्धतया अन्तर्दाहकं भावि चित्रमनवलोक्य तदनुमन्यते, तत्फलतश्च धर्म्माधिकरणे अभियुक्तस्य तस्य कामुकतमस्य विचारकनिर्देशेन उद्बन्धनतः प्राणबन्धनं वियुक्तं भवति, कुलटया च तया जठरानलेन शोकानलेन च दह्यमानया स्वार्थविरहिततया च जगदिदं श्मशानमिवानुभूयते। धिगसारं संसारं। कथमेवंविधं स्वार्थान्धजनं जननी वसुन्धरा धारयति। जगत्यस्मिन् नारीणां पतिः परमो गुरुः, तथाहि—"गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः। पतिरेको गुरुः स्त्रीणां सर्व्वत्राभ्यागतो गुरुः॥" अहो स्वार्थान्धता!! तमेव सकलविलासलालसासाधकं जनगणपुरोगमत्तमतासम्पादकं धन्यवदान्यविभिन्नमानवनिवहानां समादरनिदानम् अकृत्रिम-प्रेमरसैकसदनं समसुखदुःखं वन्दनीयपदारविन्दं स्वामिनमबाधमवधीत्, जारप्ररोचनया स्वार्थान्धतया च अविगणय्य कुलटा ललाटपटरञ्जकसिन्दूरविन्दुनिर्मूलकं विरहदहनदारुं वैधव्यम्।

(क्रमशः)

श्रीहेरम्बनाथ शर्म्म-तर्कतीर्थस्य।

---

PRINTED BY GOBARDHAN PAN

AT THE GOBARDHAN PRESS,

*80/1, Muktaram Babu's Street, Calcutta.*

**आर्य्यप्रभा।**

द्वितीयवर्ष। } सुदुर्लभाः सर्व्वमनोरमा गिरः। { ८ म संख्या।

## मासावतरणिका।

द्विरेफगणं परितो निकुञ्जतो निशम्य मञ्जु जनरञ्जनं मुहुः।
पुंस्कोकिलस्तस्य जिगीषयेव नु रवीति रम्यं मधुमास आगते॥

## गुरुशिष्य-संवादः।

सुमुखः। गुरुदेव! सुमुखनामा भवतः शिष्याधमः समभिवादयते।

गुरुः। एहि वत्स! कुशलं ब्रूहि।

सुमुखः। गुरुदेव! श्रीचरणाशीर्व्वादतः कुशलमेव, किन्तु भवदुपदेशामृतरसास्वादनपराङ्मुखः समनुभवामि परमं दुःखम्। असारसंसारपारावारकल्लोलकुलितो नितरां क्लेशमधिगच्छामि। सुखन्तु संसारस्य कुत्र निवसतीत्यपि न सम्प्रधारयामि। यत्र च नयामि नेत्रे तत्रैवापवित्रचरित्रमात्राधिक्यमवलोक्य परित्राणोपायाभावेन बिभेमि। हिंसाद्वेषादिकलुषेण वशीकृतमिव सर्व्वेषामिदानीं चित्तं, तदुपरि आभिजात्याभिमानः समधिकं विमोहयति मनः। जात्यभिमानस्यैतादृक् प्राबल्यं सम्प्रति विलसति, येन जगति युगान्तरमिवापतति। सर्व्व एव जात्युत्कर्षलाभप्रलोभनेन सोत्साहमध्यवस्यन्ति, नैव जानामि, को वास्य परिणामः।

गुरुः। वत्स सुमुख! तव वचनमाकर्ण्य कर्णौ मे शान्तिं समधिगच्छतः, तत् किं स्वोद्धरणाय यतते, पुनः पुण्या भारतभूमिः?

सुमुखः। गुरुदेव! सुचिरं विचिन्त्यापि नावगच्छामि, गभीरार्थस्य भवतो वाक्यस्य निगूढ़मर्थं, तत् श्रोतुमिच्छामि, कथमेतेन देशस्य समुन्नतिराशास्यते भवता?

गुरुः। बहुविधां समुन्नतिमनेन प्रत्याशास्महे, यतो जात्युत्कर्षलाभार्थिभिरवश्यमेव तपोऽनुष्ठानपरायणैः सदाचारनिरतैश्च भवितव्यं, ततो देशे पुनर्धर्म्मभावाविर्भावः, ततश्च दुर्भिक्षादिदुःखप्रशमनं, ततः पुनः सत्यप्रतिष्ठापि भवेदिति, किमतःपरं शुभसूचनमभिलषणीयम्?

सुमुखः। तपोऽनुष्ठानादिभिः किमेकस्मिन्नेव जन्मनि जात्यन्तरमपि साधयितुं शक्नुयात्?

गुरुः। अथ किं? नोचेदन्तरायान्तरमवश्यमेव तस्मिन्नेव जन्मनि तपसा जात्यन्तरं लभेत, कथमन्यथा वशिष्ठाधिष्ठितसुरभिप्रदत्तैश्वर्य्यप्राचुर्य्य-प्रदर्शनेनाश्चर्य्यान्वितमानसस्तदवधीरितो विश्वामित्रः क्षत्रियोऽपि सुदुश्चरतपश्चरणेन ब्राह्मणत्वं सुदुर्लभं लेभे? किं वा जगति तदस्ति यत्तपसा न साधयितुं शक्येत? पवित्रचरित्रो विश्वामित्रस्तपोबलेन लब्धव्यं किं न लब्धवान्? यन्माहात्म्यदर्शनेन सर्व एव परमर्षयो हर्षनिर्भरमानसा विस्मिताश्चासन्।

सुमुखः। गुरुदेव! श्रुतं तपसः फलं, किन्त्वधुना ये जात्युत्कर्षमभिलषन्ति ते तल्लाभार्थं तपोऽनुष्ठानादीनां प्रयोजनं नावलोकयन्ति। परन्तु कथयन्ति ब्राह्मणैरेव स्वार्थपरवशैः स्ववशे स्थापयितुम् मन्ये सर्व्वे उत्तरोत्तरहीनजातीयत्वेन परिकल्पिताः, तत्प्रामाण्यार्थं मन्वादिधर्म्मशास्त्राणि च प्रणीतानि। वस्तुतः प्राग्जातिभेद एव नासीत्। तस्मात् स्वार्थसिद्ध्यर्थप्रणीतं तच्छास्त्रार्थमवलम्ब्य नाधुना वयं हीनवर्णत्वेनावस्थातुमभिलषाम इति।

गुरुः। अहो! ते शास्त्रकारानपि स्वार्थपरान् मन्यन्ते, किन्तु क्षणमपि नो चिन्तयन्ति यत् तेषां स्वार्थपरत्वे कथमतुलनीयशौर्य्यवीर्य्य-

सम्पन्ना अपि धर्म्मपरायणास्तदानीन्तनाः क्षत्रियराजास्तानि शास्त्राणि प्रमाणयामासुः। ये तु धर्म्मसंरक्षणार्थं सर्वस्वं परित्यक्तुं स्वपुत्रादीनां मुण्डं खण्डयितुमपि नो विचलिता आसन्, ते धर्म्मैकप्राणा अव्याहतात्मा राजानः कतिपयस्वार्थान्धवचोभिः पर्य्यचलन्निति कल्पनं केवलमनल्पजल्पविषयतामेवाधिरोहति। असामान्यदयादाक्षिण्यादिगुणसम्पन्ना ये परमर्षयो भोगविलासलालसादिकमैहिकसुखनिदानं सर्व्वं परित्यज्य हिंसापैशुन्यादिशून्यमरण्यमध्यवात्सु-स्ते स्वार्थपराः, वयन्तु शिश्नोदरपरायणा यथेच्छकरणा निःस्वार्था इति वचनम् "आजन्मनः शाठ्यमशिक्षितो यस्तस्याप्रमाणं वचनं जनस्य। पराभिसन्धानमधीयते यैर्विद्येति ते सन्तु किलाप्तवाच" इति कालिदासकवितामेव स्मारयति। अथवा त एव यथार्थस्वार्थपराः, यतस्ते सर्वस्वार्थसारभूतं परमार्थमेवावलम्ब्य अनन्यमानसाः केवलं तेनैव कालं कलयामासुः, तदर्थं स्वशरीरं शोषयितुं पुत्रकलत्रादीनपि परित्यक्तुं नोदकण्ठिषुः। किन्तु ते मादृशा इव नासाराचिरविनाशिस्वार्थस्य दासाः। तेषां स्वार्थ एव तथार्थनामेति सर्वकार्य्यवर्ज्जनेन तदर्ज्जने यतमानाः सर्वथैव धन्यागण्यामान्या इति मन्यामहे। वत्स सुमुख! "सर्व एवेदानीं जात्युत्कर्षसाधनाय सोत्साहमध्यवस्यन्ती"ति ते वचनं श्रुत्वा यथा हर्षाधिक्यमासादितं तथैव "तदुत्कर्षलाभप्रयत्नस्य हिंसाद्वेषादिकलुषितत्व"माकर्ण्य नितरां खिद्यामहे। यतस्तेन देशस्युपकारप्रत्याशा तावद्दूरमास्तां अपकार एव भवेत्। परन्तु श्रोतुमिच्छामि ये शास्त्रमर्य्यादामुल्लङ्घ्य यथेच्छोत्कर्षाभिलाषिणस्तान् प्रति देशीयब्राह्मणा इदानीं किमाचरणाः?

सुमुखः। ब्राह्मणेषु ये शास्त्रेषु जातविश्वासा धर्म्मकर्म्मनिरताश्च ते तन्मतं प्रति वदन्ति, तत्संसर्गमपि नो कुर्व्वन्ति। ये तु दुष्कर्म्मपर्य्यालोचनया स्वकीयब्राह्मण्यं प्रत्यपि जातसन्देहास्ते निष्प्रत्यूहमर्थलोभेण तन्मतमप्यनुवर्त्तन्ते। किन्त्वधुनापि तादृशब्राह्मणानां

संख्यानाधिका वर्त्तते, परन्तु शङ्के अर्थादिबलेन बलीयांसस्ते सर्व्वा-नेव वा नातिचिरात्तन्मतानुवर्त्तिनः कर्त्तुं शच्यन्तीति।

गुरुः। ब्राह्मणसमाजस्य किमेतावानधःपातो जातो यत् सामान्यार्थप्रलोभनेन शास्त्रविगर्हितमपि मतं तदनुमोदितं सम्भवेत्? वस्तुतो ब्राह्मणसमाजस्यावनतिरेवैतेषामनर्थानां कारणं, ब्राह्मणसमाजस्यावस्था यदि पूर्व्ववदस्थास्यत् तदा न केऽपि यथेच्छमाचरितुमशच्यन्। अहो ब्राह्मणानां कीदृगाधिपत्यमासीत्, यत्ससागरधराधीश्वरोऽपि तेषां शासनमतर्कितं शिरसि दधार। अस्माकं शास्त्रकारादयः पूर्व्ववर्त्तिनो महापुरुषाः स्वार्थपरा यथा तथा वा तिष्ठन्तु, किन्तु तेषां यदलोकसामान्यपुण्यसञ्चय आसीत्तत्र न कैरपि विप्रतिपत्तव्यं, नो चेत् किं सर्व्वजनसम्मानभाजनत्वं तेषां कथमपि सम्भावितं भवेत्? अस्मद्योगबलादिकमृते न कोऽपि उत्कर्षं लब्धुं शशाक, शक्नोति, शच्यति वेति निर्व्विवादमवधार्य्यम्। सुतरामुत्कर्षप्रार्थिभिराधुनिकैरपि यदि यथेच्छं स्वाधीनमतं परि-चालयितव्यं तदावश्यमेव योगादिबलेन तेषां समकक्षता लब्धव्या, नोचेत्तेषां मतं न कथं कथमपि सर्व्वजनानुमतं भवेत्। एतदपि तैरवश्यं मन्तव्यं, यदधःपतितेऽपि ब्राह्मणसमाजे अधुनाऽपि तादृशा बहवः सन्ति, येषां ब्राह्मण्यमप्रतिहतं वर्त्तते। ते तु कदाचिदपि नार्थप्रलोभनादिना शास्त्रमर्य्यादोल्लङ्घनकारिणां यथेच्छाचारिणां मतमनुमोदिष्यन्ते, ये तु ब्राह्मणेषु स्वेच्छाचारपरायणास्तैस्तन्मतस्या-नुमोदनेऽपि ब्राह्मणसमाजस्य न काचित् क्षतिः, यतस्तादृशाः पाषण्डा ब्राह्मणापसदाः सर्व्वथैव ब्राह्मणसमाजाद्बहिष्करणीयाः।

सुमुखः। गुरुदेव! समुपजातजात्युन्नतिकोलाहलबाहुल्ये-ऽस्मिन् काले सत्पथवर्त्तिभिर्ब्राह्मणैः कथं वर्त्तितव्यत्?

गुरुः। वत्स! ब्राह्मणानामिदानीं नास्ति तादृशं तपोबलं यत्तन्मतं सर्व्वैरवलम्बनीयं भवेत्, अवलम्बितधर्म्मान्तरसम्बलः प्रजा-

पुञ्जानुरञ्जको राजाप्यत्नोदासीन एव तिष्ठेत् । सुतरामस्य जात्युन्नति-लाभाध्यवसायप्रवाहस्य सर्व्वथैव कालनियम्यतया प्रतीकारासमर्थै-र्ब्राह्मणैस्तुष्णीम्भाव एवेदानीमवलम्बनीयः । तपोनुष्ठानादिभिरपि तथैव प्रयत्न आधेयः, यथा पूर्व्वाधिपत्यं पुनरभ्युत्थानं लभेत ।

जात्युत्कर्षसाधनपरायणा यदि क्रमशः कार्य्यगोन्नतिं लब्धुं यतेरन्, तत्फलतश्च यदि समुन्नतिमपि लभेरन्, तत्र नास्ति ब्राह्मणसमाजस्य किमप्यापत्तिकारणं, परं सन्तोषपोषणमेव तत्र युक्तं । यदि च ते यथापूर्व्वं हिंसादिवशवर्त्तिन एवोन्नतिं कामयन्ते तदा तेषां तदध्य-वसायः सम्यक् फललाभपराङ्मुखः स्वत एव क्रमशो निवर्त्तिष्यत इति मौनमेव सर्व्वथा शोभनं ।

सुमुखः । गुरुदेव ! कथञ्चिदाश्वसिमि युक्तियुक्तेन भवदुक्तेन वचसा, आशीर्व्वदतु, यत् सर्व्वदैव भवदुपदेशश्रवणावकाशमासा-दयेयमिति । कार्य्यान्तरतत्परता च सम्प्रति वाधत इति गन्तुमिच्छामि ।

गुरुः । गच्छ वत्स ! कुशलन्ते भूयात् । सांसारिकोऽपि परित्यक्तसर्व्वासारप्रयासो हिंसाद्वेषादिकं विहाय परोपकाराय सर्व्वथा यतस्व येनैहिकपारमार्थिकसर्व्वविषयकुशलमालप्स्यत इति शम् ।

---

## हिन्दुधर्म्म-संशोधनम् ।

अथ कदाचित् अहमात्मीयायां बहिर्वाटिकायां वेत्रासन-मध्यासीनः जीवितप्रियतमं मे ताम्रकूटाभिधं अमृतं सेवमानः अपश्यम् कञ्चनायान्तं भद्रवेशिनं पत्रवाहकम् । स आगत्य मे पार्श्वं मन्नामाङ्कितं मुद्रितं पत्रमेकं मत्पाणौ प्रदाय प्रातिष्ठत । अहं पत्रिकामुद्घाट्य अन्ववाचयम् । यथा—

---

## "हिन्दुरक्षिणी-सभा।"

अद्यापराह्णे सार्द्धतृतीयहोरायां प्रवृत्तायां हिन्दुरक्षिणीसभायाः मासिकमधिवेशनं भवेत्। भवता सबान्धवेन तत्र सन्निहितेन भाव्यम्। आलोच्यविषयः—धर्म्मसंशोधनम्। इति—

१२।४।१२ { विनीतनिवेदक—
श्रीगुरुबन्धु विश्वास,
हिन्दूरक्षिणी-सम्पादकः।

अथानुवाच्य तां पत्रीं कथमियं संसत्, कीदृशी अत्र आलोचना, के वा वक्तार इति श्रवणकौतूहलाक्रान्तमानसः कार्य्याभावाच्च सावसरः सभां गन्तुं ऐषिषम्। अतीतासु चतसृषु होरासु अहं सभास्थानमगमम्। अपश्यम् च निर्ज्जनं बद्धद्वारं परिषन्मण्डपम्। कीयान् कालविलम्ब इति पृष्टो दौवारिकः मामाश्वास्य कालप्रतीक्षणाय अन्वरुणत्। अनुरुद्धश्च तेन तत्रास्थानमण्डपदेहल्यां उपविष्टः प्रायः प्रहराधिकं कालमनयम्। ततो मदृश्यन्त अन्येऽपि सभ्याः, ततोऽपि केचित् इति क्रमेण समागतेषु बहुषु जनेषु दौवारिकेण उद्घाटितार्गलं सदोगृहं प्राविशम्। अथाजग्मुः सभापतिप्रभृतयः अनतिवयसः केचन च वक्तारः। प्रारभ्यत सभाकार्य्यम्, अवाद्यन्त वाद्यानि मनोहरम्। वाद्यावशेषे च कश्चन नातिवया नव्यभव्यसभ्य उत्थाय समागतान् सभ्यान् धन्यवादेन प्रीणयन् अस्मिन्नहनि आलोच्यत्वेन गृहीतं विषयं आलोचयितुं सानुनयमन्वरोत्सीत्। (अयमेव सभासम्पादक इति पश्चाल्लोकमुखदाकर्णितम्)। अथ कश्चित् देविदास मण्डननामा अन्त्यजजातीयः "अयं साधु वदिष्यति अयं विद्वान् हिन्दुधर्म्मशास्त्रसम्मानीति अनुच्चैः सर्व्वैः प्रशंस्यमानः वक्ता उत्थाय वक्तुं प्रारेभे। (वक्तुर्जातिं स्मरतो मम महानुद्वेगस्तदाऽजायत)।

"भवन्तः सभ्यमहोदयाः ! माननीयसम्पादकमहाशयाश्च ! धन्यवादार्हा यूयं। धर्म्मविषयकं वक्तुमहं नियुक्तः। सत्यमिदं यत् न भवद्भिः अपात्रे न्यस्त एष कार्य्यभारः। अहं हि बहूनि धर्म्मशास्त्राणि अधीत्य ज्ञानार्णवपारं अधिजगाम, अद्य भवत्सु तत् विज्ञाप्य कृतकृत्यो भवेयम्। (सभ्यानां करतलध्वनिः)।

हिन्दुधर्म्मस्य शोधनमत्यावश्यकं। का तत्र शोधनप्रणालीत्येव अस्माकं आलोच्यत्वेन उपस्थितम्। हिन्दुधर्म्मो हि नितरां भ्रमसङ्कुलः कश्चन विज्ञानशास्त्रीयप्रमाणविरचितः धर्म्मविशेषः। अयं हि धर्म्मकाण्डज्ञानविरहितैः स्वार्थसाधनधुरीणैः कैश्चित् नरैः निबद्ध इति बालोऽपि अवगन्तुमर्हति। अस्य च यस्मिन्नेवांशे चक्षुः पात्यते तत्रैव शतशः भ्रान्तिरनुभूयते, सुतरां अस्य शोधनमत्यावश्यकमिति कथनं बाहुल्यमात्रम्। इदानीं विभिन्नदेशीया बहवो नरवराः सभ्यताद्रेरत्युन्नतं शिखरमारुरुहुः, केवलं वयं हिन्दुधर्म्माश्रयिण एव इदानीमपि अन्धे तमसि वर्त्तमाना बर्ब्बरा इवावस्थिताः। खाद्याखाद्यविचारस्पर्शदोषावधारणः अवरोधप्रथा, नारीणां एकपत्नीता, कतिपये कुसंस्काराश्च अस्माकं बर्ब्बरतायां परिचायकानि। यावदेतानि अस्मासु वर्त्तेरन् तावद्दूरमास्तां सभ्यतानाम सुखस्य वार्त्तयापि न सन्निधीयेत। अत एवाद्य वयमत्र संसत्प्राङ्गणे समवेता अस्माकं सभ्यताद्रये यत् कर्त्तव्यं तदवधारयितुं यतेमहि। तत्र प्रथमं सर्वदोषावहं खाद्याखाद्यविचारमेवालोचयामः। अयं विचारः नितरामाधुनिक इति तर्कयामः। पुरा हि ऋषयः "शरीरमाद्यं खलु धर्म्मसाधनम्" इति उच्चार्य्य मांसमदिरादिकं सर्वमास्वादयामासुः। श्रूयते त्रेतायुगे (!) भवभूतिरिति नाम कश्चिदृषिरासीत्, तेन स्वप्रणीते धर्म्मशास्त्रग्रन्थे (!) उत्तरचरितनाम्नि गोमांसभोजनं नितरां प्रशंसितम्। एवञ्च—

"गोमांसं पतितं दृष्ट्वा खण्डखण्डं महीतले
काकाः शिवा न गृह्णन्ति गृह्णन्ति पण्डिता जनाः ॥"

इत्यादि वेदप्रामाण्यात् (!) जायते यत् गोमांसास्वादनाय पण्डिताः काकशिवापेक्षयापि अधिकं लोलुपा आसन्। केवल-मिदानीमेव गोमांसादिखाद्यवर्ज्जनं केषाञ्चित् सम्मतं इति दृश्यते। ऋषयस्तु इदानीमपि गोमांसादिभोजनं प्रशस्तमिति ब्रुवन्ति। तथाहि ब्रह्मर्षिर्भगवान् श्रीश्री सोऽहं स्वामी सोऽहं गीतायां अवदत् "गोमहिषादिमांसमश्नन् सिंहः पशुराजत्वं इंरेजश्च नरसिंहत्व-मगात्। शाकसुपादिकमश्नन्तो भारतीयाः, गवादयः पशवश्च निरोहा वीतवीर्य्याश्च भीरवः पराधीनाश्च। सुतरां मेषं महिषं वा अविचारितमश्नीयात्" इति। विशेषतश्च दृश्यतां महाभागाः! प्रतिदिनं घृतादिसंयुक्तं व्यञ्जनमास्वादयन्तो वयं एवं निरीहत्व-मुपगताः यत् गृहागतस्य क्षुत्क्षामस्यातिथेः दूरीकरणाय अस्त्र-प्रहारं न कुर्म्मः। बहवः पुनरसभ्याः कुक्कुटमांसमपि नास्वादयन्ति, ते पुनः कीदृशा बर्ब्बरा इति न जानीमहे। इदानीमस्माभिरवश्य-कर्त्तव्यं यत् खाद्याखाद्यविचारणाविरहितैः शरीरवृद्धये यत्-किञ्चिदास्वादनीयम् इति, अथ यदि खाद्याखाद्यविचारः नैव क्रियते तदा स्पर्शदोषविचारः स्वयमेव दूरीभविष्यति। क्षुधायां उपजातायां यदि न भुज्यते, तदा शक्तिहानिरवश्यम्भाव्या। तत्र नाम एते वितर्क-यन्ति 'अयं यवनः, अशुचिः, कथमत्र भोक्तव्यम्' इति। पृच्छते मया हिन्दव एव ईश्वरसृष्टाः नापरे, येन ते अशुचयः अस्पृश्याः कथ्यन्ते।

(क्रमशः)

श्रीसुरेन्द्रकुमार सांख्यकाव्यतीर्थ।

---

PRINTED BY GOBARDHAN PAN
AT THE GOBARDHAN PRESS,
*80/1, Muktaram Babu's Street, Calcutta.*

# आर्य्यप्रभा।

द्वितीयवर्षं। } सुदुर्लभाः सर्व्वमनोरमा गिरः। { १०म संख्या।

## भासावतरणिका।

ग्रीष्मातिसन्तप्तजनानुकम्पया मन्येऽमृतप्रायफलं तदाम्रम्।
ज्यैष्ठोऽर्पयन् याति परोपकारितां ज्येष्ठत्वमप्यस्य ततोऽतियुक्तम्॥

## वर्णाश्रमाचारे वर्त्तमानसामाजिकावस्था।

सम्प्रति ये हिन्दुधर्म्मावलम्बिनो देशीया ब्राह्मणादिवर्णास्तेषामाचारव्यवहारादिपर्य्यालोचनायां वर्णाश्रमाचारः प्रायो विलीनतामुपगत इति प्रतिभाति। ये किल ब्राह्मणास्त्रैकालिकस्नानसन्ध्योपासनादिपरायणा आसन्, स्नानसन्ध्यावन्दनादिकमनिष्पाद्य ये जलमपि नाग्रहीषुः, तद्वंशावतंसाः सम्प्रति रात्रिवासवासो-वसाना एव समश्नन्ति। सन्ध्यावन्दनादिकन्तु नाधिकांशा एवानुतिष्ठन्ति, समनुतिष्ठन्तोऽपि कार्य्यान्तरानतिपातं विचिन्त्य यथावकाशमन्यचिन्तनपरायणा एव केवलं मन्त्रानुच्चारयन्ति। अहो येषां पूर्वपुरुषाणां सन्ध्याद्युपासनमेव प्राधान्येनानुष्ठेयमासीत्तदन्वयोत्पन्नानामेवास्माकं सन्ध्याद्यनुष्ठानमपि प्रशंसापक्षे निक्षिप्तमिति किमतः-परमर्हति भवितुमधःपातकारणम्। यत्र च वर्णश्रेष्ठब्राह्मणानामेवैतादृगधःपतनं तत्रान्येषां वर्णानामवस्था सर्वथैवावर्णनीया। भक्ष्याभक्ष्यविचारणायान्तु तद्विचारः प्रायो नास्तीत्युक्तेऽपि नात्युक्तिः। अर्णवपोतादिगमने तु दृश्यते प्रायः सर्व एव यथेच्छमाचरन्ति। तदानीमन्यस्पृष्टान्नादिभक्षणे तेषां द्वैधीभावोऽपि नालक्ष्यते। अर्णव-

पोताद्यारोहणे च बुभुक्षाविरहेऽपि भोजनस्यावश्यकर्त्तव्यतैवानुमन्यते शिक्षितम्मन्यैर्नव्यैः । एतद्विषयकस्य मे वृत्तान्त एकः स्मृतिपथे पात्यायते, यदेकदा ममातिसुहृदः प्रथितनाम्नः कस्यचिद्धनिनः पुत्रोद्वाहनिमन्त्रणोपलक्षतः समागताः केचन विख्यातयशसः प्रथितान्ववाया ब्राह्मणवंशीयाः कायस्थवंशीयाश्च व्यवहारजीविनो दशमघटिकासमये यथोचितं मिष्टान्नादिकं प्रचुरतमं तत्रोदरसात्कृत्य स्वावासप्रत्यावर्त्तनायार्णवपोतमध्यारुक्षन् । अहमपि स्थानान्तरगमनाय तत्रारूढ़ः सादरमाहूतः सुपरिचितानां तेषामासनांशम् एवोपाविशम् । चलति चार्णवपोते नानाविधविश्रम्भालापैः परस्परमालापं कुर्व्वतामस्माकं घटिकामात्रमतिगतम् । अस्मिन्नेव समये तेषां कश्चिल्लब्धप्रतिष्ठो हृष्टचेताः कञ्चुकपेटकात् रूपकद्वयं बहिष्कृत्य भृत्यस्य प्रादात्, भृत्योऽपि तेन तत्रत्यादेव विक्रयकाद्यथालब्धं पूतिपर्य्युषितमपि हृद्यं खाद्यजातमादायैकं कक्षं प्राविक्षत् । प्रविष्टे च तस्मिन्निङ्गितज्ञाः सर्व्व एव क्रमशस्तत्राविशन् । शिष्टस्तु तदानीमहमेकाकी परमविस्मयाविष्टः समचिन्तयम्, कथमेतेषां पर्य्याप्तभक्षणात् घटिकामात्रानन्तरमेवाद्य बुभुक्षा सञ्जाता ? स्वालयेऽप्येते दशमघटिकासमय एव भक्षयित्वा व्यवहाराय धर्म्माधिकरणे गच्छन्ति, तस्माच्चापराह्णे कदाचिद्वा सायाह्णे स्वालयं प्रत्यागच्छन्ति, न हि तदन्तरा किञ्चिदश्नन्तीति सम्भावयामि, तत् कथमद्य तैलादिपक्वानां पूतिपर्य्युषितानां सर्व्वजातिस्पृष्टानामेतेषां मिष्टान्नादीनामास्वादने बलवती लालसा परिलक्ष्यते ; धर्म्महानिस्तावद्दूरमास्तां, एतेषां पर्य्युषितानां भक्षणे स्वास्थ्यहानिरपि कथं स्वास्थ्यसंरक्षणपरायणैरेतैर्न गणिता ? एवं चिन्तयतैव मया कृतयथोचिताशनास्ते पुनस्तदासने समासीना यथानुचिन्तनं पृष्टा अब्रुवन्,—कथमपि बुभुक्षास्माकं न सञ्जाता, यच्च भक्ष्यं क्रीत्वा नीतं तदर्द्धमपि नास्माभिरशितं, किन्तु तथापि एकत्र समवेतानां

सुहृदां प्रीतिभोजनमावश्यकमिति किञ्चिदस्माभिः समवेतैर्भक्षित-मिति, एतावदल्पमात्रमभ्यवहृतं तेन स्वास्थ्यहानिशङ्कापि नास्ति यतः "स्वल्पं विषमपि नापकरोति" एवमनुष्ठानञ्च सौहृद्यवर्द्धकतया-वश्यं कर्त्तव्यमिति। मया च तत्र कथञ्चित् प्रारब्धे प्रतिवादे ब्राह्मण-पण्डितं मामिंलण्डभाषानभिज्ञं मत्वा इंलण्डभाषासमाश्रयेणैव ते परस्परमालपन्तो मामेव कुसंस्कारसम्पन्नतया समुपाहसन्। अचकथयंश्च यावदेतेषां कुसंस्काराणामपलापो देशादस्मान्न जायेत. तावत् कथं कथमपि हतभाग्यस्यास्य देशस्याभ्युन्नतिर्न भवेदिति। एतावतैवानुमातुं शक्यते, यदेतेषामार्य्यजातिविगर्हितकार्य्याणामा-चरणे आधुनिकानां शिक्षितानां मनसि द्वैधीभावोऽपि नाविर्भवतीति। यत्र च सामान्यप्रीतिसंवर्द्धनायैव यथेच्छाचारिता प्रवर्त्तते, यथेच्छा-चारितामन्तरेण च प्रीतिसंवर्द्धनं न भवेत्तत्र वर्णधर्म्माचारः कमा-श्रित्य कथंकारं सन्तिष्ठेत? प्रधाननगरवासिनां नव्यभव्यसभ्यानामा-चारश्च सर्व्वथैव नालोचनीयः, तदालोचनायान्तु वर्णाश्रमधर्म्मस्यास्ति-त्वमेव सन्दिह्येत, यतस्तेषु तादृशः प्रायश एव दुर्लभो यः खाद्याखाद्य-विचारविरहितः खाद्येषु हृद्यं हिन्दूनामखाद्यमपि सर्व्वं नास्वादित-वान्! वारविलासिनीविलासस्तु तेषां प्रशंसावह एव. यस्य च सुरचिता वेश्या नावासं परिशोभयेत्, स सभ्यमध्य एव न निविशते! मदिरापाना-मोदश्च तद्विलासाङ्गतया सर्व्वथैव तैरङ्गीकर्त्तव्यः! हा हन्त!! येषामेव-मकार्य्यं एव सर्व्वं जानन्ति तेऽपि सम्भ्रान्ताः सामाजिकसभायां स्फीत-वक्षस एवान्येषां दोषमाख्याय तान् समाजाद्बहिष्कर्त्तुमुच्चैः कथाः कथयन्ति! अहो कालप्रभावात् सुदुष्परिहरं पापं कृत्वापि ये स्वतो न कथयन्ति,बहुभिः परिज्ञातपापानुष्ठाना अपि ते सामाजिकैर्नालक्ष्यन्ते। ये तु स्वल्पमपि पापं कृत्वा स्वीकुर्व्वन्ति, निरीहप्रकृतीनां तेषां प्राय-श्चित्तादिविधानार्थमपरिमितमाधिपत्यं प्रकाश्यते। धनिनो मानिनो राजानश्च ये कुकार्य्यमेवमनुतिष्ठन्ति, ते तु कैरपि सामाजिकैर्न-

जिघ्रास्यन्ते। एवञ्च ये धर्म्माचारविगर्हितं कार्य्यजातं साक्षान्नानुतिष्ठन्ति तेऽपि सर्व्वथाऽपरिहार्य्यतत्संसर्गत एव दुर्गतिसागरे निमज्जन्ति। हा हन्त, एवं पर्य्यालोचयतो न कस्य "म्लेच्छाचाररताः सर्व्वे तदैव प्रबलः कलि"रिति तन्त्रोक्तं स्मृतिपथमायाति। यत्र क्वचन ग्राम्यदेशेनाधुनापि सभ्यतास्रोतांसि समापतितानि, तत्राशिक्षितनिरीहप्रकृतिषु कथञ्चिदधुनापि धर्माचारः प्रचरति, कालप्रभावात्तेषामपि विकृतौ सर्व्वत्र वैकाचाराः सम्प्रत्येरक्षिति प्रतिभाति। एतादृशभावस्य तु परिवर्त्तनं भवेन्नवेत्यत्र परमकारुणिको भगवानेव प्रमाणमिति शम्॥

---

## हिन्दुधर्म्म-संशोधनम्।

चैत्रतोऽनुवृत्तम्।

अथ अन्योऽपि हिन्दूनां वर्व्वरतायाः परिचायको नियमः, यदेते सृष्टेः सारं रमणीरत्नं आच्छाद्य गोपयितुमीहन्ते। अहो मूर्खता! एते हि सभ्यतायाः प्रधानतमं साधनं, स्त्रिया सह राजपथे भ्रमणं लज्जाजनकं अकार्य्यञ्च मन्यन्ते। स्त्रियं दासीमिव मन्यन्ते, किन्तु ते अज्ञा न जानन्ति, यत् शास्त्रकारा अपि इदमकार्य्यमाचक्षते। तथाहि—

पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा।
पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः॥
रमन्ते यत्र नार्य्यस्तु रमन्ते तत्र देवताः।
यत्रैतास्तु न पूज्यन्ते सर्व्वास्तत्राफलाः क्रियाः॥" मनुसं।

सर्व्वैरेव पत्न्याज्ञया वर्त्तितव्यं, पूजादिभिस्ताः प्रतिदिनं तोषणीयाः। अलं व्ययमात्रफलया देवपूजया, प्रतिसन्ध्यं तासामेव पादोदकं पातव्यं, नोचेत् नः कल्याणं सुदूरपराहतमिति ब्रूहस्व

मनोरपि अभिप्रायः। अस्मत्सभासभ्येषु य एवं न कुर्य्यात्, स सभातः दूरीकरणीयः। तथा च शास्त्रमपि—

"स साधुभिर्बहिस्कार्य्यो नास्तिको वेदनिन्दकः।"

अन्यच्च अस्माकं विधवानां कन्यकानां पुनर्विवाहो विधेयः। विधवानां कथं अविधवानामपि नारीणां पत्यन्तरपरिग्रहः अवश्यमेव उचित इति शास्त्रकारा आमनन्ति। तथाहि पूर्व्वोक्तश्लोके पतिभिरिति बहुवचनमेव तत्र विशेषतः प्रमाणम्। पितृभिरित्यपि नारीणां बहुपत्नीत्वं सूचयति, कथमन्यथा सन्ततीनां बहुपितृत्वं युज्येत। अन्यच्च प्रमाणम् यथा—

"मृते गते प्रव्रजिते क्लीवे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते॥"

अन्य इति एकवचनं अतन्त्रम्। तेनायमर्थः सर्व्वाभिरेव नारीभिः बहवः पतयः कार्य्याः। कदा कस्मिन्नवसरे कार्य्या इति अवसरमेवाह—मृते इति। मृते पत्यौ लोकान्तरं गते सति अविचारितं अन्यः अन्यौ अन्ये वा पतिः पती पतयो वा कार्य्याः। यदि दीर्घायुः पतिर्न म्रियते, तदा क उपायस्तत्राह—गते इति। अयमर्थः,—स्वामिनि धनाद्युपार्ज्जनाय विदेशं गच्छति सति तस्मिन्नवसरे नारीभिः अन्ये पतयः कार्य्याः। अथ यदि स्वामी, भूस्वामी राजा वा भवेत्, स तु धनोपार्ज्जनाय न विदेशं याति, तदा—किं कार्य्यं तत्राह —प्रव्रजिते इति. व्रजितुं भ्रमितुं उद्यानादिकं गते अन्यः पतिः कार्य्य इत्यर्थः। अथ यदि कस्याश्चित् स्त्रैणः पतिः स्त्रियं विहाय भ्रमितुमपि न याति, तदा का गतिस्तत्राह—क्लीवे इति। अत्रायमर्थः—सर्व्वदा नारीसन्निहितानां जायते प्रायशः ध्वजभङ्गरोगः, तदा च चिकित्सकानुमत्या नारीविरहितेन तेन स्थेयं, तस्मिन्नवसरे नारीभिरन्यः पतिः कार्य्यः। अथ वाजीकरणाद्युपायेन स्थितस्य पत्युः यदि वा न स्यात् क्लैब्यं, तदा यस्मिन् कस्मिंश्चित् रोगे जाते

केनचित् व्याजेन पत्यरन्तराले गत्वा नारीभिरन्य: पति: कार्य्य इत्याह—पतिते इति, रोगात् शय्यायां पतिते इति तदर्थ:। अलं व्याख्यानबाहुल्येन। इदमत्र पर्य्यवसितं, यत्तथा भवतु नारीभि: बहुपतय: कार्य्या इति हिन्दुग्रन्थसम्मति:। अहमपि अनुरुणध्मि सभ्यमहोदयान् तेषां कन्यकादीनां बहुपतिविधानाय। ( उच्चै: करतलध्वनि: )। अन्ये चास्माकं ग्लानिजनका: कुसंस्कारा:, यत् स्वयमनशतापि मातृपितृरक्षणं पुत्रेण कार्य्यं, गृहस्थेन अतिथिस्तोषणीय इत्यादिकं बहुमन्यामहे। एतदकरणे किल पापानि जायन्ते। न जाने एतादृशो नियम: ऋषिप्रोक्तो न वा। मन्ये वार्द्धकोपायं चिन्तयता केनचित् एवं संस्कार आहितो मानवमनसि। सुतरां स्वार्थमूलकत्वादियं रीतिरग्राह्या विद्वद्भि:। इदानीमस्माकं उन्नत्युपायानुक्त्वा अहं विरमामि। चौर्य्यं पापमिति संस्कारविशेषो भित्तिरहित:, सुतरां तमगृह्णता धनोन्नतये छलं कर्त्तव्यम्, विशेषत: धर्म्माय चौर्य्यकरणे न दोषलव:। अस्माकं सभास्थपठ्यमानान् प्रबन्धान् साधारणं ज्ञापयितुं काचित् मासिकपत्रिका प्रयोजनीया, तदर्थं अर्थोपार्ज्जनं यथा तथा कर्त्तव्यम्। मानससन्तोषाय मदिरापाने न दोष:। सर्व्वेषामेव सभ्यानां नार्य्य: अत्रागत्य नृत्यकलां अभ्यस्यन्तु, कथमन्यथा भवेत् कलोन्नति:। सम्प्रति इदमेव मे मतं, यथा मनस: प्रफुल्लता, शरीरं यथा हृष्टं पुष्टं बलिष्ठञ्च भवेत्, तथैव कार्य्यम् ( उच्चै: करतलध्वनि: ) इति अहं विरत:। इत्युक्त्वा स उपविष्ट:। सभापतिरपि पूर्व्ववदेव संक्षेपेण किमपि उक्त्वा सभाभङ्गं अकार्षीत्। अहमेतत्सभागमात् आत्मानं सापराधमिव मत्वा शनै: शनै: गृहं प्रति प्रस्थित:।

अहो दुर्द्दिनं! यत् शास्त्राणां अपव्याख्यां जनयद्भि: स्वयमसंस्कृतैरपि धर्म्मसंस्कारमिच्छुभि: कैश्चित् पाषण्डधूर्त्तै: हिन्दुधर्म्म: खलीक्रियते।

हन्त ! अधुनास्मद्देशे धर्म्मस्य यादृशी दुरवस्था परिलक्ष्यते ततः प्रतीयते यदयं हिन्दुधर्म्मोऽनतिकालमध्ये एव स्मरणीयतामुपयास्यति । अथवा यास्यतीति कथमुच्यते प्रायो यात्येव । इदानीमपि परिलघुरेव धर्म्मप्रभावः । अधर्म्माभ्युदयं विचिन्तयतो मनसि इदमेव प्रतिभाति यत् समयः खलु एष भगवदवतारस्य । महाकाललक्षणेषु न तदस्ति यदिदानीमवशिष्टं । तथाहि—

"धर्म्मः संकुचितस्तपो विचलितं सत्यञ्च दूरे गतं
क्षौणी मन्दफला नृपाश्च कुटिलाः शास्त्रेतराः ब्राह्मणाः ।
लोकाः स्त्रीवशगाः स्त्रियोऽतिचपलाः पापानुरक्ता जनाः
साधुः सीदति दुर्जनः प्रभवति प्रायः प्रवृत्ते कलौ ॥"

इति कलिलक्षणमुक्तमाचार्य्यवर्य्यैः । (१) तत्र धर्म्मसङ्कोचस्तावत् सर्व्वजनसंवेद्य एव । कति नाम सन्ति जना ये प्राणैः धर्म्ममाश्रित्य वर्त्तन्ते । (२) तपसः पुनः का कथा ; तपो नाम कः पदार्थ इत्येव प्रायशो जनैर्नज्ञायते । (३) सत्यमाचर्य्यमानञ्च जनयतीदानीं बहुलं क्लेशम् । किमपरं यदि धर्म्माधिकरणेऽपि यथासत्यमाचष्टे, तदा न्याय्यादपि अधिकारात् स सत्यवाक् परिहीयेत, सुतरां सत्यं किमाश्रित्यान्तिके तिष्ठेत् । (४) सर्व्वप्रसिद्धं भारतभूमेः शस्यजननं, किन्तु इदानीं तद्वासिनः हा भोज्यम् ! हा अन्नं इत्यादि विलपन्तः नानाविधैः रोगैः पीड्यमाना अकाले कालकवलं गच्छन्ति । इदानीं भारतभूमिः दुर्भिक्षमहामारीप्रभृतीनां चिरवसतिस्थानत्वमपि, सुतरां क्षौणी न मन्दफला इति कथं अवेयम् । (५) नृपतिरस्माकं सर्व्वथैव सदाशयः, किन्तु कौटिल्यमन्तरेणेदानीं राजनीतिरेव स्थातुं नार्हति । (६) ब्राह्मणानां शास्त्रेतरत्वं चिन्त्यमानं सहृदयहृदयानि ग्लपयति । पुरा धर्म्मसन्देहे मनुजाः नैमिषे क्षेत्रे येषां शरणमन्विष्य कृतकृत्या बभूवुः, इदानीमपि जाते धर्म्मसन्देहे येषामेव पादकमलं शरणत्वेन आश्रीयते, हा ! हन्त !!

उच्चमानं हृदयं स्फोटयति यत्तेषु ब्राह्मण-वंशधरेषु बहव: पण्डित-मन्या: लोभोपहतचेतस: सन्त उच्छास्त्रं यत्किञ्चित् व्यवस्थापयन्त: समाजस्याधोगतौ साहाय्यमारचयन्ति। किन्तु ते न विचारयन्ति यत्तया नाम व्यवस्थया त एव उपहास्यतां प्रयान्ति। केचन वा तेषु स्वयमेव धर्म्माधर्म्मं न स्वीकुर्वन्ति। स्वयमेव तैरेवं पापजनकं कार्य्य-माचर्य्यते, यत्तच्चरितोदाहरणोपन्यासेन हिन्दुधर्म्मद्वेषिण: अपरे सर्व्वा-नेव हिन्दुधर्म्माश्रितान् निन्दन्ति उपहसन्ति च। यांश्च ब्राह्मण-पण्डितान् सर्व्व एव हिन्दुधर्म्मिण: ऋषिस्थानीयान् मन्यन्ते, त एव चेत् अनार्य्योचितकार्य्यैरर्थमुपार्ज्जयन्त: स्वाङ्गनाङ्गाभरणरचने व्यग्रा: परिलक्ष्यन्ते, बत! के तदा तद्व्यवस्थितधर्म्ममार्गगमने सश्रद्धा भवेयु:। (७) लोकानां स्त्रीवशगत्वमपि न व्याख्येयं, पित्रोर्दाहकर्म्मण्यपि य: अनवसरतया उपस्थातुं नार्हति, कर्म्मव्यापृत: सोऽपि रमणीनिर्देश-मनुसरन् मासमेकं त्यक्तकर्म्मा गृहे अवस्थातुमर्हति। (७।८) स्त्रियश्च चपला: पापानुरक्ता इति प्रपञ्चितमेवास्ति। (८) साधु: सीदति इति शास्त्रैर्दुर्व्वचं, यत इदानीं को नाम साधु:, कोवाऽसाधु: इति परिज्ञानं शास्त्रैस्तरलमतिभिरसमाहितचित्तैरशक्यम्। य एवास्माभि: साधुत्वेन मन्यते, परिणतौ सोऽपि असाधुनामा एव पर्य्यवस्यति। सुतरां न कस्मिदपि इदानीं साधावपि साधुत्वेन विश्र-म्भिति। प्राय: प्रवञ्चनानिपुणा असाधव एव इदानीं कुहकभ्रान्तै-र्जनै: परिसेव्यमाना: परिलक्ष्यन्ते, सरलमतय: साधवश्च अपदार्थधिया आड़म्बरदर्शनोत्सुकै: तै: परिहीयन्ते।

क्रमश:।

श्रीसुरेन्द्रकुमार-काव्यसांख्यतीर्थस्य।

PRINTED BY GOBARDHAN PAN

AT THE GOBARDHAN PRESS,

*80/1, Muktaram Babu's Street, Calcutta.*

# आर्य्यप्रभा ।

द्वितीयवर्षे । } सुदुर्लभाः सर्व्वमनोरमा गिरः । { ११म संख्या ।

## मासावतरणिका ।

अत्यन्तसन्तापकतावशादयमाषाढमासः खलु दीर्घवासरः ।
कालप्रभावादतिदीर्घजीविनः प्रायो भवन्तीह परोपतापिनः ॥

## निद्राष्टकम् ।

निद्रे भद्रे ! प्रवक्तुं तव गुणमगणं नास्मि शक्तः कदाचित्-
मन्ये धन्या शरण्याऽसमगुणवसती राजसे त्वं जगत्याम् ।
स्वार्था वृत्तिः समस्ता विलसति नितरामन्यशान्त्यै जनस्य
नित्यं वृत्तिं पयोदावलिरिव तनुषे स्वार्थलेशैस्तु भिन्नाम् ॥ १ ॥
पुत्रं संसारसारं नयनविलसितं नामशेषं समीक्ष्य
क्षीणाक्षीणा शयाना प्रतिपलमखिलं मन्यमानातिशून्यम् ।
हित्वा देहं प्रदाहं शमयितुमपि या वाञ्छतीव प्रसूतिः
निद्रे ! त्वत्क्रोडमाप्ता क्षणकतिपयतः सापि शान्तिं समेति ॥२॥
कान्ता कान्ते कृतान्तावसथमुपगते सन्ततं या विशीर्णा
स्मारं स्मारं सुसारं "पतिगतिरबला" वाक्यमेतद्धि साध्वी ।
विश्वं विश्वाधिहेतुं गणयति नितरां क्रन्दनिष्यन्दिताश्रुः
हन्तान्तर्दाहशून्या तव शरणगता यात्यसौ चित्तशम्यम् ॥ ३ ॥
दारिद्र्येणातिखिन्नः परिजनभरणव्यस्तचित्तो मनुष्यो
वात्यावर्त्तप्रयातोत्पलदलशकलाऽऽघूर्णमानोत्तमाङ्गः ।
अस्थेत्थं क्लेशभारं कथमपि दिवसे मृत्युकामोऽपि नित्यं
निद्रे देवि ! प्रशान्तो निशि तव कृपया क्लेशलेशैर्वियुक्तः ॥ ४ ॥

क्रौर्य्यं चौर्य्यं वौचर्य्यं प्रतिपलमपरे पीड़यन् प्राणिवृन्द-
मेनोव्रातं जनो यो घटयति निरयप्राप्तिवर्त्मप्रसारम्।
त्वत्सङ्गो रङ्गभङ्गः शमयति सुतरां तस्य तां पापवृत्तिं
चित्रा शक्तिर्विभाति प्रतिपदमिह सत्सङ्गतेर्बृंम्स लोके॥ ५॥
आढ्ये दीने नवीने प्रवयसि पृथुके ज्ञानसम्भारदीप्ते
जाड्यान्धे व्याधिजीर्णे सहजसुखगते पार्थिवेऽपि प्रजायाम्।
दृष्टिस्तुष्टिप्रताना लसति तव भवे मेदुरा देवि निद्रे!
उत्कर्षञ्चापकर्षं गणयति न दयानीरवर्षे महीयान्॥ ६॥
लब्धुं शान्तिं जनौघः सततमुपयतः शान्तिदातुः प्रतुष्ट्यै
कृत्वा कृत्यं विचित्रं फलमभिलषितं प्रायशो नो समेति।
निद्रे! त्वत्तोषणार्थं परमिह न हि ये कामयन्ते महान्तः
स्वास्थ्यापायं विचिन्त्याऽऽवितरसि करुणां तेषु चापि प्रसन्ना॥७॥
अर्द्धे नक्तं यदि स्यादुगुरुतरविषयप्रेक्ष्यमाणो मनुष्यः
श्रेयोभङ्गं विमृश्य प्रतिमककरुणिके! तन्तदानीं जहासि।
कार्य्यं सम्पाद्य हृद्यं निलयमुपगतं श्रान्तमन्तर्विषण्णं
दृष्ट्वा तुष्टिं विधातुं पुनरपि दयसे तस्य मातेव निद्रे! ॥८॥

व्याकरणतीर्थोपनामक—
श्रीहेरम्बनाथ शर्म्म-तर्कतीर्थस्य।

---

## स्वार्थान्धो विपदां पदम्।

फाल्गुनतोऽनुवृत्तम्।

अहो कालविजृम्भणम्! यस्मिन् भारते सावित्र मनसावृतं शाल्वा-धिपतिद्युमत्सेनतनयं सत्यवन्तं देवर्षिनारदवदनात् क्षीणायुषमाकर्ण्य महीपतिनाश्वपतिना पवित्रचरित्रा सावित्री वरान्तरवरणायानु-मोदितापि पातिव्रत्यधर्म्मलङ्घनभिया न वरान्तरं वरयामास। तथाच

आचरन्तः नरकगमनाय प्रतीक्षन्ते । अतिहृणितेषु अपि कर्म्मसु ईश्वरप्राप्त्युपायधिया सज्जन्ते । पूर्व्वसंख्यायां "प्रभायाः" मया स एवार्थो गल्पच्छलेन प्रतिपिपादयिषितः । वस्तुत इदानीं धर्म्म-सभायां प्रायशः एव पाषण्डैः एवमेव उच्छास्त्रं अपशास्त्रं वा स्वमतं शास्त्रीयत्वेन प्रमाणयितुं समीह्यते, एवमेव शास्त्रव्याख्यानं रचयद्भि-र्लोकलोचनयोर्धूलिमुष्टिं क्षिपद्भिरात्मप्रवृत्तिपरिपोषः क्रियते ।

अहो क्व नाम स आर्य्याणां सुविमलो धर्म्मः ! क्व वा धूर्त्तैर्धर्म्म-त्वेन व्याख्यायमानं अतिहृणितं पापकर्म्म !! तत्रभवन्तः धर्म्म-शास्त्रकाराः पराशरादयः ! युष्मत् प्रणीतैः धर्म्मग्रन्थैरिदानीं खल-हस्तगतैः अधर्म्मप्राबल्यमेव जन्यते । अथवा एतादृशः अधर्म्मप्रभावः भगवता भूत-भावनस्य नारायणस्य अनतिचिरभाविनमवतारमेव सूचयति । इदानीं यथा अधर्म्मः सानुचरः आविर्भूतस्तथा मन्ये "परित्राणाय साधूनां विनाशाय च दुष्कृतां" भगवान् सत्वरमेवावि-र्भविता । कुरुतां शुभमीश्वर इति शम् ।

श्रीसुरेन्द्रकुमार-काव्यसांख्यतीर्थस्य ।

---

## कौतुककणा ।

### भवादृशस्यैवं कर्म्म ?

कस्यचिद्वृषलस्य भवने निशीथे चौर आपतत् । भार्य्यया प्रबोधितो वृषलो भयोद्विग्नमनाश्चीत्कर्त्तुमप्यक्षमः शनैर्भार्य्यामाह— प्रिये ! त्वयात्वन्तःपुरस्थ-मार्गमवरुध्य स्थीयतां, मया पुनर्बहि-र्वाटीस्थो मार्गो रुध्यते । प्रत्यक्षीकरिष्यामि तावत् केन मार्गेण दास्याः पुत्रः पाटच्चरश्चौरः पलायिष्यत इति । तथानुष्ठिते विदग्धस्त-स्करोऽपि पुरीषोत्सर्ग-मार्गेण पलायमानपरोऽभवत् । ज्ञात्वैतद्-

वृषलेण स्वस्य भार्य्याऽवादि ;—कुत्र गमिष्यति खलु स पाटम्बरः ? भावना तु न कर्त्तव्या। यदा शौचार्थं स प्रातर्गमिष्यति गाहितुं भागीरथीस्तदैव मे हस्तगतो भविष्यतीति निश्चित्य प्रत्यूषस्यैव तस्करान्वेषणगामिना तेन गङ्गास्नानार्थमायातो दृष्टः कश्चिद्वेदविद्ब्राह्मणः, पृष्टश्च—भो महात्मन्! भवादृशस्यैवं कर्म्म! धिग्भवन्तम्। श्रुत्वा ह्येतद्ब्राह्मणश्चाप्रतिभः!

---

## महामारिः।

कस्मिंश्चिदधिष्ठाने समुपस्थितं महद्मारिभयम्। प्रतिदिनमेव बहवो मृत्युमुखमापतन्ति। एकदा तु देशान्तरादागतः कश्चित् पथिकस्तत्र कुत्रचिदपि विटपिमूले विश्रान्तिकामो यावत्ताम्रकूटसंयोगेन धूम्रं पिबति, तावदेवागत्य तद्ग्रामस्थोऽपरः कश्चित् तं पथिकं पृच्छति,—भो महाशय! कुत्र ते निवासः? कथं वागमनम्? किं न श्रुतं त्वयाऽत्रस्थमहामारिविवरणम्? पथिकः सविषादमुत्तरति—किमिदमुच्यते महामारिः अत्र ग्रामे? कथमेतत् सम्भवति, यतो रहसि ताम्रकूटधूम्रपानसमयेऽपि जन-समागमाभावं न पश्यामीत्यहो कष्टम्।

व्याकरण-तीर्थोपनामक—

**श्रीसुरेन्द्रमोहन-सिद्धान्तवागीशस्य**

आलगीग्राम-वास्तव्यस्य। ( ढाका )

PRINTED BY GOBARDHAN PAN

AT THE GOBARDHAN PRESS,

*80/1, Muktaram Babu's Street, Calcutta.*

# आर्य्यप्रभा ।

द्वितीयवर्षे । } सुदुर्लभाः सर्व्वमनोरमा गिरः । { १२श संख्या ।

## मासावतरणिका ।

श्रावणो वनराजीनां वर्षाश्रीहृद्धिमादिशन् ।
कर्षकाणां तथा हर्षं वर्द्धयंश्चरति चितौ ॥

## वर्षशेषाभिभाषणम् ।

परमकारुणिकपरमेश्वरस्यापारकरुणया ग्राहकाणामनुग्रहेण च नानाविधोपद्रवविद्रुतापि द्वितीयवर्षमतिक्रामतीयमार्य्यप्रभा। दुर्व्वारकारणपरम्परातिपराहता अस्मिन्नपि वर्षे यथोचितप्रचारमार्य्यप्रभाया व्यवस्थापयितुमशक्नुवन्तो वयं नितान्तमनुतपामः। अनुतप्तास्चैतावत् कालमस्य मूल्यार्थमपि ग्राहकाणां सकाशे नालिखाम। अस्माकं बहुविधापराधसत्त्वेऽपि ये महात्मानोऽनुग्राहका ग्राहकाः संस्कृतानुरागितया प्रभाया दीर्घजीवनं कामयमाना यथासमयमेवास्या मूल्यं प्राहिण्वन्, तेषामुपकारिता संस्कृतानुरागिता सहृदयता च सर्व्वथैवास्माकं चिरस्मरणीया। ये च ग्राहकाः प्रभाया जीवन एव जातसन्देहा एतावत् कालमस्या द्वितीयवार्षिकं मूल्यं न प्रैरीरन् तेषामन्तिक एवेदानीं वर्षे समाप्य द्वितीयवर्षीयं मूल्यं प्रार्थयामः। आशास्महे च तैः सत्वरमेव तन्मूल्यं संप्रेष्य पत्रिकाप्रकाशस्य साहाय्यं विधास्यत इति। ग्राहकाणामनुग्रह एव पत्रिकापरिचालनस्यैकमात्रं निदानं, तस्मादद्य सर्व्वं एव सहृदयसंस्कृतशास्त्राध्यायिनश्चान्तेवासिनः सनिर्ब्बन्धमस्माभिरनुरुध्यन्ते यत्ते यथायथमर्थसामर्थ्यादिसाहाय्येनार्य्यप्रभायाः सुदीर्घजीवनं कामयन्तामिति। एतदप्यवधेयमार्य्यप्रभा न कस्यापि निजस्वं ये निजस्वविवे-

चनयास्याः परिचालनादिभारं ग्रहीतुमिच्छन्ति त एवात्राधिकारिणः। यथा परिचालने च समुन्नतिरस्याः सम्भाव्येत, तथोपदेशमपि सर्व्वेभ्य एव वयं सादरं ग्रहीतुमुत्सहामहे इति सर्व्वैरेव प्रभाहितैषिभिः स्वस्वमन्तव्यं प्रकाशनीयम्।

नानाविधासुविधाभिरस्मिन् वर्षे प्रबन्धांशस्य कथञ्चिन्न्यूनता समपादि, मुद्रायन्त्रपरतन्त्रत्वमेव तत्र प्रधानतमं कारणं। सम्प्रति च संस्कृतज्ञं विज्ञापयामः—कलिकाताप्रवासी परमहितैषी स्नेहास्पदः श्रीमान् नगेन्द्रनाथ भट्टाचार्य्यो निःस्वार्थतः केवलं संस्कृतानुरागितयैव संशोधनतत्त्वावधानादिना प्रभामुद्रणस्य यथेष्टं साहाय्यमस्मिन् वर्षे समपादयत्। आशास्यते च तत्साहाय्येनातःपरं यथासमयमेव दर्शितन्यूनतादिदोषमपास्यार्य्यप्रभा प्रकाश्यत इति शम्॥

---

## वृद्धः।

अदन्ततुण्डः पलितकेशमुण्डो जानुद्वयाश्लिष्टशिरा निर्य्यदन्त्रः परतन्त्रो देहभारं वोढ़ुमसमर्थमाण आत्मानमधिक्षिपन् पौरान् युवकानाहूयावदत्—भो युवकाः! निखिललोकपावन-जगद्वन्द्यचरणारविन्द-गोविन्दनाम सङ्कीर्त्तयत। अहमस्मि समासन्नशमनः। युवका अकथयन्, सङ्गीयतेऽस्माभिरानन्दसन्दोहदा भगवद्गोविन्दगाथा। परं साम्प्रतं मृत्युवार्त्तया मनांस्यस्माकमुदासतेतरां, सुतरां कतिपयजिज्ञासाऽस्मान् मुखरीकरोतीति प्रथमं तदभिधातुमभिलषामः।

वृद्धः।—अनुष्ठीयतां यथाभीष्टम् श्रीमद्भिः।

युवकाः।—महात्मन्! नासीत् पूर्व्वकालीनानां यौवने जरा, दर्शनशक्तिलघिमा, दशननिपातो, देहदौर्ब्बल्यञ्च, न वासीदसामयिको मृत्युः। आधुनिकाः पुनर्यौवन एव एतावतीमवस्थां भजन्ते, अनयोर्व्वैषम्यकारणं हृद्यं प्रतिपाद्य प्रबोधयत्वस्मान् तमिस्रसंश्रितमानसाननभिज्ञान् विज्ञप्रवरो भवान्।

वृद्ध:।—भो युवका:! दिष्ट्या दृष्टा यूयं, युष्मद्वचनावली-माकर्णितवतो मे महती तुष्टिरजनिष्ट, यत्प्राच्यविद्याविद्योतितानामपि नव्यसभ्यानां श्रीमतामस्त्याधुनिकदोषसम्बिज्ञानम्। प्रायश एवमालोक्यते आधुनिका युवका :वर्त्तमानदशां न दुर्द्दशां मन्यन्ते। त एवमन्धतमसेन संवृतमानसा: समानधर्म्माणां प्रतिपदं विपदं विलोक्यापि आत्मनो विपदमगणयन्त: उत्तरोत्तरं विपज्जालसङ्कुला आत्मापराधविटपिन: कर्म्मानुरूपं फलमुपभुञ्जतेतराम्।

यातु अलमनल्पजल्पनया, अवधीयतां युष्माभि:, यथाप्रश्नमाख्यायते प्रश्नोत्तरं व:। जगदिदं कर्म्मक्षेत्रं, ये यादृशं कर्म्म कुर्व्वन्ति, ते तादृशमेव फलमासादयन्ति। यथा ऐहिककृषिकर्म्मादौ कृषिवला ये यावन्तं यत्नमादधति ते तावत् फलं लभन्ते, यथा वा कूपखनिता प्राचीरनिर्म्मता च स्वकर्म्मानुसारेणैवेह अधोगतिमूर्द्धगतिञ्च भजते। तथा पारत्रिकेऽपि देहिन: स्वकर्म्मानुगुणमेव फलमधिव्रजन्ति।

परन्तु असदाचरणमेव पापप्रसारकारणम्। यानि सन्त्यस्माकं परमोपकारीणि मन्वादिप्रणीतधर्म्मशास्त्राणि, तानि तु "कतिपयस्वार्थपरायणप्रचण्डभण्डतुण्डनि:सृतानी"ति सम्प्रधार्य्य कदर्य्यचर्य्या अनार्य्या न श्रद्दधति, परं यथेच्छमाचरन्तोऽभक्ष्यभक्ष्यादिकमपि भक्षयन्ति। तत्र च काचिद्वस्तुशक्तिराशीविषविषमिवाशु फलमुपजनयति, काचिच्चालर्कविषमिव चिरेण। न जानामि पुन: केचन पामरा नरा वस्तुशक्तावपि संशेरते न वा। मदिरां पिवतां मोहं, विषं सेवमानानाञ्च विनाशं विलोकयतामपि येषामस्ति वस्तुशक्तौ सन्देहसन्दोहस्ते प्रकृत्या पशव एव, तान् प्रति नास्ति मे किमपि वचनीयम्। शास्त्रविरुद्धेनाध्वना विहारेण जायते स्वास्थ्यहानिरिति यौवने जरादीनां सर्व्वथैव सम्भव:। "कारणगुणा: कार्य्यगुणानारभन्त" इत्यल्पायुष: पितु: सम्भूततयाऽपत्यस्यापि भवत्यल्पायु:। चतुर्विंशतिवर्षात् पूर्व्वं न जायतेऽस्थिमज्जादीनां परिपक्वता, दीर्घायु:

कामयमानैश्चतुर्विंशतिवर्षं यावत् "स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्य-भाषणं. सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः विपरीतं ब्रह्मचर्य्यमेतदेवाष्टलक्षणम्।" इति मनूक्तलक्षणलक्षितं ब्रह्मचर्य्यमाचर्य्य वर्त्तितव्यम्, तथा प्रकृततत्त्वदर्शनयोगदर्शनसूत्रञ्च "ब्रह्मचर्य्यप्रतिष्ठायां वीर्य्यलाभः। चतुर्विंशतिवर्षं यावत् ब्रह्मचर्य्यं प्रतिपालयतो भवति दीर्घायुः, न जायते यौवने जरागन्धोऽपि, न वा अकाले केशजालधवलिमा, दृष्टि-विकलता, दुर्ब्बलता च, तदात्मप्रभवस्यापि सुतरां तथा। "पूर्णासु योषित् परिवर्ज्जनीया" इत्यादिशास्त्रं प्रतिपालयतां नास्ति कदाचि-दप्यधिकवीर्य्यस्खलनसम्भवः। अनार्य्याणां कार्य्यकलापं पर्य्यालोचयतो मे "भोगान् भोगानिवाहेयानध्यास्यापन्न दुर्लभे"ति कविकुलगौरवरवे-र्भारवि-र्भारती असकृत् स्मृतिपथे पान्थायते।

कश्चिदभ्यागतो युवकः।—आर्य्यं भवन्तमभिवन्दे।

वृद्धः।—कस्त्वं ? किमर्थं वात्रोपतिष्ठसे ?

अभ्यागतो युवकः।—विदाङ्करोतु बिल्वनगरं मे वासस्थानं, नाम्नास्मि सुदर्शनः। तत्रभवतो नवीनरहस्यव्यञ्जकं मञ्जु वचनमाकर्ण्य कर्णौ मे नितान्तं शान्तिमासादयतः, तत् धर्म्मतत्त्वं जिज्ञासवे भव-न्तमाश्रितायाश्रवाय मह्यं परलोकसाधनं धर्म्ममनुब्रवीतु भवान्।

वृद्धः।—सुदर्शन ! श्रुतिहारी तावत्तवायं निस्वनः, ज्ञापयानि यथा प्रश्नं त्वां धर्म्मतत्त्वम् ! अवगच्छसि किं ? मातापितरौ प्रति व्यवहारमितरत् सांसारिककर्त्तव्यञ्च।

सुदर्शनः।—जानामि तत् सर्वं, नास्ति मे संसारकृत्ये मानस-प्रसादः।

वृद्धः।—अहो !! यत्र कति कति महात्मानः असारसंसार-रसास्वादनपरायणाः स्थाविरेऽपि मायापाशं समुच्छिद्य शान्तिपुरीं

वाराणसीमुपगन्तुं मोक्षाय न समन्ते समायां. तव अचिरजातस्य युवकस्य तव शान्तिविरहः ! किमसि निर्धनः ? उत गेहिनी ते कुलटा ?

सुदर्शनः ।—न मे विभवविरहः, सन्ति बहवो दासजनाः, करिणो वाजिनश्च, कलत्रमपि पवित्रचरित्रं । परं विवादो मायया मदीयगेहं न जहातीति विषादमासादयामि ।

वृद्धः ।—सुदर्शन ! केन दुष्टेनोपदिष्टोऽसीष्टसंसारव्यवहारे ।

सुदर्शनः ।—विश्वविद्यालयस्य एम्, ए, ( M. A. ) उपाधि-धारिणा मत्सखेन श्रीमता रमणीमोहनेनाहमुपदिष्टः सांसारिक-नये ।

वृद्धः ।—सुहृत्ते सार्थकनामा, सुतरामेव तवेदृशी दशा । कीदृशा-कारस्ते सांसारिकविवादः ?

सुदर्शनः ।—निवेदयामि—यदि नाम मम भार्य्या समागतजनानां सविधे ईषदवगुण्ठना व्यक्तकण्ठा आलपति, तदा जननी तां निर्भर्त्सयति । यदि च मातरं प्रतिवदति, तर्हि माता तामरुन्तुदवाक्य-वाणेन सद्यो विध्यतीति नक्तन्दिवं स्रवदश्रुनेत्रं कलत्रं मे समयमति-पातयति ।

वृद्धः । त्वं भार्य्यां किमुपदिशसि, किमाचारः संवृत्तश्च ।

सुदर्शनः । सहधर्म्मिणी मां यद् वदति तदनुतिष्ठामि, समा-श्वासयामि च तां, न त्वया क्रन्दितव्यं, का भीतिः, व्यवहर्त्तव्यञ्च यथाभिप्रायं यावदहं वि, एल, ( B. L. ) परीक्षायां नोत्तरेयं ताव-देव ते दुःखम् । तव विषादापनोदनायैवाहं व्यवहारजीवी भवेयम् ।

वृद्धः । तव वचनं श्रुतवतो मे कलेवराद् वहिर्भवति वह्नि-स्फुलिङ्गः । धिक् नव्यशिक्षितान् बन्धुदीक्षितान् नितान्तं कान्ता-वशंगतान् युष्मान् । हा हन्त ! मातुरानुकूल्यसम्पादकोपदेशन

तावद्दूरमास्तां, परं प्रतिकूलमुपदिशसि स्त्रियम्। या खलु निखिल-कुशलजननी जननी सन्ततं सन्तानशुभसन्तानं कामयते, यस्याश्च असामान्यकारुण्येन जीवितपथस्थेतावद्दूरमागतः, असीमाप्रति-मस्नेहमहिम्ना च विश्वस्य सुषमा समालोक्यते, सततमादेशप्रति-पालनेनापि यस्या ऋणमशक्यपरिशोधनम्। अहोवत !! तां वन्दनीय-पदारविन्दां प्रसूतिं प्रति इत्थं व्यवहारः !! शून्यं मन्ये जन्यं जगत्।

सुदर्शनः। देव ! आर्य्यवर्य्ये भवति धैर्य्यवैधुर्य्यमिव लक्षये क्षणेन, प्रसीदतु भवत्प्रसादैषिणं प्रति, बहव एव मद्विधा वसु-धायामस्याम्।

वृद्धः। बहव एव त्वद्विधा विलोक्यन्ते त्वयेति न चित्रं, पित्तरोग-ग्रस्तः सर्वमेव पीतं पश्यति। यातु तत्, अभिहितं त्वया तव स्त्रिया-मुखमुक्तावगुण्ठनायां जननी ते तां तिरस्करोतीति, अहमपि तदनुमन्ये, साधु समाचरति च तव प्रसूतिः, अवगुण्ठनं हि कुल-ललनानां परमो बान्धवः।

सुदर्शनः।—देव ! अनुबोधितोऽस्मि, हतकोऽहं महत् पाप-मकरवम्। किमत्र कार्य्यं तन्निर्णेतुं नालमस्मि, सदयहृदयो भवान् कर्त्तव्यमुपदिशतु।

वृद्धः।—प्रहित्य सत्वरं निलयं जननीनिदेशं परिपालयन् प्रीणीहि जननीम् सन्ततम्। शृणु :शास्त्रवचः "मातरं पितरञ्चैव साक्षात् प्रत्यक्षदेवताम्। मत्वा गृही निषेवेत सर्वधर्म्मबहिष्कृतः।" स्त्रियमपि तथा शाधि, यथासावद्यावधि श्वश्रूं शुश्रूषते, अविचारितं प्रतिपालयति च तदादेशम्।

सुदर्शनः।—अभीष्टपुष्टिसाधकश्रेष्ठं भवादिष्टमनुष्ठेयं पापि-ष्ठेनानेनावश्यम्।

युवकाः।—देव ! भवतः अघौघविध्वंसपटीयसीं प्रज्ञानैश्चो-न्मेषिणीं गिरमाकर्ण्य कृतकृतार्था वयं वर्त्तामहे। परं संशयनिरा-

साय पुनरपि कतिपयजिज्ञासा अस्मान्, मुखरयन्ति. तथापि विरमतु वाग्व्यापारस्तदा कियदपगतक्लमो भवेत्।

वृद्ध:।—युवका:! अविरलितकपोलं जल्पतोऽपि मे न ग्लानि-रजनि, मन्येऽधुना भगवता भूतभावनेन युष्मान् पवितु विनि-युक्तोऽस्मि। यत: यस्य च मे इत: प्राक् वाग्जड़ीभूता रसना मुक्त-भाषणवासना, छिन्नाण्येव शास्त्रवचनानि स्मृतिसरणिमध्यारूढ़ानि, विषयेष्वनासक्तिरनुरक्तिश्च परमानन्दधामनि भगवद्गोविन्दनामनि, तस्यैव मे साम्प्रतं बलीयसी भाषणलालसा, सरस्वती च सम्व्यक्तजड़ता स्मरणायनं प्रपन्नानि बहूनि शास्त्रप्रमाणानि। न मयैतदमानि यत् भूय ईदृशी दशाजायेत। निराबाधमभिधीयतामभिधेयमायुष्मद्भि-र्युष्माभि:।

युवका:।—भगवन्! भनितं भवता एनोव्रजं व्रजतां दु:खं छायेवानुगच्छति. यद्येवं कथन्तर्हि युरोपप्रत्यागतानाममेध्यमांसादि-कमश्नतां कलुषसब्रह्मचारिणां हिन्दुवंशसम्भूतानां सुखसंवित्ति: ?

वृद्ध:।—युवका:! यथा जलकलशे जातरन्ध्रेऽपि तदभ्यन्तरस्थो-जलौका यावत् सन्नीलं सलिलं विलसति, तथा एतेषामपि प्राक्तन-जन्मसुकृतिप्रसूतभोगविलासादिकं यावत् शुभादृष्टं दृष्टिपथ-मधितिष्ठेत्।

युवका:।—शास्त्रविरुद्धमशुद्धं कर्म्मजातमाचर्य्यापि अनार्य्यास्ते यदि नाम सुखमालभन्ते, तर्हि कर्म्माणि तथाविधानि किं दोषभाञ्जि ?

वृद्ध:।—पापधियस्ते पापानुबन्धीनि क्लेशमूलानि फलानि जन्मा-न्तरे नूनमुपभुञ्जीरन्।

युवका:।—देव! अभ्युदितभवदीयवाक्यकदम्बकाम्बरमणिना सत्सरणिप्रचारान्तराय सान्द्रमोहतमसां विनाशेन प्रशस्तपदवी विलोक्यते, अस्माभि: पूर्वं समाक्रान्त: पन्था: परिपन्थी सर्वथा खलु नि:श्रेयस:।

सुदर्शनः।—देव! पुरुषापसदः सुदर्शनोऽहं भवन्तमभिवादये, जुषमाणभवदुपदेशपीयूषेणास्मदीयविषादविषं निर्मूलकाषमकाषि। ततः प्रभृति भार्य्या मे अविचार्य्य मातुःकार्य्यमनुतिष्ठति, बहुमन्यते निदेशं, श्रद्दधाति च ननान्दुः, मातापि तां दुहितृनिर्विशेषं स्नेहयति। सुखप्रसारः संसार इति सम्प्रधार्य्यते साम्प्रतं परमसाम्प्रतं वास्तवमेतदेव।

वृद्धः।—भो युवकाः! सहसा दशान्तरमन्तर्जातमन्तकः अन्तिक इति लक्षये। सत्वरं सङ्गीयतां भगवद्गोविन्दगाथा युष्माभिरेकताानतया।

सर्व्वे गायन्ति।

लक्ष्मीकान्त प्रभो जनार्द्दन विभो वैकुण्ठ दामोदर!
राधानाथ हरे! हरेदमशिवं तापत्रयं सत्वरम्।
हृत्पद्मं तव सद्म सद्यक इदं गच्छेस्तमां माधव!
अन्तेऽनन्त! तव प्रमोदसदनं शश्वत्पदं प्रापयेः॥

इति शम्।

व्याकरणतीर्थोपनाम—
श्रीहेरम्बनाथ शर्म्म-तर्क-तीर्थस्य।

PRINTED BY GOBARDHAN PAN
AT THE GOBARDHAN PRESS,
*80/1, Muktaram Babu's Street, Calcutta.*

महाभारते वनपर्व्वणि---सावित्रुवाच "दीर्घायुरथ वाल्पायुः सगुणो निर्गुणोऽपि वा। सकृद्वृतो मया भर्त्ता न द्वितीयं वृणोम्यहम्॥ मनसा निश्चयं कृत्वा ततो वाचाभिधीयते। कर्म्मणा क्रियते पश्चात् प्रमाणं मे मनस्ततः॥" इति स्वाभिप्रायं प्रकटय्य सावित्री पतित्वेन सत्यवन्त-मेव वरित्वा तस्य दीर्घजीवनं कामयमाना वर्षमेकं कठोरं व्रतमाचर्य्य तं क्षीणायुषं चतुर्वर्षशतायुषमकरोत्? तस्मिन्नेव भारते पापमनोरथ-परिपूरणाय स्वार्थान्धतया ललना ललना सर्वस्वः स्वामी निहन्यते।

या खलु प्रत्यक्षदेवता परमाराध्यतमा स्नेहसिन्धुर्निखिलकुशल-जननी जननी त्रस्ता व्यस्ता निरस्तसमस्तक्लेशाशेशवात् क्षुत्क्षामापि सती स्वयमभुक्त्वा तनयं भोजयित्वा निद्राभिभूता च स्वयमशयित्वाऽपत्यं निद्राप्य प्रतिपालयति, यस्याश्च मातुरनुकम्पया मनुजा विश्वस्य सुषमां समालोक्य परां शान्तिं विन्दन्ति, विद्वत्प्रस-राग्रेसराणामप्यग्रेसरन्ति, त्रितलसौधावलीमध्यास्य त्रिदिववाससुख-मुपभुञ्जते, मणिमालया कुवेरायन्ते च, हा हन्त!! स्वार्थान्धः पशु-प्रतिमो मानवस्तामशेषविभूतिप्रसूतिं वाचा व्यवहारेण च मर्म्मणि विदारयति। तेनैवाघातेन च तस्य पापीयसो नरकद्वारमुद्घाटित-कवाटं तिष्ठति, इहापि प्रतिपदं विपदमापद्यते। किं बहुना अस-दर्थस्वार्थसार्थं साधयितुं कश्चन नेत्रहीनो भवति, कश्चन खञ्जः सञ्जा-यते, कश्चन बधिरो भवति, कश्चन बाहुविहीनः सम्पद्यते। नास्ति तादृशी काचिद् विपद् या न स्वार्थान्धजनं समाश्रयति। यो हि देही भवभवनिवारणकारणं चतुवर्गफललाभहेतुश्च स्वार्थान्धस्तमसार-संसारकलुषविलासलालसासाधनाय नियोज्य क्षयं नयति। न च तादृशो जनः किमपि सूक्ष्मतत्त्वं समोक्षितुं प्रभवति। आयतिश्च तस्य विपज्जालसङ्कुला लीलायते। वसुधातलेऽस्मिन् स एव स्वार्थः प्रकृतः स्वार्थो, येन परमार्थः समासाद्यते, तल्लाभायैव यतितव्यं मानवनिवहैः।

अत्रैकमुपाख्यानमाख्यायते प्रसङ्गतः, आसीद्दक्षिणापथे वीरवती नाम काचिन्महती राजधानी, तत्र स अशेषगुणनिवहनिकषाय-माणः पाकशासन इव अनेकभूपालमौलिलाञ्छितलोहितचरणो देववल्लभो नाम राजा रराज। अनपत्यतया भृशं निर्विण्णः सन् स सस्त्रीको नियमिताहारोऽवरुद्धप्रतीहारः कठोरं नियम-मास्थाय एकतानतया प्रजापतिमस्तावीत् तस्यैकान्तिकान्तः-करणनिरोधाराधनेन तं प्रति प्रमोदिता वेधसा समवादि—भो देव-वल्लभ! त्वं देववल्लभ एव, सुतरां वरं गृहाण—"तव सकलकुशला-त्मिका प्रभावती नाम तनया ऐषम एव जनिष्यत" इति। इयमेव च भविष्यति त्वद्वंशावतंससन्तानवितानहेतुः, अस्याः परिणयार्थं न त्वया पात्रमन्वेष्टव्यं, मया समादिष्टः कश्चिन्नृपपुत्रस्त्वदीयनक्रचक्र-समाकुलजलाशयान्तर्वर्त्ति स्फाटिकस्तम्भं तुभ्यमर्पयिष्यति, तस्मै एव प्रभावती सम्प्रदेया इत्यवधार्य्यताम्। व्याहृत्यैवमन्तर्हिते अब्जयोनौ नृपतिर्देववल्लभः परमानन्दसन्दोहप्रवाहप्लावितमानसः पूर्ववत् राजकार्य्यपर्य्यालोचनाय मनः समादधौ।

अथ यथाकालं राज्ञी सुरसुन्दरी राजीवलोचनामुत्तप्तसुवर्णवर्णां चक्राजकमलोपलक्षितकोमलकरां मूर्त्तिमतीं श्रियमिव प्रभावती-मसूत। सा सितपक्षीयकलानिधिरिव प्रतिदिनमभिवर्द्धते स्म। कालक्रमेण प्रोद्भिन्नयौवनायाः कन्दर्पदर्पदर्पितायास्तस्या अपतितया मुखमालिन्यमजनिष्ट। राज्ञी सुरसुन्दरी प्राणप्रियतमां प्रभावतीं संजातामर्षां परिदृश्य परं विषादमाससाद, समादिदेश च प्रभावती-सहचरीं मणिमालिनीं विषादकारणमनुसन्धातुम्। मणिमालिन्या-प्येकदा प्रभावत्यङ्गमालिङ्ग्य कथाप्रसङ्गतः परिणयगर्भं प्रबन्धमुक्ता-वल्यां सा दीर्घं निश्वस्य यौवनलक्ष्मलक्षितायाः अबलायाः परिणय-स्यौचित्यं व्यजिज्ञपत्। मणिमालिनी तस्या इङ्गितं विज्ञाय राज्ञीं विज्ञापयामास। ततश्च अन्तःपुरप्रकोष्ठं प्रविष्टे नृपतौ नारीजनो-

प्रतसहजसरलतया विस्मृतपूर्व्ववृत्तान्ता सुरसुन्दरी राजानं प्राह— "देव! किमियं प्रभावती न पात्रसात् कर्त्तव्या? दूरं यातु तावत् पात्रसमर्पणं, प्रसङ्गतोऽपि परिणयनाम नोल्लिखति। राज्ञा भणितं, अहो मुग्धे! न ते स्मृतिपथे पान्थायते प्रजापतिभारती? राज्ञी "अनुबोधितास्मी"त्यभिधाय नृपाय तदाचचक्षे। कक्षान्तरान्निशम्य तन्मणिमालिनी प्रभावतीं व्याहृत्य अत्यतोषयत्। अथैकदा मणिमालिनी प्रसङ्गतः स्वभ्रातरं शुद्धबोधमप्येतदवोचत्। तदुपश्रुत्य स्वार्थान्धेन शुद्धबोधेन सिद्धान्तितं—"अहं वेधसा समादिष्टो नवे"ति कथं राज्ञा ज्ञास्यते, नक्रचक्रसमाक्रान्तजलाशयात् कमलासन-समादिष्टो राजपुत्रः स्फटिकस्तम्भमुत्थापयितुं शक्नुयात् चेत् अहं न कथं शक्नुयां? ततः "शुभस्य शीघ्र"मिति नीतिमाश्रित्य परेद्यवि किङ्करचोरितं राजपरिच्छदं परिदधानः जलाशयतीरमुपेत्य यावज्जलाशये न्यमज्जत्, तावदेवासौ चरणे नक्रेणाक्रान्तो"हा हतोऽस्मीति" उच्चैरुदचरत्। निशम्य तद्विपन्ननिनादं तत्र राजदूताः समवायन्, विलोक्य च तन्तथाविधं समुज्जीवयितुं राजदूता लौहनिगडमेकं न्यक्षिपन्। ततश्च तदाश्रितो राजदूतैर्बलात्तटाभिमुखमाकृष्यमाणः स क्षपणः नक्रेण क्रकचायमानया दशनधारया छिन्नगुल्फदेशस्तटमटितः, पृष्टश्च राजपुरुषैः "कथमत्रावगाहितं भवतेति।" शुद्धबोधः प्राह. समादिष्टोऽहं परमेष्ठिब्रह्मणा जलाशयादस्मात् स्फटिकस्तम्भमुत्थापयितुम्। समाकर्ण्य तद्वृत्तान्तं महीपतिः "न हीश्वरव्याहृतयः कदाचित् पुष्णन्ति लोके विपरीतमर्थं" सुतरां कथं विधिना समादिष्टस्य मदिष्टस्य नक्राक्रमणसम्भावना। अत्र किमपि निगूढ़कारणेन भवितव्यं इत्यादिकं पर्य्यालोचयंस्तत्र गत्वा अचकथत्, कस्त्वं धूर्त्त? सत्वरमाख्याहि प्रकृततत्त्वं, नोचेदधुनैव शमनसदनं प्रेषयामि। शुद्धबोधः क्षतदुःखेन राजभयेन च किंकर्त्तव्यविमूढ़ः प्रकृततत्त्वमवोचत्, तदुपश्रुत्य राज्ञा भणितं रे धूर्त्त! कैतवं वितन्य

मम कन्या मुद्बोढुमीहसे ? दिष्ट्या दास्याः पुत्र ! अद्य जीवितो त्वया । ततो राजा दूतं समादिशत् "स्थापयैनं यावज्जीवं दिनकर-करनिकररहिते कारागारे"। तदानीं शुद्धबोधेन सिद्धान्तितं "स्वार्थान्धो विपदां पद"मिति शम् ॥

श्रीहरिरञ्जनाथ शर्म्म-तर्कतीर्थस्य ।

---

## हिन्दुधर्म्मसंशोधनम् ।

ज्यैष्ठतोऽनुवृत्तम् ।

किमपरम् आनन्दस्वाम्यन्तनामानः आत्मनः साधुत्वमाचक्षाणाः सन्न्यासवेशधारिणः "हर हर" "बोम् बोम्" "जय शिव शङ्कर" इत्यादिशब्दमुच्चैरुच्चारयन्तोऽपि प्रायः प्रतिशतं नवनवतिसंख्यका एव लम्पटा मादकमत्ताः परधनोपजीविनः। तेषु कः साधुरिति परिज्ञानं प्राकृतैर्नितान्तं एव अशक्यम्। दुर्ज्जनानां प्राबल्यं यदिदानीं अतिमात्रमेव वृद्धिमाप्तं तत् सर्व एव जानन्ति। ए० कलिलक्षणानि सर्व्वाण्येव प्रकाशितानीति अस्माभिर्मन्यते। तत्र पुनः केचन पाषण्डाः आर्य्याचारविरहिताः विलासलालसा-ग्रस्ता नीचप्रवृत्त्यधीनचेतसः बहुविधमकार्य्यमाचरन्ति, अथच लोकनिन्दाभयात् स्वसम्मानरक्षार्थे तान्येव पापकर्म्माणि शास्त्रानु-मोदितानि इति जनसंसदि प्रमाणयितुमीहमानाः शास्त्रवच-नानि यथा तथा व्याचक्षाणाः असाधु अपि साधुत्वेन पापमपि पुण्यत्वेन अधर्म्ममपि धर्म्मत्वेन व्युत्पादयन्तः मोहयन्ति प्राकृ-तानां शास्त्रज्ञानविरहितानां मनांसि, समाजञ्चोच्छृङ्खलं कर्त्तु-मीहन्ते। एते पुनः समाजसंशोधकनामानः पाषण्डा जात्या गुणेन विद्याभिः अनधिकारिणोऽपि वागिन्द्रियबलेन केवलेन अधिकारं प्रमाणयन्ति। हा हन्त ! एतैः पाषण्डैरेवं मुह्यमानाः सरल-प्रकृतयः अनेक एव प्राकृताः अकार्य्यमपि कार्य्यं धर्म्ममिति मन्वानाः

प्रथमवर्षं { सुदुर्लभाः सर्व्वमनोरमा गिरः } नवम संख्या

---

## भाषावतरणिका।

वर्षप्रवणया कतिचित्प्रहर्षयन् कांश्चिदपश्चित्पुरुषान् विमर्शयन्।
समाययौ वृद्धिं वयस स्तथात्ययं वैशाखमासोऽयमुपागतः क्षितौ॥

---

### देशीय पण्डितसमाजस्यावस्था --।

पूर्व्वतोऽनुवृत्ता

---

सम्प्रति पण्डितान् प्रति विशुद्धचेतसामपि नास्ति तादृशी श्रद्धा। पूर्व्वं निमन्त्रणलब्धधनैश्छात्रपालनस्य प्रभूत मानुकूल्यमभूत्, अधुना तन्निमन्त्रणमपि यत्नपादायकमिव मत्वा प्रायो न कुर्व्वन्ति धनिनः। मध्यवित्तास्तु शिक्षिताः प्रायश एव राजकार्य्याद्यनुरोधेन मत्रान्यत्र वा विदेश एव वसन्ति। तत्रैव च विवाहादिकार्य्यजात मार्य्यजनोचितं सम्पादयन्त्य स्तेभ्यः स्वदेशीयाना मानुकूल्यं स्वल्पमेव भवेत्। स्वालये बालकानां स्थानाहारादिकं व्यवस्थाप्य ये महानुभवा अध्यापनानुकूल्यं विहितवन्त स्तेषामपि विदेशवासितया तदानुकूल्य मिदानीं दुर्लभं, सुतरां

केनावलम्बनेन निरालम्बाः पण्डिताः पूर्व्ववदध्यापनं सम्पादयेयुः? तथापि ते यथासाध्य मध्यापनाध्यवसायमादर्शयितु मद्यापि नोनिश्चेष्टा स्तिष्ठन्ति, समतिकष्टेन नाना दिग्देशमटाव्यमाना असहनीयनिकार वाक्यादिभिरपि अविकुर्व्वाणा यत्किमपि धनं संगृहीतुमर्हन्ति, स्वीय पुत्र कलत्रादीनां सुख स्वाच्छन्द्य मनभिनन्द्यापि तेनैव कष्टार्ज्जित धनेन विदेशिनो विद्यार्थिनः संपोष्याकातरं विद्यां वितरन्ति। स्त्रीणां वसन भूषणासादनाय स्वीय भोगविलासाय वा तेन व्यतिव्यस्ताः केवलं कथञ्चिदुदरान्न;संस्थानव्यवस्थया समुपस्थित विद्यार्थि संस्थापन समर्थतायामेव कृतार्थता मात्मनो मन्यन्ते। साक्षादन्नपूर्णास्वरूपिणा स्तद्गृहिण्योपि पतिदेवता स्तन्मतमनुवर्त्तमाना न्यक्कृतालङ्कारझङ्कारा दासादि साहाय्यमन्तरेण यादृशासहनीयं क्लेशं स्वीकृत्य स्वहस्त नि...णान्नपानादिना स्वपुत्र निर्विशेषेणान्यदेशीयानपि विद्यार्थिनः पोषयन्ति तादृशोदारादर्शः किमद्यापि कस्मिन्नपि सम्प्रदाये सन्दृश्यते? तासां तन्निस्वार्थस्नेहभावमालोक्य साक्षाद्देवताबुद्धिरेव तत्र जायते। किन्तु हन्त तद्देवभावसंरक्षणाय ये विशुद्ध चेतसो विद्वांसः अद्यापि यतन्ते क्रमश एव ते दुःस्था ऋणग्रस्ता विपर्य्यस्ता एव भवन्ति। अहोस्वार्थत्यागः! सहधर्मिण्याः सामान्यं यत्किञ्चन भूषणादिकं तत्स्थापनेन ऋणं कृत्वापि छात्रं संरक्षितु मया साक्षात्प्रत्यक्षीकृतं। गन्धे मादृशा भोग विलास लालसा वशीकृतमानसाः मूर्खानदूरदर्शिन एव तानादृश पुरुषान् सम्भावयन्ति। किन्तु तेषां तादृशः संस्कृतानुरागः यत्सर्व्वस्व त्यागेनापि ते धर्म्मकर्म्मैकनिदानं संस्कृतशास्त्र चर्चास्तित्वमास्थापयितुं समतिश्रमार्ज्जितां विद्याञ्च दानेन वर्द्धयितु मभिलषन्ति। हन्त तादृश महापुरुषाणां संख्या दिनेदिन एव यथा क्षीयते ततश्चिन्तनीयं ब्राह्मणपण्डितसमाजस्यास्तित्वं देशे स्थास्यति वा नवेति। यदि तदा-

दृष्टे तमात्रस्याप्ति वा न स्यात् नानाविनाना देशस्थितैर्विदुषां मनसि वर्त्तते तदाधुनापि नैवौषधलिनभ्यमिति सन्निर्ब्बन्धमनुरुधास्ते, यतस्तदादर्शस्यापि निर्माणे निपुणतमैः शिल्पिभिरपि कल्पनया सर्व्वदेशविलक्षणं तद्विचित्र चित्र मङ्कयितुं नैव शक्यते ॥

## शक्ति निरासः।

पाश्चात्यविद्या विद्योतित मतिभि राधुनिकैर्देशीय निकम्मनैः कैश्चित् प्रभाकरादिभिश्चाभ्युपगम्यते जगति पदार्थजातेषु कापि शक्तिः। यत्-सत्त्वासत्त्वाभ्यामुत्पत्तिं विलयं तत्तत्कार्य्यकरणे पटुता मपटुतां वा लभन्ते पदार्थाः। अनयैवतामङ्गीकृत्य जगत् कर्त्तृत्वेनेश्वरस्य घटादि कर्त्तृत्वेन कुलालादीनां वा कारणत्व कल्पनायाममपि नोत् प्रेक्षामहे। तत्तत् पदार्थजातेषु तत्तत् कार्य्यानुकूलां कामपिशक्ति मुपकल्प्य तादृश विजातीयशक्तिमत्त्वेनैव कारणत्वाभ्युपगमा न्नैवदण्डचक्रादिभेदेन नाना कारणताकल्पनप्रयासः। एवञ्च दण्डादि रन्यथासिद्धत्वादेव न कारणता कोटिमधिरोढुमिष्टे। एवं घटादिकं प्रति तत्तत्कार्य्यानुकूलशक्ति मत्त्वेन कारणत्वे लाघवं, दण्डादि नानाकारणत्वकल्पनेच गौरवं प्रति-बन्धक समवधानकालीन कारणेषु शक्त्यभावादेव कार्य्यानुत्पादसम्भवे प्रतिबन्धकाभावस्य कारणत्वकल्पनेच महालाघवं। नच दण्डचक्रा-दिषु सर्व्वेषां शक्तिमभ्युपगम्य तद्वत्त्वेन कारणत्वे केवलदण्डादपि घटोत्पत्ति रशेषकारणतावच्छेदकावच्छिन्नस्य सत्त्वादिति वाच्यं शक्तेः कारण समुदाय पर्य्याप्तत्वोपगमात् केवलदण्डसत्त्वदशायां कारणतावच्छे दकावच्छिन्नस्याभावात् एवं शक्तिमन्तरेण कारकमेव न भवेत्। यथा घटं निर्म्मितसुना दण्डादि रुपादीयते न मुद्गरादिः, शक्त्यनभ्युप

गमेतु द्रव्यस्वरूपाविशेषात् सर्व्वस्मादपि द्रव्यात् सर्व्वदा सर्व्वकार्य्योत्पत्ति-प्रसङ्गः । एवं मन्त्रप्रति वद्धायां विप्रदहनयोः शक्तौ कार्य्यौदासीन्यं दृश्यते तत्र का वाधो युक्तिः ? नहि मन्त्रेण स्वरूप सहकारिसान्निध्यं तत्प्रत्यभिज्ञायमानत्वात् । तस्मात् शक्तिःप्रतिवधात्मद्रव्यकामिना ऽभ्युपेतव्यं । किञ्च सेवनाज्जनादिसाम्येऽपि फलवैचित्र्य-दर्शनादतीन्द्रियं किमप्य-दृष्टादिक मभ्युपगत मायुष्मतेति शक्तिरप्यतीन्द्रिया किमितिनोररी-क्रियते । अत्रोच्यते — नाहं वयमपूर्व्वं, कश्चित्कार्य्यकारणभाव मुत्थापयितुं पारयामः पदार्थानां, किन्तु यथाप्रत्यक्षमनुसरन्तोव्यवहरामः नाप्याकमिच्छया शुष्कान्नः पिपासामापः शीतं वा शमयन्ति । एवमन्वय व्यतिरेकाभ्यां शक्तिग्राहक शिरोमणिना व्यवहारेण वा घटादिकंप्रति दण्डादेरेव कारणत्वमवगच्छन्त स्तदर्थिनस्तानेव दण्डादीन् समाददते नतु मुद्गरादीन् । यदपि विप्रदहनयोर्मन्त्रप्रयोगात् कार्य्यौदासीन्यं तदपि न शक्तिप्रतिवन्ध निवन्धनं अपितु कारणान्तरानु प्रवेश हेतुकं । मन्त्रेण तत्र प्रविशता किंकृतं ? न किमपि, सामग्र्यान्तरन्तु सम्पादितं । कथचित् कार्य्यस्य काचिदेव सामग्री हेतुः । तथापि स्वरूपं तदवस्थमितिचेत् हन्ताभणितमपि विषं कथं न हन्यात् स्वरूप कारणतायाः सत्वात्, अत्र संयोगादिक मपेक्षणीय मितिचेत् मन्त्राभावोऽप्यपेक्षणीय इति न किं वचनीयं ? शक्तिपक्षेऽपि मन्त्रस्य कस्तावद्व्यापारः ? तेनहि शक्तेर्नाशः प्रतिवन्धोवा क्रियते मन्त्रापगमे पुनस्तत्कार्य्यदर्शनान्नाद्यः, द्वितीयश्चेदत्र शक्तेरिव स्वरूपस्यैव प्रतिवन्धः कुतो न ? स्वरूपस्य किं जातं कार्य्यौदासीन्यमिति चेत्तदितरत्रापि समानं । स्वरूपमस्त्येव दृश्यमानत्वादिति चेत् हन्त शक्तिरपि अस्त्येव पुनः कार्य्यदर्शनेनानुमीयमानत्वात् । किञ्च — शक्तिरत्रापि गम्यमाना पदार्थस्वरूपवन्नित्या कार्य्यावा ? नित्यत्वे सर्व्वदा कार्य्योत्-

पत्तिप्रसङ्गः सहकार्य्यपेक्षायामस्तु स्वरूपशक्तिरेव सास्तु किं दण्डयाशक्त्या ? कार्य्यत्वे तु शक्तेः पदार्थस्वरूपमात्रं कार्य्यत्वं सहकार्य्यादिसामग्री-कार्य्यत्वं वा ? आद्ये पुनरपि सर्व्वदा सर्व्वकार्य्योत्पादप्रसङ्गः, द्वितीय पक्षे तयैव कार्य्यमस्तु किं मध्यगतया वर्त्तिन्या शक्त्या ? अथ शक्तात् कारकात् कार्य्यं न निष्पद्यत इति चेत् शक्तेरपि कार्य्यत्वे तदुत्पत्तावप्येवं शक्त्यन्तरकल्पनादनवस्था । ननु दृष्टोदये किमदृष्टं कल्प्यते ननु दृष्टविघाताय, नहि वरविघाताय कन्योद्वाहः प्रवर्त्तते, शक्त्यन्तर-कल्पनायाः शक्तिश्रेणीनिर्माणं तावत् दोषत्वात् कारकाणां कार्य्य-विघातः स्यादित्येकैवशक्तिः कल्प्यते नातोऽनवस्था, अथाप्युच्यते यद्दृष्टमन्तरेण दृष्टं न सिध्यति काममदृष्टं कल्प्यतां अन्यथा तु तदुपपत्तौ किं तदुपकल्पनेन ? अपिच व्यापारोऽप्यतीन्द्रियः शक्तिवदिष्यते भवद्भिः अन्यतरकल्पनयैव कार्य्योपपत्तेः किमुभयकल्पना गौरवेण ? शक्तमव्याप्रियमाणं न कारकं कारकमितिचेच्छन्नमिति तथा कथं जानीमः कार्य्यादर्शनादिति चेद्व्यापारादेव कार्य्यं सेत्स्यति । मुद्गरादेर्व्याप्रियमाणादपि न घटोत्पत्तिर्दृश्यत इति चेत् प्रत्यक्षस्तर्हि व्यापारो नातीन्द्रियः यतः कार्य्यदर्शनात् पूर्व्वमपि व्याप्रियमाणत्वमवगत मायुष्मता । कार्य्यानुमेयो हि व्यापारः कार्य्यं विना न ज्ञायेतैव कार्य्यन्तु तावदन्यतरस्मादपि घटमानं नोभयं कल्पयितुं प्रभवतीत्यलमन्यदन्यदेति ।

श्रीगोविन्द शास्त्री —

काव्यतीर्थ व्याकरणसाहित्यशास्त्री

वाराणसी-रणवीरपाठशालानिवासी ।

## माया ॥

द्वैपायनोऽद्वैतविधाननिष्ठ उन्मील्य प्रज्ञानयनं निरीक्ष्य
ब्रह्मेव विश्वस्थितिका मविद्ये ! निराकरोय स्त्वां पुरो चकार ॥
अवर्णरूपे ! किमु वर्णयामि त्वामद्य माये मनसाप्यगम्ये ।
विलोक्य विद्वान् जगतोऽपि तत्त्वं तवप्रभावात् पुनरेतिमोहं ॥
निःसङ्गकर्म्मा विगुणोऽपि चित्रै र्गुणैस्त्वदीयैः सततं निबद्धः ।
ईशोऽपरोक्षः कृतिमान् विभाति तदस्तु माये ! सततं नमस्ते ॥
आशाविशाला मिह भोगगेह-च्छायातपक्लिष्ट जनस्य लोके ।
क्लेशोत्तरं रूपरसादिजन्यं कामं सुखं हन्त विपश्चितोऽपि ॥
निःस्वार्थ वृत्ति र्निजशावकानां सञ्जायते सम्भरणे तिरश्चां ।
सर्व्वं तवैतद्भुवि भातिभूति स्तदस्तु माये ! सततं नमस्ते ॥
अदन्ततुण्डः सितकेशमुण्डो जरातिजीर्णश्लथलोलकपोलः ।
तथापि तृष्णाक् तवशक्ति लुब्ध स्तदस्तु माये ! सततं नमस्ते ॥
अरुन्तुदैःसन्तति शोकभारैः सद्यो विरंवा दहनस्य नीरं ।
संसेव्य मातापितरौ विशीर्णौ उद्दयच्छतः प्राणविसर्ज्जनाय ॥
शनैः शनै स्त्वद्विभवप्रसूता तृष्णा हृदाकाश तमः पयोदं ।
वात्येव दूरं व्यपनीय सर्व्वं संसारिणो लीढि पुनः करोति ॥
आशैशवं क्लेश शतं विमृद्य पुष्णाति पुत्रान् जननी प्रयत्नात् ।
एषप्रभावो नियतं तवैव तदस्तु माये ! सततं नमस्ते ॥
ब्रजन्ति वैवस्वतधाम नित्य मित्यं विलोक्यापितव प्रभावात् ।
विदन्ति शेषाःस्थिरतां स्वकीयां तदस्तुमाये ! सततंनमस्ते ॥

क्रमशः-

श्रीहेरम्बनाथ शर्म्मतर्कतीर्थस्य

# स्वर्णलता ।

कश्चिद्ब्राह्मणो नितरां दरिद्र आसीत। एकदा सः स्त्रिया भणितः "भोब्राह्मण ! त्वद्गृहमागत्य नाहं कदापि सुन्दरमलङ्कारं प्राप्तवती; वस्त्रं परिच्छिन्नवती, यथे प्सितमन्नमपि भोक्तु नास्ति। तत् त्वमद्य राज-सकाशं गत्वा धनानि याचस्व, स सर्व्वेभ्य एव अभीप्सितं ददातीति श्रूयते तुभ्यमपि अर्थान्दास्यति" इत्याकर्ण्य ब्राह्मणः राजसकाशं प्रस्थितः।

अथ राजसदनं गत्वा दौवारिकैः कथमपिमुक्तः सः राजानं प्राप्त-वान्। राजा तमवलोक्याह "भो ब्राह्मण ! किमर्थमत्रागतोऽसि ? अपि याचसेकिञ्चित् ? तेनोक्तं "अहं नितरां दरिद्रः, त्वांयाचितु मागतोऽस्मि, तद्यदि ते स्वयमुपार्ज्जितं धनं वर्त्तते, देहिमे, दारिद्र्यं नश्यतु"। तच्छ्रुत्वा राजाचिन्तितवान् "यन्ममेदं राज्यं तत्पैतृकं, अन्येभ्यश्च कियदानीतम्" इत्यालोच्याब्रवीत् "चिन्तयन्नपि नस्मरामि स्वयमुपार्ज्जितं वित्तम्, तत्सप्ताहाभ्यन्तरे भवते दास्यामि"। ब्राह्मणस्तथेतुक्त्वा वाटीं गतः।

अथ गते सप्ताहे पुनरागतो ब्राह्मणः राजानमाह भोः। दीयतां यद्यस्ति स्वोपार्ज्जितं धनम् राजा प्राह त्रिभिः दिनैर्दास्यामीति। कथं ब्राह्मणाय स्वोपार्ज्जितं धनं ददामीति चिन्तयन्राजा वेशं परिवर्त्त्य नगरं बभ्राम। ततोऽयस्कारं कञ्चिदालोक्य 'अयोघनेन तप्तलौहं ताड़यिष्यामि' इत्युक्त्वा तस्य कर्म्मकरोऽभवत्। अथ सः राजानं कोमलाङ्गं लौहताड़ने चाक्षमं दृष्ट्वा तदुपयुक्तं वेतनं पञ्चवराटिकाः दत्त्वा विससर्ज्ज, राजापि तदादाय गृहाभिमुखं चलितः।

अथ तृतीये दिवसे ब्राह्मणो यावत् समागतः तावत् तस्मै " महाशय !

गृहस्थानामिदमात्मोपार्ज्जितं धनम्" इत्युक्त्वा ता वराटिकाः समर्पितवान् ब्राह्मणोऽपि गृहीत्वा गृहं गतः ।

अथ यावदेव एतत्पञ्चवराटिका राज्ञादत्ता इत्युक्त्वा तावदेव ब्राह्मणी ताः प्रसह्य सन्निहिते आवर्ज्जना पूर्णे स्थाने प्राक्षिपत् । ब्राह्मणोऽपि 'किमिदं कृतं ' 'किमिदं कृतं ' मिति कथयन् दुःखितोऽतिष्ठत् ।

अतीते कतिपये दिवसे सोऽपश्यत् काचित् सुवर्णवर्णालता सञ्जाताम् ; प्रवाल मयानिच पत्राणि । ततो दृष्टदृष्टायामेव तस्यां मरकत मयानि पुष्पाणिसञ्जातानि । ब्राह्मणस्तु कुतइयमिति समुपजात-कुतूहलः ताएव राजसमीपलब्धावराटिकाः तस्याः कारणमवगतवान् ।

अनन्तरमतीतेषु केषुचिद्दिवसेषु रत्नमयानि फलानि तस्याजातानि, दरिद्रतया तत्फलं विक्रेतुं श्रेष्ठिजनपूर्णमापणमगच्छत् । श्रेष्ठिणः प्राहुः " महाशय ! नास्ति अस्माकं गृहेषु तावद्धनम्, यदेतन्मूल्यं समुचितं भवति, भवान् राजसमीपगत्वा विक्रीणातु" सोऽपिब्राह्मण-स्तदेवयुक्तं मन्यमानः राजसकाशं गत्वा प्राह "राजन् ! गृह्णातुभवान् मूल्यविनिमयेनेदम्" । राजापिमहामूल्यं तदवलोक्य "किमिदानीं कर्त्तव्यमि तिचिन्ताकुलः अब्रवीत" महाशय ! ममतावत् परीक्षयं परमेकं तवेदं रत्नम्, एकस्मै अर्पिते कुत्रापराभविष्यति, तत्रगृहीष्यामि

एच्छ्रुत्वा ब्राह्मणेनोक्तम् किं कथयति भोः ! शतशोरत्नानिदातु -मस्मिसमर्थः । अस्मिद्गृहे सुवर्णलता, यस्या फलानि एवं विधानि बहूनि जायन्ते ।" राजातु तामाश्चर्य्यभूतां सुवर्णलतां द्रष्टुकामः सलोकः सामात्यः सबन्धुवर्गश्च गत्वाब्राह्मण गृहे तां ददर्श, स्वोपार्ज्जितस्वार्थस्यच महिमानं बुबुधे ।

काव्यव्याकरणतीर्थ—श्रीआशुतोष भट्टाचार्य्यः

मुक्ता अविजना इहैव तान् स्वकर्त्तव्यमर्म अवधारयितुं क्षमाः सत्यं अनुसरन्तः सरणिं धर्म-सम्मताम् । धर्म्मप्रचारकेभ्य एभिरेव जनानां महानुपकारः इति मन्यामहे । धर्म्मश्रवणात् धार्म्मिकस्य व्यवहार-दर्शनं मनुष्याणां धर्मे रतिं मनुष्यतामिताञ्च कोनाम सन्देह लेशः । एताद्दृशानां दर्शनात् पुण्यं, श्रवणात् स्मरणाच्च महत् फलमिति मुहुर्भाः श्रूयते । तथाविधानां चरित माकर्णयतोऽपि यथा नाम जायते रतिस्तदाचरितेषु सद्गुणेषु, न तथा सहस्राणापि धर्म्मशास्त्राणां श्रोयानस्य, सुष्ठु खल्वाह पतञ्जलिः "वीतराग विषयं वा चित्तम्" इति योगाभ्यासो पाय प्रदर्शन प्रसङ्गे । ईश्वरचन्द्र विद्यासागरस्य तांस्तान् सद्गुणगणान् पश्यता यथा लोकास्तेषु रमन्ते, मन्ये न तथा सहस्रानपि सद्वक्तुः वादानुपशृण्वन्त इति । अतएव महतां स्मृतिरक्षा कर्त्तव्या कार्य्या इति वृद्धानामुपदेशः । ये पुन र्मन्यन्ते स्मृतिपरिरक्षादादिभिः स्मर्त्तव्य-स्यैव ज्यायान् लाभ इति ते समतोव भ्रान्ताः । नहि स्मर्त्तव्यः स्मृति परिरक्षं पश्यन् प्रीणाति क्षोणातिवा । स्मारकाणामेव स्मर्त्तव्यगुणा-वतो स्मरणेन नेतुरतिरिति युक्तमुत्पश्यामः । अनएव वयमपि अद्य महनीय चरित्रायाः तत्र भवत्याः जगत्पुर आश्रम प्रतिष्ठात्री देव्याः स्वरूपेणाभिधप्राया राजकुमारी सेनपादायाः गुणकथां स्मर्त्तुमिह उपतिष्ठामः ।

आर्य्यया यया यया आत्मीयं माहात्म्यं प्रकटीकृतं, तन्मनसोऽप्य-गोचरं । व्यवहारः क्षमादि गुणश्च अस्माभिर्लोकमध्ये गणित स्तया पुनः आत्मीयकर्म्मणा सत्यत्वेन प्रमाणीकृतः ।

गुरुभ्यो परान् प्राचीनानुपश्यत्या वयं उपन्यासविशेषं मन्यामः परन्तियं महाभागा कर्म्मणा "नैदनतोक", उपायोहि भवसिन्धूतरणस्येयः

अनेनैव रत्नेन भारतं अतुलतुङ्ग मपि पृथिव्याः शिखरमधिकरोत्” इति प्रत्यक्षतः अदर्शयत्। दृश्यतामत्र चरितमाहात्म्यं महाभागैः इयं हि सूचीभेद्य व्यान्तधारा परिपूरिते गेहे शाङ्कत वनीयं मातमात रिति सकरुणं रुदन्तं शिशुं स्वा इच्छविघात भयात् विहाय, नारीणां परम गुरुं पतिं सहायीकृत्य आचार्य्य चरणाच्चनलग्नमानसा वहिर्जगाम!! देवि! त्वमेव ननु गुरोगुरुत्वमवगतासि!! “हहा! भारत रमण्यः! उत्तिष्ठत जाग्रत धर्म्माचरणाय निद्रितं पतिं प्रबोधयत कर्त्तव्यमेतद्भवतीनां, नाशक्यम्” इतीव सा धर्म्माविश्वासिनं स्वामिनं धर्म्माय नोदयन्ती सहधर्म्मचारिणीशब्द मन्वयं कुर्व्वती कर्म्मणा आचख्यौ भारतरमणीः।

इदानीं आश्रमचतुष्टयी विश्राम्यति, धर्म्मः जनसङ्गतिं परित्यज्य अरण्यावासमुखं सञ्चिनोति, अधर्म्मः प्रतिगृहं षोड़शकलाभिः प्रवृद्धः सहर्षं विराजते, प्राचीना शिक्षा दीक्षा विलुप्तिपथमनुसृता, नवीनो व्यवहारः नवीनो भावः समुज्जृम्भते, समन्ततः दुर्भिक्ष पीड़ितानां रोग-क्लिष्टानां शोकक्षोभ क्लान्तानां जनगणानां हा हतोऽस्मीति विलापः वेदगाथाख्यान मधिकुरुते, अकाले कालकवले पतन्ति सर्व्वे जनाः यथा कालमृत्युरिवात्मानं गोपायति, सर्व्वे एव विलासवासनावशीकृत मानसाः, अदृष्टमर्थं न कोपि प्रतीयति, अभिलषिताशनं सर्गं इति अभिमतिः सर्व्वेषां, उदर्कं न कोपि चिन्तयति, राग द्वेषाणां साम्राज्यं केचित् पुन र्मूढ़मतय इन्द्रियैरासक्तयः कालमाहात्म्य मिदमिति आत्मनो दोष रहितान् प्रमाणयितु मभिनन्दन्ति,परमियं तस्मिन्नेव काले प्रचण्ड एक एवमातः; न तत्र गुणदोषौ, लोकाना मेवा परिवृत्तिः न कालनिरोधो इति संमन्य धर्म्माविर्भावाय जीवन मपि पणायमाना गुरोः श्री श्रीमत् पूर्णानन्द स्वामिनः साहाय्येन जगत्पुर ब्रह्मचर्य्या

अत्र प्रतिष्ठायां कृतसंकल्पाऽभवत्। स्मरामि सा खलु चितापतनमा-नाहूय आत्मीये अङ्के उपवेश्य च शान्तिरस-सिक्तैः रमणीयैरुपदेशै-रुपनिषदीय गाथाभिश्च तेषां चितापदहनज्वालां शमयामास। एते नाम हरिणाः सहजभीरवोऽपि निर्भयाः भक्तिमन्तः शिष्या इव तन्मुखं प्रति बद्धलक्ष्या आकर्णयामासुस्तन्मुखोच्चारितां प्रणवगीतिम्। एते ते विहङ्गमा ये तदा तस्याः पार्श्वयोः शिरसि पाणौ वा कल्पितासनाः तया प्रणवगीतिं शिक्षिताः क्रमेणास्माकमपि भोजनपात्रेषूपविश्य वीतभयाः बुभुजिरे, इदानीमपि एते स्मरन्तीव तां, येनाद्य [illegible] प्रकाशयन्तीव शोकाश्रुमोचनम्। सा रजनीषु समाहिता गुहामिमां अपुनात्, मन्ये इदानीमपि तद्गुहानिवासिनः पशवः स्मरन्ति। अमी पुनर्महीरुहाः ये तया सादरं वर्द्धिताः कुसुमं पुष्पं करे, तत्कालपरिचयादिव इदानीमपि एते तत्प्रेमाश्रुदत्सय फलानि प्रसूनानि चार्पयन्तः सोचयन्ति इव आत्मानं अधन्यतायाः। एवं यत्रैव नयने प्रहिणोमि तत्रैव सा प्रतिष्ठिता नोदयति इव [illegible] कामम्। वयं तस्याः स्मृतिं वहन्तः केवलं मन्ततः श्वसामः अहह! कठोरीभूतोऽयं दिवसः, यदद्य ईदृशं सुरत्नमपाक्रियत कथं वा राजाधिराजयोग्यं रत्नं दरिद्राणां कुटीरं शोभयेत्। अष्टौ वर्षाणि समतियन्ति, वयं पुनः अद्यापि तदेव दिनमिति स्मरामः किमेते तरवोऽपि तदेव दिनमिति मन्यन्ते? कथमन्यथा उद्ग्रीवाः प्रतीक्षन्ते इवात्मदौर्भाग्यम्!

हा! विधातः! कोऽर्हति वोद्धुं भवदीयचरित्रं, यदि तत् रत्नं पापायाः पृथिव्याः अनुपयुक्तमितिविज्ञातं तदा कथं तत् प्रदत्तं! महती खलु भवतो दत्तापहारिता!!

हा आर्य्ये ! एवं दयार्द्रचित्तापि पूर्व्वं, कथमिदानीमेव कठोरासि ! किं वा अपराद्धमस्माभिः यदेवं परित्यक्ताः ?

अयि देवि ! चराचरस्य किं जगतो जीवितविप्रकारिता ।
सहसा विहताना विहायसी गुणदिव्य समस्ती पलायिता ॥

देवि ! किं न प्रेक्षसे ते स्नेहभाजनानामवस्थाम् ।

त्वत् स्नेह वर्द्धित तरोः कृपया दशेयं
सन्दृश्यते प्रतिदिनं फलपुष्प नाशः ।
रिक्ता द्रुमाः फलयुताः रसमेक दैन्यान
नष्टाः, सुवर्द्धित लताः सुचिरं भवत्या ॥

हा निर्म्ममे ! कथमिदानीं वर्त्तसे, सर्व्वे प्राणिन एव दुर्म्मनस इति किं न पश्यसि, विहङ्गहरिणाश्च इदानीं न यथावत् कूजन्ति चरन्ति च। गावः,ये पाणितलामर्शलालसाः दृष्ट्वैव त्वां, अभिमुखं गताः ते इदानीं जीवितमात्र शेषाः । अयमत्र भवान् गुरुस्ते यः पूर्व्वं एकाग्रमानसां भवतीं उपदिशन् सुशिष्यया आचार्य्य इति प्रमोदमवाप स इदानीं कथाप्रसङ्गेन उदाहृतां भवतीं स्मरन् मुह्यति । चतुर्द्दशी चन्द्रस्येवामुष्य एका कलावशिष्यते । प्रियतमौ भ्रातरौ त्वामनुसृतौ, वयमेव ननु त्वत्पुण्यस्मृतिं मनसा वहन्तः जीवितं धारयेम । तापयति हन्त ! स्मृतिरेव नः, अहो स्मृते ! एवं त्वमपि ननु प्रतिकूलाऽसि

हाहास्मृते ! प्रतिकूल त्वरितं प्रयाहि
मास्तां मदीयहृदये भवतः प्रतिष्ठा ।
त्वं दैवदग्धहृदये जनमानसाय
स्थित श्वरः परिचितो दिवसं रमोभिः ॥

इत्थं सत्यमेव उद्बोधकमुपलभमानो जनः सर्व्वं अस्तु मन्यते। तदद्य वैशाखस्य चतुर्द्दशी दिवस इति सर्व्वमेव युग-

हा हन्त इदमभिलषितं भवतः ! अथवा कथं भवन्तमेव दूषयामि कर्मैव नो विप्रतीपं येन पाणिपतित मपि स्वर्गायसं नपरिचितम् । यथा पुण्यदर्शनामिनां यद्दृष्टवानस्मि तत् पूर्व्वपुरुष पुण्य जातैरेव । कथमन्यथा इयमस्माकं दर्शनयोग्या स्यात् । महतां स्मरणादपि पुण्यामामनन्ति महीयांसः अत एवाद्य तस्याः पुण्यस्मृतिं प्रतिजनं अर्पयितु मनीषामः । नूनमेव तस्या चरित्रस्मरणं महते फलाय भवेत् ।

आर्ये ! अयं आश्रमः भवन्माहात्म्यं स्मरन्नेव इदानी मपि आत्मानं धारयति, नेत्राभ्यामदृश्यमानापि इदानी त्वं ननु अस्माकं मानस मन्दिर मधिष्ठिता एवास्मान कर्त्तव्य कर्मणे नोदयसि इति जानीमहे । यदि भवति कदाचिदाश्रमस्य कल्याणोन्नतिः तदा वयं कृतज्ञहृदया आर्यामेव स्मरिष्यामः, यतस्त्वमेवास्य मुनीभूता जनयित्री, अस्य जीवनं आलम्बनञ्च । तत पुण्यस्मृतिमेवालम्ब्याद्यं जीवति जीविष्यतिच विलास स्वल्पस्य सुमहतापि आलोके त्वं अन्धं तमसीव स्थिता आलोकान्वेषणाय प्रवर्त्तितः, आसादितश्च त्वया पर्व्वणहिमकरकर सुभगः शान्ति वर्त्तिकः अखण्डः प्रदीपः । त्वत् स्नेहरसमेक वर्द्धिता एते ऽपि तव प्रियतमा भ्रातरः यथा तदालोकसाहाय्येन तमसःपारं यान्ति तथा साध्यस्व । भवतुच भवदीया इयं स्मृतिः त्वन्निर्वाणतत्त्वं निमः प्रवर्त्तिका अनाना मन्त्रकातङ्क वारिकाच ।

भवतु भवतु शान्तिः सर्व्वतः सम्प्रतिष्ठा
जयतु जयतु देवः शाश्वतो धर्म्मगोप्ता ।
भजयतु जन मेतत्तत्त्वमस्यादि वाक्यम
प्रति चरतु यथावत् आश्रमाणां स्थितिश्च ।। इति

प्रथमवर्षं { सुदुर्लभाः सर्व्वमनोरमा गिरः } दशमसंख्या

## मासावतरणिका ।

प्रौढप्रचण्डातपावलिभिः प्रकम्पय-निदाघतापैःपरितापयन्नपि ।
सोऽस्त्रौदिम ज्येष्ठतयातितुष्टिदो नवोढबालामनसामसंशयम् ॥

## प्रह्लादस्य न्यायवादिता

धर्म्मविचारः ।

[ महाभारतम् २ । ६८ । ६५ — ८७ ॥ ५ । ३५ । ५-३८ ] ॥

प्रह्लादो वै दैत्यानाम् इन्द्रो बभूव । तस्य विरोचनो नाम पुत्र आसीत् । अथ विरोचनः प्राह्लादिः, सुधन्वा च आङ्गिरसः एकामेव कन्यां केशिनीं चकमाते । कन्यया विरोचनसुधन्वानौ पृष्टौ युवयोः को नाम कुलगोत्रादिना ज्यायानिति । विरोचनः प्राह अहं ज्यायानिति । सुधन्वा प्राह अहं ज्यायानिति । ततस्तयोः प्राणानां देवनमासीत् पराजितेन जेतुराज्ञया मर्त्तव्यमिति ।

अथ विरोचन उवाच कामिमं प्रश्नं पृच्छाव। अहं देवेषु मनुष्येष्वपि न कस्मिंश्चित् स्थाता। सुधन्वोवाच पितरं ते गमिष्यावः सहि प्रह्लादः पुत्रस्यापि हेतोरनृतं न वदेत्।

ततस्तौ क्रुद्धौ कृतपणौ प्रह्लादम् अभिजग्मतुः। प्राहतुश्च भो राजन्! आवयोः कः ज्यायान् इति नौ विवादः। आवाम् अत्र प्राणानां विपणावहे पराजितेन जेतुराज्ञया मर्त्तव्यमिति। अधुना भवन्तम् उपास्थितौ। तदिमं प्रश्नं सम्यक् प्रब्रूहि। प्रह्लाद उवाच कथमस्मद्विधः प्रश्नं वदेत् अयम् एकतो मम एकः पुत्रः अन्यतश्च त्वं ब्राह्मणवर्य्यः साक्षात् उपस्थितः। तदन्यं गच्छतम्। सुधन्वोवाच औरसाय पुत्राय गां श्रियं च धनं दद्यात्। किन्तु तेन सह अपरस्य विवादे सदा तथ्यमेव वाच्यम्।

अथ प्रह्लादः क्षणं विमृश्य पुत्रं विरोचनम् उवाच —

मत्तः श्रेयानङ्गिरा वै सुधन्वा त्वद् विरोचन।
माताऽस्य श्रेयसी मातुस्तव तत् त्वं पराजितः॥
विरोचन सुधन्वायं प्राणानाम् ईश्वरस्तव।

सुधन्वोवाच। भो धार्म्मिकसत्तम तव वचसा प्रीतोऽस्मि। त्वं पुत्रस्नेहं परित्यज्य धर्म्मे व्यवस्थितः अतोऽनुजानामि एष ते पुत्रः शतं-समा जीवत्विति।

तात्पर्य्यम्। सभां वा न प्रवेष्टव्यं वक्तव्यं वा समञ्जसम्।
अब्रुवन् विब्रुवन् वापि नरो भवति किल्बिषी॥
योहि प्रश्नं न विब्रूयात् धर्म्मदर्शी सभां गतः।
अनृते या फलावाप्तिस्तस्याः सोऽर्द्धं समश्नुते॥

यः पुनर्वितथं ब्रूयात् धर्म्मदर्शी सभागतः ।
अनृतस्य फलं तस्मं स प्राप्नोतीति निश्चयः ॥

इति वन्द्यघटीय श्रीवनमालि वेदान्ततीर्थ वेदान्तरत्नस्य कृतिः प्रसादन्यायं वादिता नाम आलानां न्यायानु वर्त्तितायै कल्पतामिति शम् ॥

## कथं स्वल्पायुषो वयम् ?

पुराजीवति पितरि ब्राह्मणपुत्रः मृत इति आकस्मिकं अकालमरणं मन्यमानैः प्रजागणैः राज्ञे रामचन्द्राय अभियुक्तं । विस्मय स्तिमिताश्च तत्रभवन्तो रामचन्द्रादयः तत्क्षणात् प्रतिचक्रुः । नासीत् पञ्चाशद्वर्षात् पूर्व्वमीदृशः अकाल मृत्युरिति वृद्धैः घुष्यते । किम्पुनः अहमेव मे प्रपितामहों द्वादशाधिक शतवर्षाणि जीवन्तीमद्राक्षम् । किन्तु इदानीं अप्राप्तवयस्का बालका अजातदन्तादृगमा एव परलोकं गच्छन्तः दारयन्ति पित्रोः मर्म्माणि । प्रतिदिनमेव मृतानां बालयुवकानां श्मशानोत्थधूमराजिभिः वर्द्धते कलेवरं दिवस्य बलाहकस्य । किमत्र कारणं ? कथं प्राचीना दीर्घायुषो बभूवुः कथं वा इदानीन्तनाः स्वल्पायुषः ? अधुना कदाचित् कश्चिदेव षष्टितमं वर्षं जीवति । संयमाभाव एव कारणमिति मे प्रतिभाति । प्राचीनाः संयमिनः अप्राकृतकृतितो विरता बभूवुः । वयं चित्तसंयम विरहिताः, तत्र पुनःप्राकृतनियमलङ्घिनः, सुतरां वयं तेभ्यः स्वल्पायुषः । कृत्रिमं व्यवहरामः सहजतोऽपि कृत्रिमं नः प्रियतरम्, अस्माकं इन्द्रिय वृत्तयः अस्वाभाविक नियमैः वृत्तिं गताः सुतरां आयुषोऽपि अस्वाभाविकता युज्यते एव । अथावधानम्यम्, नराणां विंशत्यधिक शतवर्षपरमायुष्टं

प्राचीनऋषिवर्य्याणामभिमतम्, वाल्यं आषोड़शवर्षं ततोयौवनं पञ्चाशद्वर्षं पर्य्यन्तम्, ततः आसप्ततिवर्षं प्रौढ़िः ततस्तु वार्द्धक्यं तत् कल्पितम्। यदि एतत् कल्पनानुसारतः वाल्यादिदशाचतुष्टयं अनुभवन्ति मानवा स्तदा नाम अकालमृत्युरपि असम्भव इति आर्य्याः प्रतिजानते। किन्तु यदि कल्पनाक्रम ममु विलङ्घ्य कदाचित् सहकारि कारणान्तर समवधानतो द्वादशवर्षे एव भवेद् यौवनोपगमः नूनं तदा कायसम्पद्विनाशिनी वेगशीक्रममापादयित्री तत्रभवती जरापि तथा सत्वरमेव कारणान्तरानवधानेऽपि वरिष्यति तं वराकं, मृत्युश्च जरानुगामीति किमत्रानुक्रोश कारणं प्राचीनेषु आर्य्येषु।

स्फुटमिदमाचक्ष्महे — अस्माकं दशा विपर्य्यासः द्विधा भवति, स्वाभाविकः, कृत्रिमश्च। स्वभावतः यत् प्रकृतिवशात् प्रवर्त्तते, यथा समुद्रवेला। कृत्रिमश्च दशावस्था स्वयं साधनपरिश्रमेन उत्पादितः। तत्र स्वाभाविक कर्म्मणः फलमपि स्वभावनियतं। अतोऽनिच स्वभाव नियमं कृत्रिमकर्म्मजं फलम्। नजातु स्वभावनियतं भवितु मर्हति अस्वाभाविककृतिजंफलं। कलौ नराणां यत् परमायु निर्द्दिष्टं शास्त्रेषु दृश्यते तत्स्वभाव नियमानविलङ्घ्यव्यवहरते एव नतु यथेच्छाचारिणे। सुतरां यदि सङ्गदोषवशात् शिक्षादोषेण वा कस्यचित् द्वादशेवर्षे उदेति यौवनं तन्नि न प्राकृतमिति स्थायित्वमपि अप्राकृतमेव भवेत्। सम्भवेदिदं यत् सः अनतिक्रान्तपञ्चविंशवर्ष एव जरसा आक्रमेत। एतत्तु विज्ञानविज्ञान्तसम्मतं यत् यावता कालेन पुष्टिमेति जीवदेहः तत्पञ्चगुणो वर्षाणि जीवति स इति। मानवदेहः पञ्चविंशतिवर्षैः सम्पूर्णोत्कर्षभाक् भवति सुतरां तत् पञ्चगुणितं पञ्चविंशतिपर शतवर्षायुर्भवेदिति। किन्तु इदानीं अस्मद्दुर्भाग्यात् प्रायशः अकाले एव सर्व्वे एवप्रायः शरीर सौष्ठववन्तो भवन्ति।

अल्पीयसि एव वयसि बाला युवतांगताः देहपूरणं अप्राकृत आनयन्ति । तत्रापि अस्माकमिदानीं सप्तमवर्ष-वयस्काः तन्नूनवयस्का वा बाला विहाय बाल्यभावं संसार परिच्छेदनाय यतन्ते, विस्मयन्त्या अवहेलयन्ति पित्रोः वचांसि । देशस्य पुनर्दुरवस्था, यया तादृशं प्रेक्ष्य सुतादिं लोकानन्द बालोऽयं बुद्धिमान् भविता उत्तरश्च महत्तिरः प्रवीवाश्च इति । उत्साहयन्ति च तं किन्तु ते नहि जानन्ति यत् तृणालम्बी वह्निर्ज्वलति त्वरितं शाम्यति तथाद्दति । यदस्तु क्रमेणायं बालः अतिक्रान्त दशवर्षः आत्मानं अतीतबाल्यसीमं प्राप्तयौवनं कर्म्मठं-मन्यते । युवम्मन्यश्च अयंनु प्रिय स्यात् बालसुलभ सारल्यं बाल्यभावः बाल्यक्रीडादिर्व्वा । बाल्यं दुःखाय केवलं, " न तेन वृद्धोभवति येनास्य पलितंशिरः" सुतरां कोऽयं वृद्धोनाम यस्यवचनं पालनीयं । ममैव वृद्धत्वं जरसा विना इत्येवं मन्यमानस्यास्य युवत्वे जायते मतिः । क्रमशः युवकोचित भावा अस्यहृदये स्वराज्यं वितन्वन्ति, कुसङ्गात् व्यसनी चासौ आत्मानंसकुलं पातयत्यकूले एनोनीरनिधौ सत्वरम् । भारतस्य यादृशो दुर्दशा ! पित्रादयः सुतमेतादृशमालोक्य नन्दन्ति, सुतरां निवारणं दूरेऽस्तु तदा बाल्यविवाहेन तस्य पातमार्गं नितरां निष्कण्टकयन्ति । अथ बहुलमेतत् यत् सप्तदशवर्ष देशीयएवायंभवेत् शिल्पव्यपदेश भाक् । तदा अनभ्यस्त विद्यत्वात् अकर्म्मणः जीविका मपि अर्ज्जयितुमयं कांनाम सरणि मनुसरेत्, सुतरां जीविकार्ज्जन-चिन्तया एव पञ्चविंशतिवर्षं मनुप्राप्तः आनयेत् केशधवलिमानम् परिवार भरणोपायं चिन्तयन्नेवायं सत्वरमेव म्रियेत । तदपत्यानि पितृदोषात् शिक्षादौस्थ्यात् वा तथैव स्वकुले पुत्राद्यं जनयेयुः पातयेयुश्च भविष्यत् कुलानि । सुतरां सिद्धमेतत् यत् अस यम एव स्वल्पायुष्टे कारणं नापरं किमपि । विशेषतो बाल्यविवाहः बाले। युवकोचित-

चिन्ताश्च अस्मद्देशीयान् स्वल्पायुषः कुर्व्वन्ति। अत यमश्चैव नामान्तर-भाजौ एतौ इति सुगममेव। यत्रपुनर्देशे महत्तमा विद्वांसो विज्ञान-विदः योद्वारः वीरा राजनीतिनिपुणाश्च जायन्ते तत्र वाल्यविवाहो-नाम्नापि न चरितु प्रभवति इति सर्व्व एव जानन्ति, न तत्र वालःयुवको-चिते कर्म्मणि नियुज्यते,नवा स पठितुमपि अर्हति युवकानांपाठयोग्य पुस्तकम्। यदास्मद्देशे पितृनाम योग्या भवन्ति जनाः तावति वयसि तद्देशीयानां वाल्यविलासोऽपि न परिक्षीयते। दशवर्षवयस्का एव अस्मद्देशीय वालकाः सत्वर चलितु मपि लज्जन्ते, अतश्चोचितश्च तत्रन्यस्त, क्वपुनः वाल्यक्रीड़ा? अहोकाल विजृम्भितम्!! वालकस्य तरुणोचित पाठ्यपुस्तकपाठः अल्पायुष्टे एकतम कारण, तेनहि अकाले जायते प्रवीणता, कोमलावुद्धिवृत्तिः सहसैव अधिक व्ययेन चिराय क्षीयते। दृश्यते अष्टादशवर्षतो न्यूनवयस्का वहव एव एम्‌ए (M.A.) इत्युपाधि विमण्डिताः। किन्तु न कस्य विद्यते शिरोरुजा चक्षुःपीड़ा वा? पुरा अस्मद्देशे बभूवुः अनेके एव विद्वांसः किन्तु न कोपि तेषु परिदवे आयस उपनेत्र व्यवजहार च जवाकुसुम, नचते यावज्जीव रोगदुर्भर देहभार दुःखेन ऊहुः। अनेक एव तेषां दिगन्त विश्रान्तयशस आसन् न तेषु कोपि द्वादशवर्षे पदमर्पयन्त यौवने चतुर्व्विंशती चवार्द्धक्ये। सुतरां प्रवीण पाठ्य अल्पीयसि वयसि अधिगत न जनयति सम्पूर्णतोज्ञान प्रत्युत वितरति व्याधि जीवन-काताय! प्रासादस्य भित्तिस्थलमिव वाल्य जीवनस्य रक्षामूल अथच अस्माभिः तदेवायत्नतः कुमसर्गतो वा न परिणत गृह्यते। नजानी-महे 'यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेदिति'। इदमेव भारतीयानां दुर्भाग्यस्य कारणम्। प्रतीमः अतीतेषु कियत्कालेषु मातृगर्भतो जनिष्यन्ते सन्ततयः पाश्चात्यकलाशाखापाण्यो जातास्यकेशाः अहीना-

-यसनैषाः संसारभारवहनक्षमा युवानः। अहो किदृशत्वमत्र मिच्छामो वयं अथच मृत्युरेव प्रत्यासीदति सत्वर मिति उद्वेगकरं नः। संयमोऽस्माभिः संयम्य दुरीक्रियते फलं पुनरस्मभ्यं अदूरतएव मृत्युः संयच्छति। यावत् संयमशिक्षा न प्रवर्त्तते तावत् प्रवन्धशतैः सभाह्वानादिभिश्च यमो न नियन्तुं शक्येत। अल्पायुष्ट्वे कारणं यत् तस्यैव किंवेल सेवा क्रियते अथच अल्पायुष्टं मानाम भवतु न इति याचामः। कः पुनरीदृशः याचज्ञापूरकोऽस्तु यः ईदृशीं प्रार्थनां पूरयेत्, यश्च अग्निना देहं योजयतामपि दाहं निवारयेत्। वयं स्वल्पायुष इत्यत्र कः पर्य्यनुयोग मर्हति ? वर्णितं कलिरहस्ये

भविता योषितां सूतिः पञ्चषट् सप्तवार्षिकी।
नवाष्टदशवर्षाणां पुरुषाणां तथा कलौ॥
पलितोद्भवश्चभविता तदा द्वादश वार्षिकः।
नातिजीवति वै कश्चित् कलौ वर्षाणि विंशतिं॥ इति

श्रीसुरेन्द्र कुमार काव्यसाङ्ख्यतीर्थस्य

## हेमप्रभा।

---

वैशाख मासस्य प्रथमदिवसे नववर्षंहर्षेण वीतविमर्शाः केचन गायन्ति केचन नृत्यन्ति केचन क्रीड़न्ति केचन हसन्ति, वर्षीयस्तु विनाश समयं प्रतिक्षणं प्रतीक्षमाणा अपि कथञ्चिन्मोदमालभन्ते। राज नगरस्थ राजभवन मतुच्छित ध्वजराजि राजितं नवपलाशविलासित तोरणकं मणिमुक्ता समुज्ज्वलरथ्यासम्भ नीरजीकृतरथ्याभाग भुज्यतां दीयता मित्यादि कौतुककोलाहलेन न्यक्कृतसमुच्चरत्तूर्य्यनिनाद,

नववय इति सर्वं सूचयचत् आसित। किन्तु हेमप्रभा उन्मुक्त गवाक्षकक्षे पर्य्यङ्कशयाना उन्मना: सहचरीभिः सह किमपि सम्बद्ध प्रलपति क्वचित् मृणालिनीं स्वमनोरथं विज्ञापयति, नोनृत्ये नापि कृत्ये मनोनिविशते तदीयं, परन्तु निरन्तर मन्तरं किमपि कमनीय कामयते ।

"नीलनीरद कान्ति कुन्तला कन्दर्पदर्पदर्पिता षोड़शवर्षदेशीया मणिप्रभा हेमप्रभा क्षीणप्रभा जायते, किमप्यसम्बद्धं प्रलपती"ति वार्त्ता जनपरम्परया नृपतेः शान्तशीलस्य श्रुतिपथमुपागता। प्रभावती राज्ञी वैराग्य प्रणोदिता विषयं विषमिव मन्यमाना क्षीणदेहा विभवव्यावृत्तमानसा भवदुःखक्षयदक्षं रुद्राक्षकक्ष विरूपाक्ष माराध्यति नान्यत् किमप्यवगतवती। राजा हेमप्रभाया दुःखवेदिनीं वाणीं निशम्य तत्क्षणमेव चिन्तोद्वेलितचित्तः सामात्यः अन्तःपुरम् प्रविवेश, प्रेयसी च राज्ञीं प्रभावतीं तथाविधामवलोक्य प्राह — अहोव्रत!! अधुनापि तप स्तप्यसे, त्वमेव महती तपस्विनी कन्या मात्मसन्ततिः सत्यपि कन्या दुःखेन न क्लिश्यसे छिन्नं तेमायाशृङ्खल बन्धनं एहि सत्वरं मेहि।

कन्यासमीपं मुपसृत्य सामात्यः अचकथत् — मातः! कथं वीतविलास लालसा म्लानमुखी अलसेव कालं कालयसि? तद्ब्रूहि सत्वरम्तवविमर्शो मां विमर्शयत्यतितराम्।

(क्रमशः)

श्रीहेरम्बनाथ शर्म्म तर्कतीर्थस्य।

# आर्य्यप्रभा।

चतुर्थ वर्ष। } सुदुर्लभाः सर्व्वमनोरमा गिरः। } १म संख्या।

## वर्षावतरणिका।

परमकारुणिकस्य भगवतो निष्कारणकारुण्येन विगतमत्सराणां दयावतां ग्राहकाणां निरवग्रहानुग्रहेण च "आर्य्यप्रभायाः" चतुर्थो वर्षः प्रारभ्यते। हर्षप्रदेऽस्मिन् वर्षप्रारम्भे सर्व्व एवानुग्राहका गुणग्राहिणो ग्राहका विस्मृत्य बाल्यकालसुलभचापल्यजातं सर्व्वमस्या अपराधजातं सहर्षमवलोकयन्तु स्वसुतामिव सायहमुपस्थितां बालिकामार्य्यप्रभाम्। ज्ञातव्यमेतदितःपूर्व्वमस्या भाद्रमासत एव वर्षप्रारम्भ आसीत्, किन्तु तदानीमेतद्देशीयचतुष्पाठीनां प्रायः सर्व्वासामेवावकाशतश्छात्राणामनुपस्थितेः शारदीयपूजासान्निध्यतश्च मूल्यादानादेरसुविधया विगतवर्षीयविज्ञापनानुसारेण चैतं यावदष्टमासेनैव तृतीयवर्षं समाप्य वैशाखत एवातःपरमस्या वर्षप्रवृत्तिर्निर्धार्य्यत इति।

अस्मिंश्च वर्षे कार्त्तिकमासाभ्यन्तर एव सम्पूर्णं "पिङ्गलसूत्रं" वृत्तिवङ्गानुवादाभ्यां सहितं प्रकाश्येत इति प्रागेव प्रचारितम्। आशास्यते च तदवश्यमेव सम्पत्स्यत इति, दरिद्रछात्रैरपि पाठ्यरूपेण निर्द्दिष्टतयावश्यकेय पिङ्गलसूत्रेण समन्विता चतुर्थवर्षीयार्य्यप्रभा सहर्षं ग्रहीतव्या। वयोवृद्ध्याकृतिवृद्धिरपि प्रभायाः सम्भाव्येत, यदि ग्राहकेभ्यः समुचितोत्साहो लभ्येत।

पाश्चात्यभावपरिप्लावितेऽस्मिन् देशे अस्मदीयसाहाय्यप्रत्याशेदानीं सुदूरपराहतैवेति केवलं कतिपयसंस्कृतानुरागिग्राहकाणामाग्रह

एवार्य्यप्रभायाः सम्बलः। सुतरां हे संस्कृतपाठार्थिनश्छात्रवर्गाः! अन्येऽपि च संस्कृतानुरागिणो महात्मानः! युष्माभिरपि कृपावलोकने नोदासीतव्यम्। संस्कृतानुरागिणः पण्डिता यद्यनुकम्पया स्व-स्व-विद्यालये एकैकामार्य्यप्रभां ग्राहयन्ति, तदास्याः समतीवोपकारः साधितो भविष्यतीति विदित्वा त एव प्रमाणम्। अनुग्राहका ग्राहकाश्च यद्येकैकमपि ग्राहकमस्याः संगृह्णीयुस्तदा तेषां तदुपकारश्चिर-स्मरणीय इति शम्।

---

## नेत्राष्टकम्।

रेरे नेत्र! चरित्रमत्र परमं चित्रं तवालक्ष्यते
पात्रापात्रविचारणाविरहिताऽकल्पना समालोकने।
अत्रामुत्र पवित्रवाञ्छितफलप्राप्तेःपदं तत्पदं
त्यक्त्वा पुत्रकलत्रबान्धवमुखालोकेऽति यत्नो यतः॥ १॥
कान्ताया मुखकान्तिलोकनविधौ यस्यास्तवैकान्ततः
शान्तिर्भ्रान्त! विचिन्त्य पश्य सुचिरं स्वान्तेऽन्यदृष्टान्ततः।
अन्ते यत्र कृतान्तकिङ्करगणा भीतिप्रदास्त्वत्पुर
आयास्यन्ति तदा तव प्रियतमा सा किं विधातुं क्षमा?॥२॥
येषामास्यमपास्य दृश्यसुषमां सर्व्वां समुत्प्रेक्षिनीं
दृष्ट्वा कष्टशतं विनष्टमचिरात् कर्त्तुं त्वया शक्यते।
येषां बाल्यजनोचितं विलसितं द्रष्टुं समुत्कण्ठसे
तेऽप्यन्ते वत किं कृतान्तनिलये कुर्व्वन्ति पुत्रादयः॥ ३॥
रम्ये हर्म्यतले विलासबहुले रथ्यैकपार्श्वस्थिते
वेश्या हास्यमुखी प्रदर्श्य सुषमां यत्रोपविश्येक्षते।
तत्रैवान्यमगण्यपण्यनिचयं हित्वाऽग्रतो व्यग्रता
धिक् चापल्यमतिद्रुताभिगमने यानेऽपि लज्ज्यं न ते॥ ४॥

छाञ्छा यत् रमणीशरीरमयि ते द्रष्टुं सदैकाग्रता
तस्योत्पत्तिकथां तथोपकरणं किं न क्षणं चिन्त्यताम् ?
तज्ज्ञात्वापि तथारुचिर्यदि भवेत् सम्यक् प्रतीमस्तदा
दुर्लोभोपहतात्मनां न च घृणा लज्जापि वा वर्त्तते ॥ ५ ॥
मिथ्यावस्तुशते वतैवमयथाऽऽकृष्याऽऽकृतज्ञ ! स्वतो
लुब्धं मामपि तत्र तत्र विषये नेतुं सदा चेष्टसे ।
किन्ते तत्र फलं चरित्रमथवा दुश्चेष्टमानस्य यत्
सर्व्वेषां निजतुल्यतानिपतने यत्नः सदाऽहैतुकः ॥ ६ ॥
चाञ्चल्यं परिमुञ्च सत्वरमहो कालेऽनुकूले स्थिते
वाञ्छा चेत् शतलाञ्छनापहरणे नोचेद्द्वयोऽतिक्रमे ।
शक्तिस्ते चपला यदातिविकला सम्पत्स्यते तत्क्षणे
सन् पन्थाः परिलभ्यते न कथमप्युन्मार्गगामिंस्त्वया ॥ ७ ॥
तस्मान्नेत्र ! चरित्रशोधनविधौ यत्नः समाधीयताम्
लोभश्चेत् परिलोकनेऽतिविमलं दिव्यं पदं दृश्यताम् ।
दृष्टिर्बाह्यमुखी विवर्त्त्य सहसैवान्तर्मुखी साध्यताम्
नैवं त्वां परिलोभ्य नेतुमपथे शक्नोति कश्चित् क्वचित् ॥ ८ ॥

---

## धर्म्म-जीवनम् ।

किन्तावद्धर्म्मजीवनमिति जिज्ञासायां धर्म्मो जीवनञ्च निर्णेयं, तत्र च विशिष्टबुद्धेर्व्विशेषणज्ञानापेक्षतया धर्म्म एव प्रथमतो वक्तव्यः, कोऽसौ धर्म्म इति जिज्ञासायाञ्च—धर्म्मो दृश्यः अदृश्यो वा ? जन्य आहोस्विन्नित्यः ? जन्यत्वेऽपि च स्वभावत उत्पद्यते, उत नियमाचारादिभिः साध्यते, इत्येवं विधा अवान्तरजिज्ञासाः स्वत एवावतरन्ति । धर्म्मे च निर्णीते अवान्तरजिज्ञासानामासां स्वत एव निवारणं भवेत् । प्रथमतोऽहमचिन्तयम्, लौकिकसद्व्यवहार एव धर्म्मः,

एवञ्च ये ईश्वरमुपासते, व्रतादिकमाचरन्ति, नैमित्तिकोपवासादिकं कुर्व्वन्ति, तीर्थादिकं पर्य्यटन्ति, यथाविधि त्रिसन्ध्यमुपासते च सन्ध्यां त एव धार्म्मिकाः। ये वा यथायथसम्पादितस्नानाहाराः परदुःखकातरा दरिद्राणामुपकुर्व्वन्ति, कुर्व्वन्ति च दयां भूतानां, पठन्ति पाठयन्ति वा वेदादिधर्म्मशास्त्राणि त एव धार्म्मिका इति। क्रमशश्च किञ्चित् शास्त्रादिकमधीत्यास्यैवानुकूलमवलोकितं "धर्म्माधर्म्मावदृष्टं स्याद्धर्म्मः स्वर्गादिकारणं। गङ्गास्नानादियागादिव्यापारः स तु कीर्त्तित" इति वैशेषिकादिमतसिद्धं प्रमाणं, सूत्रञ्च "चोदनलक्षणोऽर्थो धर्म्म" इति जैमिनीयम्। अधुना पुनरवगम्यते, पूर्व्वोक्तानां धर्म्माणां स्वर्गादिजनकत्वेऽपि साक्षान्मोक्षसाधनत्वाभावान्न मुख्यधर्म्मत्वं, मुख्यधर्म्मस्तु श्रवणमननचित्तशुद्ध्यादिसम्पाद्यं तत्त्वज्ञानमेव, येन मोक्षसाधनं भवेत्। एवमपि पूर्व्वोक्तानां धर्म्माणां नाधिगन्तव्यमिति तु नाशङ्कनीयं, तेषामपि चित्तशुद्ध्यादिनिदानतया चित्तशुद्ध्यादिकं यावदवश्यमनुष्ठेयत्वात्। वस्तुतस्तु साक्षात् परम्परया वा मोक्षकारणमेव धर्म्मः, एवञ्च पूर्व्वोक्तानां सर्व्वेषामेव धर्म्मत्वमायातम्। जीवनञ्च आत्मैव, जीवनशब्दवाच्यस्यास्मच्छब्दवाच्यस्य च न पदार्थान्तरत्वं, मम जीवनमित्यादिव्यवहारस्तु राहोःशिरः इत्यादिवद्भेदविवक्षया। एवञ्च पूर्व्वोक्तधर्म्मानुष्ठानेन तदालोचनेन च यज्जीवनं परिचाल्यते तदेव धर्म्मजीवनम्। एतद्धर्म्मजीवनत्वलाभार्थञ्च सर्व्वैरेव यतितव्यम्। दृश्यमानमिदं वस्तुजातं सर्व्वमेव नश्वरं, सर्व्वमेव स्वप्नावलोकितगन्धर्व्वनगरवन्मिथ्याभूतं, तस्मात् केनापि विवेकवता एतदसारसंसारभोगविलासलालसावशीभूतचेतसा नैव भवितव्यम्। परित्यज्य च नश्वरवासना-मीश्वरसाधन एव मनो निवेशयितव्यम्। येन च कर्म्मणा भगवतः प्रीतिरुत्पद्यते, भवति च शर्म्मलाभः तदेवानन्यमनसा साधयितव्यम्। संसारस्य च बहुविघ्नसङ्कुलतया तत्र स्थित्वेश्वराराधनादिकं प्रायो न घटत इति मुमुक्षुभिर्व्विजनारण्य-

समाश्रयेणैव सद्गुरूपदेशानुसारेण श्रवणमननिदिध्यासनादिभिः सर्व्वाराध्यमाराध्यं ब्रह्म ; येनासाध्यसाधनमनायासेनैव सम्पद्यते। तत्त्वज्ञानमेव मोक्षस्यैकमात्रं कारणं, तदाविर्भावमृते कथमपि पुनर्भववारणं न सम्भवेत्। तस्मात् सर्व्वस्यैव वासनाराक्षसीं निरस्य तत्त्वज्ञानार्थं पूर्व्वोक्तधर्म्माचरणादिकमवश्यमेवाङ्गीकर्त्तव्यं सद्भिरिति। त्रयोदशवर्षदेशीयाहं बालिका धर्म्मविषये किमुपदिशामि, किं वाहमवगच्छामि, तथापि यत्किञ्चिदध्ययनेन यदधिगतं एतावता च कालेन गुरुमुखाद्-यदाकर्णितं तदेवावलम्ब्य यथामति किञ्चिदुपवर्णितं। अत्र प्रमादश्चेदनुकम्पया क्षन्तव्य इति सविनयनिवेदनम् ॥

श्रीयोगेश्वरी-व्याकरणतीर्थाया,-
जगत्पुराश्रम-समाश्रितायाः।

---

## प्रतिभा।

दुर्गादुर्गेऽति स्मरन्नेकदा प्रत्यूषसि तिष्ठति किञ्चित्तमसि सदानन्दः सानन्दं मन्दं मन्दमाजगाम मन्दाकिनीतीरम्। आगत्य च सर्व्वकिल्विषविनाशनं तत्सलिलं सलीलं निमज्जन् हस्तसंलग्नमपि तिमिरावृततया सम्यगनभिव्यक्तावयवं पदार्थविशेषमवलोकयामास। अवलोक्य च किमिदमिति ज्ञातुं समुपजातकुतूहलो विशेषतो निरूपयन् मानवदेह इत्यवधार्य्य स्नातुमागतानार्य्यवंशावतंसानन्यान् समाजुहाव द्रष्टुम्। तेऽपि तदाह्वानसमाकृष्टाः समागत्य क्रमश एव पादान् विस्तारयति भगवति सवितरि तं रमणीयं रमणीदेहमवधारयामासुः। बहुपरीक्षया तमक्षतमपरित्यक्तजीवितञ्च मत्वा कतिपये समवेतास्तीरमुत्तोल्य यथोचितं तत्शुश्रूषणमारेभिरे, तस्य च कान्तिमालोकयतां विह्वलानि सर्व्वेषामेव मनांसि। अाः कथमे-

तादृशस्याकृतिविशेषस्य परिणतिरेतावती जातेति ज्ञातं समुपजातोत्कण्ठाः सर्व्व एव तदुपकण्ठं सोत्कण्ठमास्थितास्तदीयचैतन्योदयं प्रतीक्षाञ्चक्रिरे। किन्तु बहुप्रक्रियया कथञ्चित् सञ्चलितेऽपि श्वासानिले सम्यक् चैतन्यं न समजनि। परन्तु तेनैव श्वासानिलसञ्चलनेन जीवनप्रत्याशया तं रमणीयं रमणीदेहं बहुयत्नेन सदानन्दनिलयं निन्युः। सदानन्दोऽपि परिष्कृते गृहे समवस्थाप्य ये यथा प्रतीकारोपायं कथयन्ति, तथैव स्वापत्यनिर्व्विशेषं तत्परिचर्य्यामारेभे।

सम्प्रति सदयहृदयान् पाठकमहोदयान् सदानन्दस्य कथञ्चित् परिचयं वच्मि,—सदानन्दः किञ्चिदधिकपञ्चाशद्वर्षवयाः परमधर्म्मपरायणो ब्राह्मणः, आसीच्च तस्य मुक्तकेशीनाम धर्म्मपत्नी, साप्यतिक्रान्तचत्वारिंशद्वर्षा हर्षनिर्भरमानसा भर्त्तृमतानुवर्त्तिनी तदादिष्टकर्म्मानुष्ठानपरा सदा समतिष्ठत। तयोश्च संसारे एकमात्रः पुत्रः, कन्या चैका समजनि, यथासमय एव सदानन्दः परमरूपलावण्यसम्पन्नां सरलां नामातिसरलां तां कन्यां बहुव्ययेन सत्पात्रसात् कृतवान्। किन्तु दुर्भाग्यतो बाल्य एव सा सञ्जातवैधव्यदोषा तद्गृह एव स्थानमलभत। पुत्रस्य तु नाम विजयः, स च पित्रा बहुप्रयत्नेनाध्यापितोऽपि पराजयमध्ययनात् लेभे। केवलं व्यसनाशनयोरेव तस्य विजयनाम सार्थक्यं समजायत। अशनस्य कथञ्चित् समयातिपाते एव स पापिष्ठो ज्येष्ठां भगिनीं मातरञ्च रुष्टवचसा भर्त्सयामास। सरला तु संसारस्यैकमात्रावलम्बनीभूततया समतियत्नेन प्रतिपालितस्य तस्य कनिष्ठस्य मनस्तुष्टिं विधातुं यथेष्टमचेष्टत, मातापि यथासम्भवं तन्मतमन्ववर्त्तत। किन्तु सदानन्दो निरानन्दः कदाचिदपि तं नन्दनं नाभिनन्दितवान्। सदानन्दस्य भवने नार्थस्याभाव आसीत्, पैतृकविभवेनैव तस्य संसारयात्रा निर्व्बाधं समपद्यत। स्वयमपि पण्डितस्तन्निबन्धनमपि तस्य किञ्चिदर्थोर्ज्जनं जातम्। तदानीं ब्राह्मणपण्डितसमाजस्य नैतादृशी दुर्द्दशा सम-

जायत। केवलं पञ्जिकासाहाय्येनैव तदा न धर्म्मकृत्यं सम्पादितमभूत्, तदानीन्तनैरार्य्यसन्तानैः पण्डितमतमनादाय न किमपि कार्य्यं सम्पादितं, नित्यनैमित्तिककाम्यकर्म्मादिकमपि तैर्न परिहृतं, सुतरां केवलं पाण्डित्यलब्धधनेनापि तात्कालिकपण्डितानां संसारः समचलत्, सदानन्दस्य तु पैतृकसम्पत्तिशालितया तत्र निर्भरो नासीदिति पण्डितसमाजेषु स धनवानेवागण्यत। किन्तु कन्याया वैधव्यदशाग्रस्ततया एकमात्रपुत्रस्य मूर्खतया च संसारे तस्य विद्वेष इवासीत्। तत्फलतश्च स पैतृकं भूसम्पदादिकं सर्व्वं सावासगृहञ्च विक्रीय यथार्हमर्घ्यमादाय पुत्रकलत्रकन्याभिः सार्द्धं सकलमलप्रध्वंसिन्याः स्वर्धुन्यास्तीरे त्रिवेण्यामागतवान्। आगत्य च तत्रैव पवित्रे क्षेत्रे भवनमेकं निर्म्माय वसतिञ्चक्रे। विक्रयलब्धधनानि च राजकोषे संस्थाप्य निर्द्दिष्टतत्कुसीदेनैव सच्छन्दं संसारयात्रां निरवर्त्तयत्। धनागमचिन्ताविगमत्वेन संसारेऽनतिलिप्तत्वेन च धर्म्मचिन्तयैव स समधिकं समयमत्यवाहयत्, यथासम्भवं सत्कार्य्यमपि समन्वतिष्ठत्। सुतरामल्पकालेनैव स त्रिवेण्यां साधुपुरुषत्वेनागण्यत। सरला च तदानीं विंशवर्षदेशीया पित्रोर्यथोचितशुश्रूषणपुरःसरं धर्म्मभावाभिपन्नैवान्ववात्सीत्। तस्याः सद्व्यवहारेण तत्रत्याः सर्व्वं एव सन्तुष्टा आसन्। विजयस्य तु यथेष्टमनिष्टाचरणेनासन्तुष्टा अपि जनास्तत्पित्रोर्भगिन्याश्च मिष्टवचसा समाकृष्टा नातिरुष्टा अभवन्। सदवस्थतया अष्टादशवर्षीयस्य मूर्खस्यापि पुत्रस्य तस्योद्वाहार्थं घटकैर्घटाय्यमानेष्वपि सदानन्दस्य शैथिल्येन विवाहो न समजनि। सुतरां तत्त्रयातिरिक्तः कोऽपि तत्संसारे नियतं नातिष्ठत्। किन्तु यद्दिनस्य वार्त्तां कीर्त्तयामि, तत्पूर्व्वदिनत एवेन्दुप्रभा नाम्नी कापि कामिनी तत्र वसतिस्म। सा च दुःस्थभावापन्नापि लोकातिगरूपलावण्यसम्पन्ना मन्दाकिनीतीरे दर्शनमात्र एव सञ्जातसौहार्दभावया सरलया सादरं स्वगृहमानायि। आगत्य च सा

सरलया यत्नातिशयेन स्वीयगन्तव्यस्थाननिर्द्देशाभावेन च तत्-सौख्यभावेन कियद्दिनं तत्रावस्थातुमङ्गीकृतवती। सदानन्दोऽपि सरलायाश्चित्तविनोदनार्थं तत्समवयस्काया भावाभिव्यक्तपवित्र-चरितायास्तस्या निवासमनुमतवान्। विशेषतः परिचयं पृष्टा च सा साश्रुनयना "दुःखिनीं काञ्चिद्दैश्यरमणीं मामभिजानीहो"-त्येतावन्मात्रं निवेदितवती। विज्ञाः पाठकमहोदयाः! भवद्भिरपि इन्दुप्रभायाः परिचय इदानीमितावानेव ज्ञायताम्, यतो विगतचेतन-रमणीदेहस्यावस्थैव सविशेषेण इदानीमालोचनीया। सदानन्दस्य तु धर्म्मपरायणतया पाण्डित्यविभवेन च समाकृष्टास्तत्रत्या बहव एव धर्म्मपिपासवः धर्म्मोपदेशादिशुश्रूषया प्रतिदिनमेव तन्निलयमाजग्मुः तद्दिने तु विशेषतः पीड़िताया रमण्याः अवस्थां परिज्ञातुमति महती जनता तत्र समजनि। सदानन्दस्यादेशेन नैसर्गिकपरदुःखकातरादिसद्गुणसम्पन्ना सरला इन्दुप्रभा च तत्शुश्रूषणार्थं यथासाध्य-मध्यवसायमदर्शयत्। चिकित्सका यदा यत् कर्त्तुं समादिशन्, तत्-क्षणादेव ते तत् समपादयताम्। तयोः परिचर्य्यातत्परतायाः पर्य्या-लोचनया सर्व्वे एव तदानीमाश्चर्य्यान्विता बभूवुः। परे परार्थमेवं कर्त्तु-मर्हन्तीति प्रत्यक्षीकृत्य अनेके विसिस्मियुः। निर्व्विवादञ्च तयोः पर-दुःखकातरतादिकं शतमुखेन सर्व्वे प्रशशंसुः। वस्तुतः परदुःखेन येषां प्राणा न स्पृश्यन्ते, केवलं स्वीयसुखभोगलालसयैव च ये व्याकुलास्ते तिर्य्यक्जातितोऽपि निकृष्टाः, यतः सूक्ष्मानुसन्धानेन तासां तिर्य्यक्-जातीनामपि परदुःखविमोचनानुकूलता परिलक्ष्यते। तदानीं सरलाया इन्दुप्रभायाश्च एतादृशो मनस आशय आसीद्, यदेतन्नश्वर-शरीरव्ययेनापि यदीमां जीवयितुं शक्नुयां, तदप्यवश्यं कर्त्तव्यमिति।

क्रमशः।

# पिङ्गलच्छन्दःसूत्रम् ।

## हलायुधवृत्तिसहितम् ।

---

प्रथमोऽध्यायः ।

नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे ।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे ॥ १ ॥
श्रीमत्पिङ्गलनागोक्तच्छन्दःशास्त्रमहोदधेः ।
वृत्तानि मौक्तिकानीव कानिचिद्विचिनोम्यहम् ॥ २ ॥
वेदानां प्रथमाङ्गस्य कवीनां नयनस्य च ।
पिङ्गलाचार्य्यसूत्रस्य मया वृत्तिर्विधास्यते ॥ ३ ॥
क्षीराब्धेरमृतं यद्वदुद्धृतं देवदानवैः ।
छन्दोऽब्धेः पिङ्गलाचार्य्यैश्छन्दोऽमृतं तथोद्धृतम् ॥ ४ ॥
मयरसतजभनलगसम्मितं भ्रमति वाङ्मयं जगति यस्य ।
स जयति पिङ्गलनागः शिवप्रसादाद्विशुद्धमतिः ॥ ५ ॥
त्रिगुरुं विद्धि मकारं लघ्वादिसमन्वितं यकाराख्यम् ।
लघुमध्यन्तु रकारं सकारमन्तेगुरु निबद्धम् ॥ ६ ॥
लघ्वन्त्यं हि तकारं जकारमुभयोर्लघुं विजानीयात् ।
आदिगुरुञ्च भकारं नकारमिह पैङ्गले त्रिलघुम् ॥ ७ ॥
दीर्घं संयोगपरं तथा प्लुतं व्यञ्जनान्तमूष्मान्तम् ।
सानुस्वारञ्च गुरुं क्वचिदवसानेऽपि लघ्वन्त्यम् ॥ ८ ॥
आदिमध्यावसानेषु यरता यान्ति लाघवम् ।
भजसा गौरवं यान्ति मनौ तु गुरुलाघवम् ॥ ९ ॥
त्रिविरामं दशवर्णं षण्मात्रमुवाच पिङ्गलः सूत्रम् ।
छन्दोवर्गपदार्थप्रत्ययहेतोश्च शास्त्रादौ ॥ १० ॥

इह हि त्रैवर्णिकानां साङ्गस्य वेदस्य अध्ययनमाम्नायते अर्थावबोधपर्य्यन्तस्य अध्ययनविधिः। वेदाङ्गं च छन्दः। ततस्तदध्ययनं विधिबोधितत्वात् अनुष्ठेयम्। अथ अनुष्टुभा यजति बृहत्या गायति गायत्र्या स्तौति इत्येवमादिश्रवणात् अर्थान्वयायातम् अनुष्टुबादिज्ञानम्। किञ्च, छन्दसाम् अपरिज्ञानात् प्रत्युत प्रत्यवायः श्रूयते। यथा। "यो ह वा अविदितार्षेयच्छन्दोदैवतविनियोगेन ब्राह्मणेन मन्त्रेण याजयति वा अध्यापयति वा, स स्थाणुं वर्च्छति गर्त्तं वा पद्यते वा प्रमीयते पापीयान् भवति यातयामानि अस्य छन्दांसि भवन्ति" इति छन्दोगब्राह्मणम्। तस्मात् छन्दःपरिज्ञानं कर्त्तव्यम्। तदर्थमिदं शास्त्रमारभ्यते। तत्र लघुना उपायेन शास्त्रावबोधसिद्ध्यर्थं सञ्ज्ञाः परिभाषते सूत्रकारः।

धी श्री स्त्री म् ॥ १ ॥

धी श्री स्त्री इत्यनेन गुरुत्रयं सञ्ज्ञित्वेन उपलक्षयति, मकारश्च सञ्ज्ञात्वेन। ततश्च अयम् अर्थः, सर्वगुरोः त्रिकस्य मसञ्ज्ञा परिभाष्यते। ध्यादीनाम् उपादानप्रयोजनम् उपरिष्टात् वक्ष्यामः। मप्रदेशाः "विद्युन्माला मौ गौ" इत्येवमादयः ॥ १ ॥

---

১। এই সূত্র হইতে অষ্টম সূত্র পর্য্যন্ত প্রত্যেক সূত্রের প্রথম তিন তিনটি বর্ণ স্ব স্ব গুরুত্ব লঘুত্ব অনুসারে তিন তিনটি গুরু লঘুবর্ণের পরিচায়ক। যেমন এই সূত্রে ধী শ্রী স্ত্রী এই তিনটিই গুরুবর্ণ, সুতরাং ইহা তিনটি গুরুবর্ণের পরিচায়ক। এইরূপ অন্যান্য সূত্রেও বুঝিতে হইবে। এই ভাবে ধী প্রভৃতিদ্বারা বর্ণনির্দ্দেশের উদ্দেশ্য পঞ্চদশ সূত্রের বৃত্তিতে দ্রষ্টব্য। এই ছন্দঃশাস্ত্রে (ऽ) এইটি গুরুবর্ণের চিহ্ন ও (।) এইটি লঘুবর্ণের চিহ্নরূপে ব্যবহৃত হইবে। বঙ্গানুবাদেও বুঝিবার সুবিধার জন্য এই চিহ্নগুলি স্থানে স্থানে বিন্যস্ত হইবে।

(ऽऽऽ) তিনটি গুরু বর্ণকে "ম্" বলে। (অর্থাৎ এই ছন্দঃশাস্ত্রে ম্ এই বর্ণ দ্বারা তিনটি গুরুবর্ণকে বুঝিতে হইবে) "বিদ্যুন্মালা মৌ গৌ" ইত্যাদি সূত্র 'ম্' সংজ্ঞার প্রয়োজনস্থল।

वरा सा य् ॥ २ ॥

वरा सा इत्यनेन आदिलघोः त्रिकस्य यसञ्ज्ञा परिभाष्यते। यप्रदेशाः "भुजङ्गप्रयातं यः" इत्येवमादयः ॥ २ ॥

का गुहा र् ॥ ३ ॥

का गुहा इत्यनेन मध्यलघोः त्रिकस्य रसञ्ज्ञा परिभाष्यते। रप्रदेशाः "स्रग्विणी रः" इत्येवमादयः ॥ ३ ॥

वसुधा स् ॥ ४ ॥

वसुधा इत्यनेन अन्तगुरोः त्रिकस्य ससञ्ज्ञा परिभाष्यते। सप्रदेशाः "तोटकं सः" इत्येवमादयः ॥ ४ ॥

सा ते क्व त् ॥ ५ ॥

सा ते क्व इत्यनेन अन्तलघोः त्रिकस्य तकारः सञ्ज्ञात्वेन उपादीयते। तप्रदेशाः "तनुमध्या त्यौ" इत्येवमादयः ॥ ५ ॥

कदा स ज् ॥ ६ ॥

कदा स इत्यनेन मध्यगुरोः त्रिकस्य जसञ्ज्ञा परिभाष्यते। जप्रदेशाः "कुमारललिता ज्सौ ग्" इत्येवमादयः ॥ ६ ॥

---

২। (।ऽऽ) আদি লঘু (অর্থাৎ মধ্যান্তগুরু) তিনটি বর্ণকে "য্" বলে। (অর্থাৎ এই ছন্দঃশাস্ত্রে য্ এই বর্ণ দ্বারা প্রথমটি লঘু ও পরের দুইটি গুরু এই তিনটি বর্ণকে বুঝিতে হইবে) অন্যান্য সংজ্ঞায়ও এইরূপ। "ভুজঙ্গপ্রয়াতং যঃ" ইত্যাদি সূত্র 'য' সংজ্ঞার প্রয়োজনস্থল।

৩। (ऽ।ऽ) মধ্যলঘু (অর্থাৎ আদ্যন্ত গুরু) তিনটি বর্ণকে "র্" বলে। "স্রগ্বিণী র" ইত্যাদি সূত্র 'র' সংজ্ঞার প্রয়োজনস্থল।

৪। (।।ऽ) অন্তগুরু (অর্থাৎ আদি মধ্যলঘু) তিনটি বর্ণকে "স্" বলে। "তোটকং সঃ" ইত্যাদি সূত্র 'স' সংজ্ঞার প্রয়োজনস্থল।

৫। (ऽऽ।) অন্তলঘু (অর্থাৎ আদি মধ্যগুরু) তিনটি বর্ণকে "ৎ" বলে। "তনুমধ্যা ত্যৌ" ইত্যাদি সূত্র 'ত' সংজ্ঞার প্রয়োজনস্থল।

৬। (।ऽ।) মধ্য গুরু (অর্থাৎ আদ্যন্ত লঘু) তিনটি বর্ণকে "জ্" বলে। "কুমারললিতা জ্সৌ গ" ইত্যাদি সূত্র জ্ সংজ্ঞার প্রয়োজনস্থল।

## किं वद भ् ॥ ७ ॥

किं वद इत्यनेन आदिगुरोः त्रिकस्य भसञ्ज्ञा ज्ञाप्यते। भप्रदेशाः "चित्रपदा भौ गौ" इत्येवमादयः ॥ ७ ॥

## न हसन् ॥ ८ ॥

न हस इत्यनेन सर्वलघोः त्रिकस्य नसञ्ज्ञा उपदिश्यते। नप्रदेशाः "दण्डको नौ रः" इत्येवमादयः ॥ ८ ॥

## गृ ल् ॥ ९ ॥

गृग्रहणं ह्रस्वैकाक्षरोपलक्षणार्थम्। तस्य लकारसञ्ज्ञा भवति। लशब्दश्च लघुवाचकः। तेन ह्रस्वमक्षरं लघुसञ्ज्ञं भवति इत्यर्थः सम्पद्यते। लप्रदेशाः "लः समुद्रागणाः" इत्येवमादयः ॥ ९ ॥

## गन्ते ॥ १० ॥

गृग्रहणमनुवर्त्तते। गृशब्दोपलक्षितस्य ह्रस्वाक्षरस्य पादान्ते वर्त्तमानस्य गुरुसञ्ज्ञा अतिदिश्यते। ग् इति प्रथमाक्षरप्रतीकेन गुरुशब्दस्य ग्रहणम्। ननु ग्लिति समानीत्यादीनां पादान्ते वर्त्तमानस्य ह्रस्वस्य गुरुत्वमुत्सर्गसिद्धम्। तच्च लकारस्तुल्या अपवादेन बाध्यते। यथा। ग्लिति समानी, गौत्यार्य्या ल इत्यादौ सामान्यस्य विशेषेण बाधः कस्य न सम्मतः। तस्मात् अचोद्यमेतत्। केचित् इदं सूत्रं व्यवस्थितविभाषया व्याचक्षते, प्रमाण्यादीनाम् अन्ते गुरुत्वम् एव, समान্যादीनाम् अन्ते लघुत्वम् एव,

---

৭। (ऽ।।) আদিগুরু (অর্থাৎ মধ্যান্ত লঘু) তিনটি বর্ণকে "ভ" বলে। "চিত্র পদা ভৌ গৌ" ইত্যাদি সূত্র "ভ" সংজ্ঞার প্রয়োজনস্থল।

৮। (।।।) তিনটি লঘুবর্ণকে "ন্" বলে। "দণ্ডকো নৌ র" ইত্যাদি সূত্র ন সংজ্ঞার প্রয়োজনস্থল।

৯। এই সূত্রে গৃ বর্ণটি হ্রস্ব একটি বর্ণের পরিচায়ক। হ্রস্ব একটি বর্ণকে "ল্" বলে। ল শব্দের অর্থ লঘু, সুতরাং এই সূত্র দ্বারাই হ্রস্ব বর্ণের লঘুসংজ্ঞা সম্পাদিত হইল। "লঃ সমুদ্রাগণঃ" ইত্যাদি সূত্র ল সংজ্ঞার প্রয়োজনস্থল।

शेषाणामिच्छया गुरुत्वं लघुत्वं च इति। तत् अनुपपन्नम्। विकल्पस्य अप्रस्तुतत्वात् कस्य व्यवस्था इति न विद्मः। ननु केनापि उक्तं "वा पादान्ते गुरु" इति गुरुत्वम्। सत्यमुक्तम्। दुरुक्तं हि तत्। वान्ते गुरु इति प्रोक्तं यैस्तु श्वेतपटादिभिः। उत्सर्गस्यापवादेन बाधस्तैः नावधारितः॥ इति उक्तं इच्छया गुरुत्वं लघुत्वं च न उपपद्यते। कस्य इच्छया, किं शास्त्रकारस्य कवेर्वा। न तावत् आद्यः पक्षः। सूत्रेषु अदर्शनात्। नापि द्वितीयः। कवेरपि इच्छायां व्यवस्थाभावात्। कः जानाति कस्य कीदृशी इच्छा इति। अन्ये तु आहुः। ननु पादान्ते वर्त्तमानस्य ह्रस्वस्य पाणिनिना गुरुसञ्ज्ञा न कृता। तेन उक्तं "संयोगे गुरु, दीर्घञ्च" (१।४।११—१२) इति। अयं संयोगादिः न च दीर्घः। तस्मात् गन्ते इति सूत्रमयुक्तम्। अत्र उच्यते। पाणिनिना स्वशास्त्रप्रयोजनार्थं गुरुसञ्ज्ञा कृता। "गुरोश्च हलः" ( ३।३।१०३ ) इति अकारः प्रत्ययो यथा स्यात्। कुण्डा हुण्डा ईहाञ्चक्रे ऊहाञ्चक्रे इत्येवमादीनां "इजादेश्च गुरुमतोऽनृच्छः" इति ( ३।१।३६ ) सूत्रेण आम्प्रत्ययश्च। पादान्ते वर्त्तमानस्य लघोः गुरुत्वातिदेशे पाणिनेः प्रयोजनमेव नास्ति। किञ्च, अनुस्वारादिपूर्वस्य वर्णस्य वनं घटः सम्पत् इत्यादौ स्थितस्य गुरुसञ्ज्ञा पाणिनिना न कृता, किमेतावता अन्यैरपि न कर्त्तव्या। तस्मात् सूत्रमिदं "गन्ते" इति। गप्रदेशाः "गावन्त आपीडः" इत्येवमादयः॥ १०॥

## ध्रादिपरः॥ ११॥

ध्र इति व्यञ्जनसंयोगस्य उपलक्षणम्। ध्रः आदिर्येषां ते ध्रादयः। आदिपदेन विसर्जनीयानुस्वारजिह्वामूलीयोपध्मानीयानां

---

১০। পাদের অন্তস্থিত হ্রস্ব বর্ণের "গ" অর্থাৎ গুরু সংজ্ঞা অতিদিষ্ট হইল "গাবন্ত আপীড়ঃ" ইত্যাদি স্থলে "গ" সংজ্ঞার প্রয়োজন স্থল।

গ্রহণম্ । প্রাদয়ঃ পরে যস্মাৎ স প্রাদিপরঃ । ততশ্চায়ং সূত্রার্থঃ, ব্যঞ্জনসংযোগাৎ পূর্ব্বস্য হ্রস্বস্য অনুস্বারবিসর্জনীয়জিহ্বামূলীয়োপধ্মানীয়েভ্যশ্চ গুরুসঞ্জ্ঞা অতিদিশ্যতে ॥ ১১ ॥

হে ॥ ১২ ॥

গ ইতি অনুবর্ত্ততে । হে ইতি দ্বিমাত্রোপলক্ষণার্থম্ । ততশ্চায়ং সূত্রার্থঃ, দ্বিমাত্রস্য দীর্ঘস্য গকারসঞ্জ্ঞা ক্রিয়তে ॥ ১২ ॥

লৌ সঃ ॥ ১৩ ॥

স ইতি গকারস্য পরামর্শঃ । সঃ গকারঃ দ্বিমাত্রঃ দ্বৌ লঘূ কৃত্বা গণনীয়ঃ ॥ ১৩ ॥

গ্লৌ ॥ ১৪ ॥

অধিকারোঽয়ম্ আশাস্ত্রপরিসমাপ্তেঃ । যত্র বিশেষান্তরং ন শ্রূয়তে তত্র গ্লৌ ইতি উপতিষ্ঠতে । গায়ত্র্যা বসবঃ (২।২) ইত্যেবমাদিষুবৎ শ্রুতেন ব্যবহারো নাস্তি ॥ ১৪ ॥

অষ্টৌ বসব ইতি ॥ ১৫ ॥

অত্র শাস্ত্রে বসবঃ ইতি উচ্যমানে অষ্টসঙ্খ্যোপলক্ষিতাঃ গুরুলঘুরূপাঃ বর্ণাঃ গৃহ্যন্তে । লৌকিকপ্রসিদ্ধ্যুপলক্ষণার্থমিদং সূত্রম্ । তেন চতুর্ণাং সমুদ্রাঃ, পঞ্চানাম্ ইন্দ্রিয়াণি ইত্যেবমাদয়ঃ সঞ্জ্ঞাবিশেষাঃ লৌকিকেভ্যঃ প্রত্যেতব্যাঃ । ইতিকারঃ অধ্যায়সমাপ্তিসূচকঃ ॥

---

১১। সংযুক্ত ব্যঞ্জনবর্ণের পূর্ব্ব ও অনুস্বার, বিসর্গ, জিহ্বামূলীয়, উপধ্মানীয় বর্ণের পূর্ব্ব হ্রস্ব বর্ণের গুরুসংজ্ঞা অতিদিষ্ট হইল।

১২। দ্বিমাত্র দীর্ঘ বর্ণকে "গ" অর্থাৎ গুরু বলে।

১৩। সেই দ্বিমাত্র গুরুবর্ণকে দুইটি লঘুরূপে গণনা করিতে হইবে।

১৪। বিশেষ বিধি পরিত্যাগ করিয়া শাস্ত্রপরিসমাপ্তি পর্য্যন্ত গ্লৌ এইটি অধিকৃত হইবে। যেমন "আসুরী পঞ্চদশ" ২।৪। এই সূত্রে বৃত্তিকার লিখিয়াছেন যে, "তানি চ অক্ষরাণি গ্লৌ ইত্যধিকারবশাৎ গুরূণি লঘূনি চ যথাসম্ভবং দ্রষ্টব্যানি"।

इह ध्यादीनाम् उपादानप्रयोजनं वर्ण्यते। अध्ययनात् धीः भवति। यस्य धीः तस्य श्रीः, बुद्धिपूर्वकत्वात् विभूतेः। यस्य श्रीः तस्य स्त्री, अर्थमूलकत्वात् गार्हस्थ्यस्य। वरा सा इत्यनेन सर्वेषां स्त्रीसाधनोपायानां बुद्धेः उपायस्य माहात्म्यं दर्शयति। तथाचोक्तम्,

"अर्द्धाङ्गुलपरीणाहजिह्वाग्रायासभीरवः।
सर्वाङ्गीणपरिक्लेशमबुधाः कर्म कुर्वते॥"

तत्राह शिष्यः, का गुहा। गुहाशब्दः स्थानपर्य्यायः। 'का गुहा, यत्र असौ तिष्ठति। उपाध्यायः ब्रूते। 'वसुधा' पृथिव्यां, लभ्यते धीः न अत्र अतिविषादः कर्त्तव्यः। पुनरपि आह शिष्यः, सा ते क्व। 'सा' धीः, त्वया उपदिष्टा, पृथिव्यां 'क्व' स्थितेन, लभ्यते। गुरुः आह गेहे। पुनरपि आह शिष्यः, कदा सः। 'सः' गेहस्थः पुरुषः, 'कदा' कस्मिन् काले, तां श्रियं प्राप्नोति॥ अत्र उत्तरं, धादिपरः। धारणार्थावबोधपरः असौ यदा स्यात् तदा श्रियं लभते। भूयोऽपि प्रश्नः, किं वद। 'किं' कुर्वन् असौ तां श्रियं लभते तत् 'वद'। तत्रोत्तरम्, न हसन्। हासादिचापल्यमकुर्वाणः तां श्रियं लभते इत्यर्थः॥ १५॥

इति भट्टहलायुधकृतौ छन्दोवृत्तौ प्रथमोऽध्यायः॥ १॥

---

১৫। এই ছন্দঃশাস্ত্রে বসু শব্দে গুরু লঘু আটটি বর্ণকে বুঝাইবে। এই সূত্রটি লোকপ্রসিদ্ধ অন্য শব্দ গ্রহণেরও উপলক্ষক। অর্থাৎ যেমন বসু শব্দে ৮ বুঝাইবে, তেমন সমুদ্র শব্দে ৪, ইন্দ্রিয় শব্দে ৫ ইত্যাদি যে যে অর্থে যে যে শব্দ লোকপ্রসিদ্ধ আছে, এই ছন্দঃশাস্ত্রেও সেই সেই অর্থে সেই সেই শব্দের প্রয়োজন হইবে।

# द्वितीयोऽध्यायः।

| | छ० | गा० | ० | अ० | बृ० | प० | त्रि० | ज० |
|---|---|---|---|---|---|---|---|---|
| १ | आर्षी | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ |
| २ | दैवी० | १ | २ | ३ | ४ | ५ | ६ | ७ |
| ३ | आसु० | १५ | १४ | १३ | १२ | ११ | १० | ९ |
| ४ | प्राजा० | ८ | १२ | १६ | २० | २४ | २८ | ३२ |
| ५ | याजु० | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| ६ | साम्नी | १२ | १४ | १६ | १८ | २० | २२ | २४ |
| ७ | आर्ची० | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ |
| ८ | ब्राह्मी० | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ |

## छन्दः ॥ १ ॥

अधिकारोऽयम् आशास्त्रपरिसमाप्तेः। इत ऊर्द्ध्वं यत् वक्ष्यामः छन्दस्तत्र उपतिष्ठते। छन्दःशब्देन अक्षरसङ्ख्यावत् छन्दोऽत्र अभिधीयते ॥ १ ॥

## गायत्री ॥ २ ॥

अधिकारोऽयम् आद्वादशसूत्रपरिसमाप्तेः। "तान्युष्णिग्" इत्यादिसूत्रात् प्राक् यत् उच्यते छन्दः, तत् गायत्रीसञ्ज्ञं वेदितव्यम् ॥ २ ॥

---

১। ইহার পরে শাস্ত্রপরিসমাপ্তি পর্য্যন্ত "ছন্দঃ" ইহা অধিকৃত হইবে।

২। এই সূত্র হইতে দ্বাদশ সূত্র পর্য্যন্ত "গায়ত্রী" অধিকার যাইবে। (অর্থাৎ "তান্যুষ্ণিক্)" ইত্যাদি সূত্রের পূর্ব্ব পর্য্যন্ত বক্ষ্যমাণ ছন্দের সংজ্ঞা হইবে গায়ত্রী।

## दैव्येकम् ॥ ३ ॥

एकाक्षरं छन्दः दैवीगायत्री इति सञ्ज्ञायते। तत्रायं प्रदर्शनोपायः। चतुरङ्गक्रीड़ायामिव चतुःषष्टिकोष्ठान् लिखित्वा, प्रथमपङ्क्तौ आर्षीनाम लिखित्वा द्वितीयादिकोष्ठेषु अङ्कानामुपरि गायत्र्यादिसप्तच्छन्दसां नामानि विन्यसेत्। ततो द्वितीयायां पङ्क्तौ प्रथमे कोष्ठे दैवीशब्दं विन्यसेत्। सञ्ज्ञाज्ञापनार्थं द्वितीये एकसङ्ख्याकमङ्कम् ॥ ३ ॥

## आसुरी पञ्चदश ॥ ४ ॥

आसुरी गायत्री पञ्चदशाक्षरा। तानि च अक्षराणि "ग्लौ" (१।१४) इति अधिकारात् गुरूणि लघूनि च यथासम्भवं द्रष्टव्यानि। तत्र तृतीयस्यां पङ्क्तौ प्रथमे कोष्ठे आसुरीशब्दं व्यवस्थाप्य द्वितीये पञ्चदशसङ्ख्याङ्कं विन्यसेत् ॥ ४ ॥

## प्राजापत्याऽष्टौ ॥ ५ ॥

प्राजापत्या गायत्री अष्टाक्षरा भवति। यत्र क्वचिद् वेदे अष्टाक्षरं

---

৩। একাক্ষর ছন্দের নাম দৈবীগায়ত্রী। গায়ত্রী উষ্ণিক্ প্রভৃতি সপ্তবিধ ছন্দের প্রত্যেকটিই আর্ষী, দৈবী, আসুরী, প্রাজাপত্য, যাজুষী, সাম্নী, আর্চ্চী, ব্রাহ্মী-ভেদে ৮ প্রকার, কোনটি কত অক্ষরে কোন প্রকারের অন্তর্গত হইবে, তাহা বিশদরূপে বুঝিবার জন্য উপরের মণ্ডলটি প্রদত্ত হইয়াছে। উহা আঁকিবার প্রণালী বৃত্তিকার ক্রমশঃ দেখাইতেছেন, যথা—চতুরঙ্গ-ক্রীড়ার ন্যায় অষ্টপংক্তিতে ৬৪ চৌষট্টিটী ঘর দিয়া একটী মণ্ডল আঁকিবে। পরে তাহার প্রথম পংক্তির প্রথম ঘরে "আর্ষী"নাম লিখিয়া দ্বিতীয়াদি ঘরের উপরিভাগে যথাক্রমে গায়ত্রী, উষ্ণিক্, অনুষ্টুপ্, বৃহতী, পংক্তি, ত্রিষ্টুপ্ ও জগতী ছন্দের নাম লিখিবে। পরে দ্বিতীয় পংক্তির প্রথম ঘরে "দৈবী" শব্দটী লিখিয়া সংজ্ঞাজ্ঞাপনের জন্য দ্বিতীয় ঘরে ১ অঙ্ক বসাইবে।

৪। পঞ্চদশাক্ষর ছন্দের নাম আসুরী গায়ত্রী। পূর্ব্বোক্ত মণ্ডলের তৃতীয় পংক্তির প্রথম ঘরে "আসুরী" শব্দ লিখিয়া দ্বিতীয় ঘরে ১৫ অঙ্ক বসাইবে।

छन्दः सा प्राजापत्या गायत्रीति ज्ञेयम्। तत्र चतुर्थ्यां पङ्क्तौ प्रथमे कोष्ठे प्राजापत्याशब्दं लिखित्वा द्वितीये अष्टसङ्ख्याङ्कं लिखेत्॥ ५॥

## यजुषां षट्॥ ६॥

यजुषां गायत्री षडक्षरा भवति। यत्र क्वचित् वेदे षडक्षरं छन्दः तत् याजुषी गायत्री सञ्ज्ञायते। तत्र पञ्चम्यां पङ्क्तौ प्रथमे कोष्ठे याजुषीशब्दं व्यवस्थाप्य द्वितीये षट्सङ्ख्याङ्कं लिखेत्॥ ६॥

## साम्नां द्विः॥ ७॥

षड़िति अनुवर्त्तते। द्विरिति क्रियाभ्यावृत्तिदर्शनात् करोतिः अध्याक्रियते। तेन द्विगुणिता षट्सङ्ख्या साम्नां गायत्री भवति। यत्र क्वचित् वेदे द्वादशाक्षरं छन्दः, तत् साम्नां गायत्री इति सञ्ज्ञायते। तत्र षष्ठ्यां पङ्क्तौ प्रथमे कोष्ठे सामशब्दं लिखित्वा द्वितीये द्वादशसङ्ख्याङ्कं लिखेत्॥ ७॥

## ऋचां त्रिः॥ ८॥

षड़ित्यनुवर्त्तते। अत्रापि पूर्ववत् क्रियाभ्यावृत्तिः, तेन त्रिगुणिता षट्सङ्ख्या ऋचां गायत्री भवति। यत्र क्वचित् वेदे अष्टादशाक्षरं छन्दः, सा ऋचां गायत्री सञ्ज्ञायते। तत्र सप्तम्यां

---

৫। অষ্টাক্ষর ছন্দের নাম প্রাজাপত্যা গায়ত্রী। সেই মণ্ডলের চতুর্থ পংক্তির প্রথম ঘরে "প্রাজাপত্যা" শব্দ লিখিয়া দ্বিতীয় ঘরে ৮ অঙ্ক বসাইবে।

৬। বেদোক্ত ষড়ক্ষর ছন্দের নাম যাজুষী গায়ত্রী। সেই মণ্ডলের পঞ্চম পংক্তির প্রথম ঘরে "যাজুষী" শব্দ লিখিয়া দ্বিতীয় ঘরে ৬ অঙ্ক বসাইবে।

[illegible] নাম সাম্নী গায়ত্রী। সেই মণ্ডলের ষষ্ঠ

[illegible]

পঙ্‌ক্তৌ প্রথমে কোষ্ঠে ঋক্‌শব্দং ব্যবস্থাপ্য দ্বিতীয়ে অষ্টাদশসংখ্যাঙ্কং লিখেৎ ॥ ৮ ॥

## দ্বৌ দ্বৌ সাম্নাং বর্দ্ধেত ॥ ৯ ॥

গায়ত্রীত্যনুবর্ত্ততে। সাম্নাং পঙ্‌ক্তৌ গায়ত্র্যা দ্বৌ দ্বৌ সংখ্যাঙ্কৌ গৃহীত্বা পূর্ব্বাৎ পূর্ব্বাৎ বর্দ্ধেত, যাবৎ অষ্টমং কোষ্ঠং প্রাপ্নোতি। তত্র সাম্নাং পঙ্‌ক্তৌ তৃতীয়াদিষু কোষ্ঠেষু ক্রমেণ বর্দ্ধিতান্যক্ষরাণি অঙ্কেন বিন্যসেৎ ॥ ৯ ॥

## ত্রীংস্ত্রীন্ঋচাম্ ॥ ১০ ॥

গায়ত্রীত্যনুবর্ত্ততে। ঋচাং গায়ত্র্যা ত্রীন্ ত্রীন্ সংখ্যাঙ্কান্ গৃহীত্বা পূর্ব্ববৎ বর্দ্ধেত। অত্রাপি ঋচাং পঙ্‌ক্তৌ তৃতীয়াদিষু কোষ্ঠেষু ত্রিসংখ্যাঙ্কং ক্রমেণ বর্দ্ধমঙ্কং স্থাপয়েৎ ॥ ১০ ॥

## চতুরশ্চতুরঃ প্রাজাপত্যায়াঃ ॥ ১১ ॥

প্রাজাপত্যায়াঃ পঙ্‌ক্তৌ গায়ত্র্যা চতুরশ্চতুরঃ সংখ্যাঙ্কান্ গৃহীত্বা বর্দ্ধেত। অত্রাপি তৃতীয়াদিষু কোষ্ঠেষু বিন্যাসঃ পূর্ব্ববদেব ॥ ১১ ॥

---

৮। বেদোক্ত অষ্টাদশাক্ষর ছন্দের নাম আর্চ্চী গায়ত্রী। সেই মণ্ডলের সপ্তম পংক্তির প্রথম ঘরে "আর্চ্চী" শব্দ লিখিয়া দ্বিতীয় ঘরে ১৮ অঙ্ক বসাইবে।

৯। ষষ্ঠ পংক্তিতে সাম গায়ত্রীর অঙ্ক দুই দুই সংখ্যা দ্বারা বর্দ্ধিত হইয়া যথাক্রমে তৃতীয় ঘর হইতে অষ্টম ঘর পর্য্যন্ত বসিবে। অর্থাৎ দ্বিতীয় ঘরে সাম-গায়ত্রীর অঙ্ক আছে ১২, সুতরাং দুই দ্বারা বর্দ্ধিত হইয়া তৃতীয় ঘরে ১৪, চতুর্থ ঘরে ১৬, পঞ্চম ঘরে ১৮, ষষ্ঠ ঘরে ২০, সপ্তম ঘরে ২২ ও অষ্টম ঘরে ২৪ বসিবে।

১০। সপ্তম পংক্তিতে আর্চ্চী গায়ত্রী তিন তিন সংখ্যা দ্বারা বর্দ্ধিত হইয়া তৃতীয় ঘর হইতে অষ্টম ঘর পর্য্যন্ত যথাক্রমে বসিবে। অর্থাৎ দ্বিতীয় ঘরে আর্চ্চী গায়ত্রীর সংখ্যা ১৮ তিন দ্বারা বর্দ্ধিত হইয়া তৃতীয় ঘরে বসিবে ২১, চতুর্থ ঘরে ২৪, পঞ্চম ঘরে ২৭, ষষ্ঠ ঘরে ৩০, সপ্তম ঘরে ৩৩ ও অষ্টম ঘরে বসিবে ৩৬।

১১। চতুর্থ পংক্তিতে প্রাজাপত্যা গায়ত্রী চাইর চাইর সংখ্যা দ্বারা বর্দ্ধিত

## একৈকং শেষে ॥ ১২ ॥

অনুক্তঃ শেষঃ। যত্র গায়ত্র্যাং সঙ্খ্যাবৃদ্ধির্নোক্তা সা একৈকং সঙ্খ্যাঙ্কং গৃহীত্বা বর্দ্ধেত। দৈবী যাজুষী চ শেষশব্দেনোচ্যতে, আসুর্য্যাং বিশেষাভিধানাৎ। তেন দৈবী তৃতীয়াদিষু কোষ্ঠেষু একৈকম্ অঙ্কং গৃহীত্বা বর্দ্ধেত। তথৈব যাজুষী ॥ ১২ ॥

## জহ্যাদাসুরী ॥ ১৩ ॥

একৈকমিত্যনুবর্ত্ততে। আসুরী গায়ত্রী একৈকমক্ষরং ত্যজেৎ। উত্তরেষু কোষ্ঠেষু বৃদ্ধৌ প্রাপ্তায়াং হ্রাসো বিধীয়তে। তেঽঙ্কাঃ ক্রমেণ স্থাপ্যাঃ ॥ ১৩ ॥

---

হইয়া তৃতীয় ঘর হইতে অষ্টম ঘর পর্য্যন্ত যথাক্রমে বসিবে। অর্থাৎ চতুর্থ পংক্তির দ্বিতীয় ঘরে প্রাজাপত্যা গায়ত্রীর সংখ্যা আছে ৮, সুতরাং ৪ দ্বারা বর্দ্ধিত হইয়া তৃতীয় ঘরে বসিবে ১২, চতুর্থ ঘরে ১৬, পঞ্চম ঘরে ২০, ষষ্ঠ ঘরে ২৪, সপ্তম ঘরে ২৮ ও অষ্টম ঘরে বসিবে ৩২।

১২। যেই সমস্ত গায়ত্রী সম্বন্ধে বিশেষ বিধান নাই, তাহারা (অর্থাৎ দৈবী ও যাজুষী) এক এক সংখ্যা দ্বারা বর্দ্ধিত হইয়া তৃতীয় হইতে অষ্টম পর্য্যন্ত বসিবে। অর্থাৎ দ্বিতীয় পংক্তির দ্বিতীয় ঘরে দৈবী গায়ত্রীর সংখ্যা আছে ১, সুতরাং তৃতীয় ঘরে বসিবে ২, চতুর্থ ঘরে ৩, পঞ্চম ঘরে ৪, ষষ্ঠ ঘরে ৫, সপ্তম ঘরে ৬ ও অষ্টম ঘরে বসিবে ৭ এবং পঞ্চম পংক্তিতে দ্বিতীয় ঘরে যাজুষী গায়ত্রীর সংখ্যা আছে ৬, সুতরাং তৃতীয় ঘরে ৭, চতুর্থ ঘরে ৮, পঞ্চম ঘরে ৯, ষষ্ঠ ঘরে ১০, সপ্তম ঘরে ১১ ও অষ্টম ঘরে বসিবে ১২।

১৩। তৃতীয় পংক্তিতে আসুরী গায়ত্রী এক এক সংখ্যা পরিত্যাগ করিয়া তৃতীয় পংক্তির দ্বিতীয় ঘর হইতে অষ্টম ঘর পর্য্যন্ত যথাক্রমে বসিবে। অর্থাৎ তৃতীয় পংক্তির দ্বিতীয় ঘরে আসুরী গায়ত্রীর সংখ্যা আছে ১৫, সুতরাং এক বাদ দিয়া তৃতীয় ঘরে বসিবে ১৪, চতুর্থ ঘরে ১৩, পঞ্চম ঘরে ১২, ষষ্ঠ ঘরে ১১, সপ্তম ঘরে ১০ ও অষ্টম ঘরে ৯।

तान्युष्णिगनुष्टुब्बृहतीपङ्क्ति-
त्रिष्टुब्जगत्यः ॥ १४ ॥

'तानि' इति छन्दांसि, गायत्र्याः परस्तात् उष्णिगनुष्टुब्बृहती-पङ्क्तित्रिष्टुब्जगत्याख्यानि क्रमेण भवन्ति ॥ १४ ॥

तिस्रस्तिस्रः सनाम्न्य एकैका ब्राह्म्यः ॥ १५ ॥

यजुषां पङ्क्तिमारभ्य 'तिस्रः' याजुषी, साम्नी, आर्ची चेति गायत्र्यः, मिलिता एका षट्त्रिंशदक्षरा ब्राह्मी गायत्री भवति। सनाम्न्य इत्येकसंज्ञेत्यर्थः। तिस्रस्तिस्र इति वीप्सया परेषाम् उष्णिगादीनामिह ग्रहणम्। तथा एकैकेति वीप्सया तास्र ब्राह्म्यः भवन्ति इति विधीयते। "ब्राह्म्यः" इति गायत्र्यादीनां जगती-पर्य्यन्तानां विशेषणम्। एवं याजुषी, साम्नी, आर्ची च उष्णिक् मिलित्वा एका द्वाचत्वारिंशदक्षरा ब्राह्मी उष्णिक् भवतीति। एवं तिस्रः अनुष्टुभः सङ्गताः सत्यः अष्टचत्वारिंशदक्षरा एका ब्राह्म्यनु-ष्टुब्-भवति। ता एव तिस्रो बृहत्यः सङ्गताः सत्यः चतुःपञ्चाशद-क्षरा एका ब्राह्मी बृहती भवति। ता एव तिस्रः पङ्क्तयः सङ्गताः षष्ट्यक्षरा एका ब्राह्मी पङ्क्तिः भवति। ता एव तिस्रः त्रिष्टुभः

---

১৪। গায়ত্রীর পরে অর্থাৎ দ্বিতীয় ঘর হইতে যথাক্রমে উষ্ণিক্, অনুষ্টুপ্, বৃহতী, পংক্তি, ত্রিষ্টুপ্ ও জগতী ছন্দ হইবে। অর্থাৎ দ্বিতীয়াদি ঘরের অঙ্কানুসারে যথাক্রমে গায়ত্রীর ন্যায় উষ্ণিক্ প্রভৃতির প্রকারভেদ বুঝিতে হইবে।

১৫। যাজুষী সাম্নী ও আর্চী গায়ত্রী মিলিত হইয়া ৩৬ অক্ষরে এক ব্রাহ্মী গায়ত্রী হইবে। এবং যাজুষী সাম্নী ও আর্চী উষ্ণিক্ মিলিত হইয়া ৪২ অক্ষরে এক ব্রাহ্মী উষ্ণিক্ এবং যাজুষী সাম্নী ও আর্চী অনুষ্টুভ্ মিলিত হইয়া ৪৮ অক্ষরে এক ব্রাহ্মী অনুষ্টুভ্, এবং যাজুষী সাম্নীও আর্চী, বৃহতী মিলিত হইয়া ৫৪ অক্ষরে এক ব্রাহ্মী বৃহতী, এবং যাজুষী সাম্নী ও আর্চী পংক্তি মিলিত হইয়া ৬০

सङ्गताः षट्षष्ट्यक्षरा एका ब्राह्मी त्रिष्टुब्भवति। ता एव तिस्रः जगत्यः सङ्गताः द्वासप्तत्यक्षरा एका ब्राह्मी जगती भवति। अत्र अष्टम्यां पङ्क्तौ प्रथमे कोष्ठे ब्राह्मीशब्दं व्यवस्थाप्य द्वितीयादौ क्रमेण गायत्रीप्रमुखान् षट्त्रिंशदाद्यङ्कान् विन्यसेत्॥ १५॥

## प्राग्यजुषामार्ष्यं इति॥ १६॥

तिस्रस्तिस्र इत्यनुवर्त्तते। यजुषां पङ्क्तेः प्राक् प्राजापत्या, आसुरी, दैवी इति याः तिस्रः गायत्र्यः, ताः सङ्गताः सत्यः चतुर्विंशत्यक्षरा एका आर्षी गायत्री भवति। ता एव तिस्रः उष्णिहः सङ्गताः अष्टाविंशत्यक्षरा एका आर्षी उष्णिक् भवति। ता एव तिस्रः अनुष्टुभः सङ्गताः द्वात्रिंशदक्षरा एका आर्षी अनुष्टुप् भवति। ता एव तिस्रो बृहत्यः सङ्गताः षट्त्रिंशदक्षरा एका आर्षी बृहती भवति। ता एव तिस्रः पङ्क्तयः सङ्गताः चत्वारिंशदक्षरा एका आर्षी पङ्क्तिर्भवति। ता एव तिस्रः त्रिष्टुभः सङ्गताः चतुश्चत्वा-

---

অক্ষরে এক ব্রাহ্মীপংক্তি, এবং যাজুষী, সাম্নী, আর্চ্চী ও ত্রিষ্টুভ্ মিলিত হইয়া ৬৬ অক্ষরে এক ব্রাহ্মী ত্রিষ্টুভ্, এবং যাজুষী, সাম্নী, আর্চ্চী, জগতী মিলিত হইয়া ৭২ অক্ষরে এক ব্রাহ্মী জগতী হইবে। সেই মণ্ডলের অষ্টম পংক্তিতে প্রথম ঘরে "ব্রাহ্মী" শব্দ লিখিয়া দ্বিতীয় ঘরে ৩৬, তৃতীয় ঘরে ৪২, চতুর্থ ঘরে ৪৮, পঞ্চম ঘরে ৫০, ষষ্ঠ ঘরে ৬০, সপ্তম ঘরে ৬৬ ও অষ্টম ঘরে ৭২ অঙ্ক বসাইতে হইবে।

১৬। প্রাজাপত্যা আসুরী ও দৈবী গায়ত্রী মিলিত হইয়া ২৪ অক্ষরে এক আর্ষী গায়ত্রী হইবে। এবং প্রাজাপত্যা আসুরী ও দৈবী উষ্ণিক্ মিলিত হইয়া ২৮ অক্ষরে এক আর্ষী উষ্ণিক্ এবং প্রাজাপত্যা আসুরী ও দৈবী অনুষ্টুভ্ মিলিত হইয়া ৩২ অক্ষরে এক আর্ষী অনুষ্টুভ্ এবং প্রাজাপত্যা, আসুরী, দৈবী ও বৃহতী মিলিত হইয়া ৩৬ অক্ষরে এক আর্ষী বৃহতী, এবং প্রাজাপত্যা আসুরী ও দৈবী পংক্তি মিলিত হইয়া ৪০ অক্ষরে এক আর্ষী পংক্তি, এবং প্রাজাপত্যা

विंशदक्षरा एका आर्षी त्रिष्टुब्भवति। ता एव तिस्रो जगत्यः सङ्गता: अष्टचत्वारिंशदक्षरा एका आर्षी जगती भवति। तत्र प्रथमायां पङ्क्तौ प्रथमे कोष्ठे आर्षीशब्दं व्यवस्थाप्य द्वितीयादिषु चतुर्विंशत्याद्यङ्कान् विन्यसेत्। प्रथमपङ्क्तेः द्वितीयादिकोष्ठेषु अङ्कानामुपरि गायत्र्यादीनि नामानि लिखेत्। अयं स्पष्टतरः प्रदर्शनोपायः॥ १६॥

इति भट्टहलायुधकृतायां छन्दोवृत्तौ द्वितीयोऽध्यायः।

---

## तृतीयोऽध्यायः।

---

### पादः॥ १॥

अधिकारोऽयम् आ अध्यायपरिसमाप्तेः। यदित ऊर्द्ध्वमनुक्रमिष्यामः, तत् पाद इति अधिकृतं वेदितव्यम्। वक्ष्यति च गायत्र्या वसवः ( ३।३ ) इति॥ १॥

### इयादिपूरणः॥ २॥

पाद इत्यनुवर्त्तते। इयादिः पूरणो यस्य सः इयादिपूरणः। आदिशब्देन उवादयो गृह्यन्ते। अत्रायम् अर्थः,—यत्र गायत्र्यादौ

---

দৈবী ও ত্রিষ্টুপ্ মিলিত হইয়া ৪৪ অক্ষরে এক আর্ষী ত্রিষ্টুপ্, এবং প্রাজাপত্যা আসুরী ও দৈবী জগতী মিলিত হইয়া ৪৮ অক্ষরে এক আর্ষী জগতী হইবে। সেই মণ্ডলের প্রথম পংক্তিতে প্রথম ঘরে "আর্ষী" এই নাম লিখিয়া, দ্বিতীয় ঘরে ২৪, তৃতীয় ঘরে ২৮, চতুর্থ ঘরে ৩২, পঞ্চম ঘরে ৩৬, ষষ্ঠ ঘরে ৪০, সপ্তম ঘরে ৪৪ ও অষ্টম ঘরে ৪৮ অঙ্ক বসাইতে হইবে। এই সমস্ত সূত্রার্থ সঙ্কলনে যে মণ্ডলটি হইবে তাহাই উপরে প্রদর্শিত হইয়াছে। ঐ মণ্ডলটিই গায়ত্রী প্রভৃতির প্রকারভেদ বুঝিবার প্রকৃষ্ট উপায়।

छन्दसि पादस्य अक्षरसङ्ख्या न पूर्य्यते, तत्रेयादिभिः पूरयितव्या। यथा,—तत् सवितुर्वरेणियम्, दिवं गच्छ, सुवःपत इत्यादि ॥ २ ॥

गायत्र्या वसवः ॥ ३ ॥

पाद इत्यनुवर्त्तते। परिभाषेयम्। गायत्र्याः पादः 'वसवः' अष्टाक्षराणि भवन्ति। यत्र यत्र गायत्र्याः पाद अभिधास्यते, तत्राष्टाक्षरो ग्राह्यः ॥ ३ ॥

जगत्या आदित्याः ॥ ४ ॥

पाद इत्यनुवर्त्तते। परिभाषेयम्। जगत्याः पादो द्वादशाक्षरो भवति। यत्र क्वचित् जागतः पादः, तत्रः द्वादशाक्षरो गृह्यते ॥ ४ ॥

विराजो दिशः ॥ ५ ॥

पाद इत्यनुवर्त्तते। यत्र क्वचित् वैराजः पाद इति उच्यते, तत्र दशाक्षरः प्रत्येतव्यः ॥ ५ ॥

---

১। এই অধ্যায়ের পরিসমাপ্তি পর্য্যন্ত "পাদ" এইটি অধিকৃত হইবে।

২। যেই গায়ত্রী প্রভৃতি ছন্দের পাদে অক্ষরসংখ্যা কম হইবে, সেই স্থলে ইয়্ উব্ প্রভৃতি দ্বারা পূরণ করিতে হইবে। যেমন "তৎসবিতুর্ব্বরেণ্যম্" এই গায়ত্রীপাদে ৮ অক্ষরস্থলে ৭ অক্ষর হওয়ায় "তৎ সবিতুর্ব্বরেণিয়ম্" এইরূপ পূরণ করিতে হইয়াছে। ইত্যাদি।

৩। যেই যেই স্থলে গায়ত্রীর পাদ অভিহিত হইবে, সেই সেই স্থলেই অষ্টাক্ষর গ্রহণ করিতে হইবে।

৪। যেই স্থলে জগতীর পাদ অভিহিত হইবে, সেই স্থলে দ্বাদশাক্ষর গ্রহণ করিতে হইবে।

৫। যে স্থলে বৈরাজ পাদ অভিহিত হইবে, সেই স্থলে দশাক্ষর গ্রহণ করিতে হইবে।

# विशेषतो द्रष्टव्यम्।

पुरातनार्य्यप्रभा अपि क्रय्या वर्त्तन्ते। तत्र प्रथम-द्वितीय-वर्षीय-पत्रिकयोर्मूल्यं प्रत्येकमेकरूपकं १), तृतीयवर्षीय-पत्रिकायाश्च मूल्यमानकाष्टकम्। प्रचारबाहुल्यकामनया च शतसंख्यकान् प्रति-वर्षीयपत्रिकामर्द्धमूल्येन समुपनेष्यामः। नूतनग्राहकेषु च येआ-गामिज्यैष्ठमासाभ्यन्तरे चतुर्थवर्षीयं १।) सपादैकरूपकेण सह ॥) पादोनरूपकं सङ्कलनं तु रूपकद्वयं प्रेषेत, तैस्तेनैव प्रथम-द्वितीय-तृतीय-वर्षीय-पत्रिकाभिः सह चतुर्थवर्षीया पत्रिका लभ्येत। तृतीय-वर्षे प्रबन्धांशस्याप्रकाशात् पुरातनग्राहकेषु च ये पत्रिकाग्रहणे विरतास्तेषां भाषापरिच्छेदपुस्तकं न सम्पूर्णतां गत इति, तेऽपि यदि ज्यैष्ठमासाभ्यन्तरे चतुर्थवर्षीयपत्रिकामूल्यं १।) सपादैकरूपकं संप्रेष्य पुनर्ग्राहकत्वमङ्गीकुर्य्युस्तदा विना मूल्येनैव तेभ्यस्तृतीयवर्षीय-पत्रिकां समुपहरिष्याम इति कमतःपरं सुयोगः। वक्तव्यबाहुल्यमेतद् यत्शतानधिकग्राहका एव सुयोगमेवं लभेरन्, तस्मात्त्वरन्तां पत्रिका-जिघृक्षवः।

प्रथम-द्वितीय-तृतीय-वर्षीयपत्रिकासु प्रकाशितः सटिप्पन-सिद्धान्तमुक्तावलीसहितः सम्पूर्णो "भाषापरिच्छेदः" चतुर्थवर्षीय-पत्रिकायां प्रकाश्यमानं हलायुधकृतवृत्तिविस्तृतवङ्गानुवादाभ्यां सहितं "पिङ्गलसूत्र"ञ्च पृथक् पुस्तकाकारेणापि विक्रीयेत, मूल्यं प्रतिपुस्तकमेकरूपकम् १)।

# আর্য্যপ্রভা-সংক্রান্ত নূতন নিয়মাবলী।

১। আর্য্যপ্রভায় নানাবিষয়ক সংস্কৃতপ্রবন্ধ, গ্রন্থের সমালোচনা, ইতিবৃত্ত, নূতন ধরণের অতি সরল সংস্কৃত উপন্যাস ও ছাত্রদের পাঠোপযোগী প্রাচীন সংস্কৃত পুস্তক টীকা ও বঙ্গানুবাদাদি সহ প্রকাশিত হইয়া থাকে। প্রধানতঃ ধর্ম্ম ও সংস্কৃত শিক্ষার উন্নতিসাধনই আর্য্যপ্রভার মুখ্য উদ্দেশ্য।

২। আর্য্যপ্রভার অগ্রিম বার্ষিক মূল্য ডাকমাশুলাদি সমেত ১।০, প্রতি সংখ্যার মূল্য ৵০, যিনি একত্র পাঁচ খণ্ড লইবেন, তিনি এক খণ্ড বিনামূল্যে পাইবেন। যিনি আর্য্যপ্রভার নমুনা দেখিতে ইচ্ছা করেন, তাঁহাকে এক খণ্ডের মূল্য ৵০ টিকিট সহ পত্র লিখিতে হইবে। পত্রের উত্তরপ্রার্থীকেও পত্রের সহিত উত্তর দেওয়ার জন্য টিকিট পাঠাইতে হইবে।

৩। সর্ব্বদেশের সর্ব্বশ্রেণীর সংস্কৃতজ্ঞ ব্যক্তির সংস্কৃত প্রবন্ধই আর্য্যপ্রভায় প্রকাশিত হইয়া থাকে, অতএব যিনি দয়া করিয়া আর্য্যপ্রভায় প্রবন্ধাদি

चतुर्थवर्षे । सुदुर्लभाः सर्व्वमनोरमा गिरः । २य संख्या ।

## वङ्गीयसाहित्य-सम्मिलनं ।

विगत-चैत्रमासे षष्ठवङ्गीयसाहित्यसम्मिलनमस्मिन्नेव चट्टग्रामे साड़म्बरं सम्पन्नमिति समाहूतैरस्माभिः प्रत्यक्षीकृतं, परिज्ञातञ्चैतत् सर्व्वैरेव साहित्यसेविभिः। तन्निर्व्वारणतश्च तत्सम्पादकमहाशयेन सम्प्रति वयं विज्ञापिताः—"यथाच नानाविधस्वास्थ्योन्नतिविषयकाः प्रबन्धाः, स्वास्थ्योन्नतिविषयकाणि च पुस्तकानि लिखितानि प्रचारितानि च बाहुल्येन भवेयुस्तत्साहाय्यकरणाय षष्ठवङ्गीयसाहित्यसम्मिलनं वङ्गीयसाहित्यपरिषदं पत्रिकासम्पादकांश्च सनिर्व्वन्धमनुरुणद्धीति" अस्माभिरपि सर्व्वान्तःकरणेन प्रस्तावोऽयमनुमोद्यते, यतः स्वास्थ्यमेव जगति सर्व्वस्याः समुन्नतेः प्रधानतमं कारणम्। ऋते च स्वास्थ्यं कः किमपि कर्त्तुं न शक्नुयात्। स्वास्थ्यहीनस्य चित्तं केवलं स्वास्थ्यलाभचिन्तयैव व्याकुलं सत्परामवसन्नतां लभते, अवसन्नचित्तस्य च क्रमशः शक्तिवैधुर्य्यधैर्य्यच्युतिरालस्यं भीरुत्वञ्च समुपैति, भीरुणा च तेन किमपि न सम्पद्यते। आस्तामन्यकार्य्यसम्पादनं, अनायाससाध्यं स्वकीयाशनव्यसनादिसुखमपि तस्य दुःखायते। किं बहुना सर्व्वप्राणिभीतिकरमकालमरणमेव प्रायः स्वास्थ्यहीनस्य परं शरणमुपजायते। तस्माद्-ये यस्मिन् विषये समुन्नतिं सुखं वा समभिलषन्तु, तैः सर्व्वैरेव सर्व्वतोभावेन स्वास्थ्यरक्षार्थमादौ यत्नः कर्त्तव्य इत्यत्र नास्ति कस्यापि प्रतिवदितव्यं। किन्तु हन्त !! तत् स्वास्थ्यसंरक्षणञ्च कथं सम्भवेदित्यस्मद्देशीया विशेषतः पल्लीवासिनो-

ऽनेके न जानन्तीति तद्विषयकप्रबन्धादीनां भूरिप्रचारः समतोवोपकारक इति सर्व्वैरेव देशहितैषिभिस्तत्र यतितव्यम्। विस्तृतसमालोचनञ्चैतद्विषयकमस्माभिः कृतं, तत्तु यथावकाशं प्रकाश्येत। अन्यैरपि कृतविद्यैः प्रेषितं युक्तिपूर्ण-मेतद्विषयकं प्रबन्धादिकमवश्यमस्यामार्य्यप्रभायां स्थानं लभेत।

## कश्चन लेखः। *

परमपूज्यपाद-

श्रीयुक्त-कुञ्जविहारि-तर्कतीर्थ-महाशयानां

श्रीचरण-सरोजेषु,

आर्य्यवर्य्य,—

प्रणतिरियं गृह्यतां विधेयस्य। इतःपूर्व्वं भवदादेशलिपिमवाप्यैवालिखम् कञ्चन प्रबन्धं प्रभायां प्रकाशयितुम्। परन्त्वन्येद्युर्निम्नलिखित-वितर्कसन्दोहैराकूलितान्तःकरणस्ताभिः प्रबन्धपत्रिकाभिर्भगवतो हुताशनस्य तोषमकरवम्। सुतरामापाततः प्रबन्धप्रेषणेऽक्षमोऽस्मि। मदीयवितर्कप्रकारमवधार्य्यापि चेद्भवानादिशति प्रबन्धलेखनाय,—तर्हि आगामिसंख्यासु उपाध्यायादेशवर्त्तिना मया भाव्यम्। वितर्काश्च ते अधस्तादुल्लिख्यन्ते। यथा—

यत् किल वयमवधारयामस्तदस्माकं ज्ञानसीमान्तर्व्वर्त्ति एव। न जातु नो निजज्ञानसीमातिक्रान्तमवधारणं सम्भवति। ज्ञानञ्च तदिन्द्रियसाहायकमन्तरेण न सम्भवति। यत्किञ्चिदस्माकं ज्ञानं तत् सर्व्वमेव इन्द्रियानुभूतविषयकम्। यन्न श्रूयते, न स्पृश्यते, न दृश्यते, न रस्यते, नाघ्रायते, न वा मनसा मन्यते, तद्विषयकं ज्ञानं न

---

* एतल्लिखार्थमवगतस्य लेखकस्य पुनः प्रबन्धलिखनमुचितं न वेत्यस्योत्तरं युक्तिप्रमाणपूर्णमार्य्यप्रभाप्रकाशयोग्यप्रबन्धाकारपरिणतं लब्धुमभिलषामः सहृदयेभ्यो ग्राहकेभ्यः। एतदभिप्रायेण प्रकाशितोऽयमिति।

कस्यापि जीवस्य सम्भवति। विषयोपलब्धौ एकमात्रसहायभूतानि तानि इन्द्रियाण्यप्यस्माकं अवस्थानुरूपमेव ज्ञानं जनयन्ति। बाल्ये यथा चक्षुषा दृष्टं, श्रवणेनाकर्णितं, त्वचा स्पृष्टं, घ्राणेनाघ्रातं, रसनया रसितं, मनसा चालोचितम्, न तथा यौवने क्रियते। बाल्ये ये पदार्थाः शोभनत्वेन इन्द्रियैर्गृहीताः, न ते यौवनेऽपि सुखावहाः; बाल्ये यत् करणीयमवधारितं यौवने, तत् विपर्य्यस्तमेव। न हि यौवने मातुरङ्गस्तथासुखस्पर्शः प्रतिभाति, यथा शैशवे. एवं यौवने यत् सुखावहमिव कर्त्तव्यमिव च प्रतिभाति प्रौढ़े बार्द्धक्ये वा तत्सर्व्वमेव विपर्य्यस्यति। यौवने यः पदार्थो नितरामिव रमणीयो मन्यते जनैः, तैरेव बार्द्धक्यदशां गतैः स एव पदार्थः न तथा रमणीयो मन्यते। अत एव बाला युवभिर्युवानः प्रौढ़ैः, प्रौढ़ा जरद्भिरुपहस्यन्ते सन्ततम्। किमपरं पूर्व्वक्षण एव यः पदार्थो मया सुदृश्यत्वेनामन्यत, परक्षण एव सति भावान्तरे स एव पदार्थो नितरामिवासुदर्शनो मन्यते। 'इयं सती पतिगतजीविता' इत्येवमन्यमानेन स्वामिना येव सुन्दरी सुरूपा सुखस्पर्शा सर्व्वसुखावहा च प्रतीयते, सैव तस्मिन्नेव काले आप्तोपदेशात् 'भ्रष्टचारित्रा इय'मिति ज्ञायमाना स्वरूपान्तरितापि असुदर्शना असुखस्पर्शा च प्रतीयते। पतिरपि तदुच्चारितशब्दं पूर्व्वक्षणे यथा वीणाक्वणितमधुरमश्रौषीत्, परक्षणे न तथा शृणोति, तद्रूपमपि न पूर्व्वक्षणवत् शोभनं मन्यते, अन्यच्च किमपि तत्सम्बन्धि न पूर्व्ववत् मन्यते। तत्र केवलं ज्ञातुर्भावविपर्य्ययादेव एकत्रैव पदार्थे विरुद्धधर्म्मद्वयाध्यासः, न पुनर्वस्तुशक्त्या, अपि तु ज्ञातुरेव तत्र परिवर्त्तो, न ज्ञेयभूताया रमण्याः। एवमस्माकमिन्द्रियजज्ञानं प्रतिक्षणमेव परिवर्त्तते। इन्द्रियज्ञानमूलकत्वात् कार्य्याकार्य्यविचारणमपि सर्व्वदैव परिवर्त्तनतां लभते। इदमिदानीं मया कर्त्तव्यत्वेनावधारितं, किन्त्वहो! परक्षण एव तच्चितरामकरणीयतां याति। इदमत्र मध्य वाच्यं, यदेव प्रतिदशं प्रतिदिनं

प्रतिक्षणञ्च परिवर्त्तते न तत् सत्यं सुनिश्चितञ्च। यदि सत्यमेव स्यात्, तर्हि कालान्तरे तन्मिथ्यात्वनिदर्शनं स्यात्, न च स्यात् तज्जनितानुतापः आत्मग्लानिर्व्वा। लोभोत्पत्तौ मिष्टान्न-भोजने महती प्रवृत्तिर्जायते, किन्तु विगतलोभस्य तस्यैव मिष्टान्न-भोजनमकिञ्चित्करमिवाभाति, तत् किमत्र इदं वक्तुं न शक्यते, यदियं मिष्टान्नभोजनार्था प्रवृत्तिर्न वस्तुतः सत्यरूपा, किन्तु लोभ-कुहककल्पिता एव। एवमस्माकं यत्किञ्चिच्च ज्ञानं कर्त्तव्यावधारणं वा परिणामेऽसंहृष्यते, तत्सर्वं तत्तत्कुहकविजृम्भितं, न पुनर्व्वसु-सत्यम्। वयमेतया कुहककल्पनया आकूलितान्तःकरणाः समन्ततो धावामः। न केवलं वयमेव केवलं धावन्तो निवृत्तिं लभेमहि, परन्तु अन्यमपि जनं अस्मादवधारितं विज्ञापयितुं बोधयितुं आत्म-ज्ञानानुसारेणानुकूलयितुञ्च यतामहे। फलं पुनरिदमेव पर्य्यवस्यति यत् मदृशासादृश्यवान् कश्चिन्मां सततः अवत्ते, अनुकूलताञ्च भजते मे वचसि, अथापरः कश्चित् उपहसति च माम्। एतदर्थमेव लेखकानां वक्तृणाञ्च वचांसि केचन प्रतिवदन्ते, केचन च समर्थयन्ति तत्मन्म-तानर्थान्। (अस्मिन्नेव क्षणे मल्लिखितप्रबन्धकथा मे मानसवर्त्मनि प्राप्यायिता, तेनाहं स्वयमेव मे दुर्णयं गर्हमाण इदमचिन्तयम्)।

"अहो ज्यायसी खलु मदीया विकृतिः। सत्यत्वेनावगतमर्थं लोका' लोकेषु प्रमाणयन्ति, किन्तु कदाचिदपि यत् सत्यत्वेन नोपलब्धं, तदप्यहं लोकान् बोधयितुं कृतायासोऽस्मि। न मेऽस्ति वैराग्यवार्त्तापि, अथच परकर्णेषु वैराग्यकथां दित्सुरस्मि। परक्षण एव यान् परित्यजेयम्, तानेव मामकीनान्, किमपरं कमपि अहमिति च मन्यमानः इन्द्रियसेवायां यत्नवानस्मि, अथच शास्त्रा-दुद्धृतैः स्वयमबुध्यमानार्थैः हितवचनैर्जगदिदं भ्रान्ति कल्पितम् अत्यन्तविनश्वरं, क्षणमपि न स्थास्यति इति प्रत्येतु मयोग्यमित्यादि मद्वत्सवदसारं वाक्यं प्रबन्धाकारेण रचयितुं यत्नपरोऽस्मि।

अयं हि देहः क्रिमि-कीट-विष्ठा-मूत्र पूयः-क्लेदादिमयत्वा-दत्यन्तमपवित्रः, यमेवांशमस्य शरीरस्य विचारयामि, पश्यामि स एवापवित्रः ।

"त्वङ्मांसरक्तवाष्पाम्बु पृथक् कृत्वा विलोचनम् ।
समालोकय रम्यं चेत् किं मुधा परिताम्यसि ॥" इति हि देहस्य घटना ।
"स्थानाद्वीजादुपष्टम्भान्निस्यन्दान्निधनादपि ।
कायमाधेयशौचत्वात् पण्डिता ह्यशुचिं विदुः ॥"

वस्तुतः शरीरस्य कारणं शुक्रशोणितं, अवस्थानं मलमूत्रादिक्लिन्ने गर्भे, मांसरक्तविण्मूत्रादिभिः सङ्घटनं प्रतिक्षणमेव विण्मूत्रकफ-स्वेदादिनिर्गमः, स्नानादिना अन्वहं शुचीकरणं इत्येतत् सर्वमेव चिन्त्यमानं काये घृणां जनयति । विशेषतो मृतदेहो विण्मूत्रादितोऽपि अपवित्रतर इव व्यवह्रियते अस्माभिः । चर्म्मावनद्धे तस्मिन्नेव शरीरे चन्दनादिलेपं कुर्वद्भिरस्माभिः सौन्दर्य्यगर्वैः खर्व्वीक्रियते भगवान् मकरकेतुः । ममेदं शरीरं पवित्रं, त्वमसि अपवित्रः अस्पृश्य-श्चेति आकुञ्चितनकपठं आख्यायते । पुनः स एव अपवित्रतायाः शरणीभूतो देहः शुद्धबुद्धमुक्तामलस्वभावस्यात्मनः प्रतिरूपं मन्य-मानेन सेव्यते । प्रतिदिनं यमक्षयं गच्छतो बाल-युव-वृद्ध-सङ्घन्न-मवलोकयन्नपि एष देहश्चिरस्थायी इतीव मन्यमानेन कतिभिर्नाम रत्नाभरणैर्नालङ्क्रियते । बीजशक्त्या शस्यादिरूपेण परिवर्त्तमानैः पञ्चभूतैर्योऽयं देहो गठितो वर्द्धितश्च केनचिदभ्यन्तरस्थितया क्रियया चालिताहारव्यवहारादिकं कुरुते, सूत्रचालितशालभञ्जिकेव नृत्यति, हसति, विकसति, श्वसिति, पुनश्च तद्-यन्त्रीभूतक्रियाया अपगमे क्षणादेव मृदादिभावमुपगच्छति, अहहो तस्मिन्नपि देहे स्थैर्य्यात्मत्वममत्वादिबुद्धिमतां अस्माकं किमिव नाम प्रावीण्यम् । य एव पुत्र इतःपूर्वं सहजानां पुत्रतामगमत्, इदानीमपि शैलूष इव मत्पुत्रत्वाभिनयं कुरुते ! अभिनयशेषे 'का कस्य परिवेदना' इति

प्रमाणयन् अन्यत्र यास्यति, तस्मिन्नपि पुत्रे ये मामकीनत्वधिया वर्त्तन्ते, ते वयं वैराग्योपदेष्टारः ज्ञानविज्ञानाध्यापकाश्च न भवेम। धिगस्मान् प्राचीनयुगगर्वितान्। धिक् पुनरपि नः यत्तैरपि हतमूढ़ैः स्पन्दनमात्रजीवितैः कार्य्याकार्य्यविचारणाविरहितैः दीर्घस्वप्नाविष्टैरस्माभिर्जागरितजनप्रयुक्तानि वचांसि उच्चारयद्भिः परेषामज्ञानदूरीकरणाय प्रयत्यते। येन संसारसुखेनाकृष्टचित्ता वयं अवश्यम्भाविनं सर्वलोकभयावहमपि मृत्युं विस्मरामः, तद्विषयिकामिमां कथां व्यचिन्तयम्। यथा—

"सुखं लप्स्ये इति प्रार्थना प्रतिजीवमेवास्ति, किन्तु जागतिकसुखाभिलाषिणां सुखप्रत्याशा केवलं मानस एवावतिष्ठते। यदि कश्चन जनः प्रतिक्षणं लब्धयोः सुखदुःखयोर्गणनां कुरुते, तर्हि फलत इदमेव पर्य्यवस्येत् यत् सुखपदवाच्यं ( वस्तुतः तदपि दुःखमेव ) जिह्वोपस्थादिसंयोगजं सुखं दिनेषु घोड़ातः अधिकं न लभ्यते। तत्र च बाल्यवार्द्धक्ये नाम दशे केवलं दुःखमये। न तत्र सुखलवप्रत्याशाऽपि। एवञ्च पर्य्यवसाने शतायुषो जनस्य नवतिवर्षाणि सुखप्रत्याशया एव यान्ति। अपराणि च दशवर्षाणि ऐन्द्रियकाणि ( परिणामतीव्राणि ) सुखानि आसाद्यन्ते। वस्तुतो जागतिकसुखं—

"काकमांसं शुनोच्छिष्टं दुर्गन्धं क्रीमिसंकुलम्।
म्लेच्छपक्वं सुरासिक्तं स्वल्पं तदपि दुर्लभम्॥"

सर्व्वं एव सांसारिका आगामिनि सुखं लप्स्ये इति वितर्कयन्त एव कालमतिवाहयन्ति, पश्चादासन्नवर्त्तिनश्च मृत्युमालोक्य हाहारवं वितन्वन्तः—

"अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया।
धनं दूरेऽस्तु मेऽपूरि वदनं क्षारवारिभिः॥"

इत्यादि विलपन्तश्च बलीयसा कालेन कवलीक्रियन्ते। वस्तुतः शान्तिं त एवाप्नुवन्ति, ये विषयसंयोगजन्ये सुखे हस्तजलं जलं प्रदाय

सन्तोषामृतसेवनेन परितृप्ता निरीहा भ्रमन्ति। अस्मतो मृत्युकालं यावत् किमपरं आ-महाप्रलयं ते निरुपमं सुखमाप्नुवन्ति। वयन्तु जागतिकसुखैषिणः केवलं दुःखभोगिन एव। किन्तु हा हन्त! दुःखसर्व्वस्वं इदं जागतिकं सुखमनुभूयापि न वयं स्वल्पायासकरे बृहत्फले मोक्षाख्ये प्रसजामः। यथा आजीवनं आयस्य संकलने दशवर्षभोग्यं जागतिकं सुखं लभामहे, यदि तथैव मोक्षाय प्रयत्नमकरिष्याम, तर्हि महाप्रलयान्तेऽपि अक्षय्यं निरामयं निर्व्विकल्पं दुःखलेशेनाप्यनुद्भिन्नं केवलमानन्दमयं मोक्षाख्यं फलं करतलगतमभविष्यत्। अत एवाचार्य्याः—

"स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्।"

इति ब्रुवन्ति वस्तुतः महाप्रलयकालतुलनया इदमस्माकं जीवनं मुहूर्त्तादपि क्षुद्रतरम्, अथ चैतद्द्वारेणैव महाप्रलयकालस्थायि सुखमुपार्ज्जयितुं शक्यते। यातु वापरजन्मकथा, वैराग्यमाश्रितानां अस्मिन्नपि जन्मनि यत् सुखं "कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम्" विषयिणां वासनामात्रजीवितानां अस्माकम्। लब्धशान्तिसुखा महात्मानो जगदाधिपत्यं तृणायापि न मन्यन्ते। किन्तु वयं फलजनकं स्वल्पायासकरं कर्म्म परिहाय दुःखसर्व्वस्वे अकिञ्चित्करसुखजनके कर्म्मणि व्यापृताः। तत्रेदमेव विस्मयावहं यत् एवं मूढ़ा अपि वयं परमुपदिशामः। शास्त्रवचसि नास्ति आत्मन एव श्रद्धा अथच अन्यं बोधयामि—

"अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्ज्जवम्।
आचार्य्योपासनं शौचं स्थैर्य्यमात्मविनिग्रहः॥
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु।
नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी।
विविक्तदेशसेवित्वमरतिर्जनसंसदि।

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा॥"

इति गीतोक्तं ज्ञानमस्मासु अंशतोऽपि नास्ति। ज्ञानलेशशून्यै-रस्माभिः प्रचारितं वचः कथमिव स्यात् ज्ञानप्रदम्। आधुनिका अनेक एव प्रचारकाः परिषदादिषु धर्म्मान् प्रचारयन्तोऽपि अकृत-कार्य्यतां यान्ति, तत्रेदमेव कारणं वयमनुमियामहे, यत्तेषु अनेके ज्ञानहीना धर्म्माचारविमूढ़ाश्च। ज्ञानिनो विविक्तसेविनः सभासु तेषां समागमो नितरामसम्भव एव। केवलं वयं कतिपये ज्ञानहीना एव दीर्घदीर्घां वाक्यावलिं उच्चारयन्तः समितिषु विचरामः, मासिक-पत्रिकासु ज्ञानविज्ञानगर्भानिव प्रबन्धानारचयामः। अस्माकं परिश्रमफलन्तु सर्वजनसंवेद्यमेव। विशेषतश्चायमार्य्यधर्म्मो न प्रचारयोग्यः, प्रचारेण एतदुन्नतिः कथमपि न सम्भाव्यते। आचार-मात्रमेवालम्ब्यायं धर्म्मस्तिष्ठति, न प्रचारादिषु। यः खलु धर्म्मः वागिन्द्रियसीमान्तवर्त्ती, यदाचरणे स्वरसंयोग एव प्रधानतमं, यत्रास्ति उपासनासु वाग्विभवस्य प्रतिपत्तिः, भवेन्नाम तस्य धर्म्मस्य प्रचारयोग्यता। न तु आर्य्यधर्म्मस्तथा, पूरापि धर्म्मार्थिनः धर्म्माश्रमेषु वसन्तो ज्ञानिनां मुनीनाञ्च उपदेशानुसारेण चरन्तः—

"संकल्पप्रभवान् कामांस्त्यक्त्वा सर्व्वानशेषतः।
मनसैवेन्द्रियग्रामं संनियम्य समन्ततः॥"

उन्नतिपदवीमारुरुहुः। प्रचारेण उन्नतिर्न जातु यातास्य धर्म्मस्य। कदाचित् केनापि धर्म्मयाजकेन पुरास्य धर्म्मस्य प्रबन्धादिना प्रचारः कृत इति न श्रूयते। सुतरां अकार्य्यमिदं कर्त्तुमुद्युक्ता वयं यत् स्वयम् ज्ञानिनोऽपि केवलं शास्त्रकथामाश्रित्य प्रचारायोग्या-र्य्यधर्म्मप्रचारे कृतमतयः प्रबन्धादिलेखने नियुक्ताः। इति विचारयन्नेव लिखितप्रबन्धं अग्निसादकरवम्। इति शम्।

भवद्विधेयस्य—श्रीसुरेन्द्रकुमार-ब्रह्मचारिणः।

त्रिष्टुभो रुद्राः ॥ ६ ॥

त्रैष्टुभः पाद इत्युक्ते सर्वत्रैकादशाक्षरो द्रक्ष्यति । अस्मिन्नेव अध्याये परिभाषा एतास्तस्रः ॥ ६ ॥

एकद्वित्रिचतुष्पादुक्तपादम् ॥ ७ ॥

एभिश्चतुर्भिर्लक्षणैरुक्तः पादो यस्य तदुक्तपादम् । यस्य छन्दसो यादृशः पादः परिभाषितः, तत् छन्दः तेन एव पादेन क्वचित् एकपात्, क्वचित् द्विपात्, क्वचित् त्रिपात्, क्वचित् चतुष्पाद्भवति । गायत्री च त्रिपादेव । चतुर्भिरष्टाक्षरैः पादैः अनुष्टुप् एव भवति ॥ ७ ॥

आद्यं चतुष्पादृतुभिः ॥ ८ ॥

ऋतुशब्देन लक्षणया षडक्षरः पादोऽभिधीयते । तैः पादैः चतुष्पादाद्यं गायत्र्यं छन्दो भवति । एवं चतुर्विंशति-अक्षराणि जायन्ते । तत्रोदाहरणम्—

इन्द्रः शचीपतिर्बलेन वीडितः ।
दुश्च्यवनो वृषा समत्सु सासहिः ॥ ८ ॥

क्वचित्त्रिपादृषिभिः ॥ ९ ॥

क्वचिद्वेदे सप्ताक्षरोपलक्षितैः पादैः त्रिभिर्गायत्र्येव भवति । एवमेकविंशति अक्षराणि जायन्ते ॥ तत्रोदाहरणम्—

---

৬। যে স্থলে ত্রিষ্টুভের পাদ উক্ত হইবে, সেই স্থলে একাদশাক্ষর গ্রহণ করিতে হইবে। এই অধ্যায়ে ৩—৬ পর্য্যন্ত এই চারিটি পরিভাষাসূত্র।

৭। পূর্ব্বোক্ত পাদানুযায়ী ছন্দ কোন স্থলে একপাদ, কোন স্থলে দুই পাদ, কোন স্থলে তিন্ পাদ ও কোন স্থলে চারি পাদ হইবে। গায়ত্রীছন্দ ত্রিপাদই হইবে, কারণ অষ্টাক্ষর চারিপাদে অনুষ্টুভ্ ছন্দ হয়।

৮। ষড়ক্ষর চারিপাদে ২৪ অক্ষরে আদ্য গায়ত্রীছন্দ হয়। প্রত্যেক সূত্রের উদাহরণই বৃত্তিতে দ্রষ্টব্য।

युवाकु हि शचीनां युवाकु सुमतीनाम् भयाम वाजदाव्नां ॥ ऋ० । १म० । ४अ० । १७सू० ॥ ४ ॥ ८ ॥

सा पादनिवृत् ॥ १० ॥

सैव गायत्री पादनिवृदिति सञ्ज्ञां लभते। प्रयोक्तुरदृष्टाभ्युदयसम्बन्धज्ञापनार्थमियं सञ्ज्ञा। वेदस्य अनादित्वात् मन्त्रत्वेऽपि च न दुष्यति ॥ १० ॥

षट्कसप्तकयोर्मध्येऽष्टावतिपादनिवृत् ॥ ११ ॥

प्रथमः षड़क्षरः, द्वितीयोऽष्टाक्षरः, तृतीयः सप्ताक्षरः, एवं त्रिभिः पादैर्या गायत्री सा अतिपादनिवृत्। त्रिपादित्यनुवर्त्तनीयम् ॥ ११ ॥

द्वौ नवकौ षट्कश्च सा नागी ॥ १२ ॥

आद्यौ द्वौ नवाक्षरौ पादौ, तृतीयः षड़क्षरः, एवं त्रिपात् या गायत्री, सा नागी इत्युच्यते ॥ १२ ॥

विपरीता वाराही ॥ १३ ॥

इयमेव नागी गायत्री विपरीता सती वाराही नाम भवति। प्रथमः षड़क्षरः, द्वितीयतृतीयौ नवाक्षरौ ॥ १३ ॥

---

৯। কোন বেদে সপ্তাক্ষর তিনপাদে ২১ অক্ষরেও গায়ত্রীছন্দ হয়।

১০। সেই সপ্তাক্ষর ত্রিপাদ গায়ত্রীকে "পাদনিবৃৎ" বলে। প্রয়োগকর্ত্তার শুভাদৃষ্টজ্ঞাপন করার জন্যই এই সংজ্ঞা করা হইয়াছে।

১১। যাহার প্রথম পাদে ছয় অক্ষর, দ্বিতীয় পাদে আট অক্ষর ও তৃতীয় পাদে সাত অক্ষর, এইরূপ ত্রিপাদ গায়ত্রীকে "অতিপাদনিবৃৎ" বলে।

১২। যাহার প্রথম দুইপাদে নয় অক্ষর ও তৃতীয় পাদে ছয় অক্ষর এইরূপ ত্রিপাদ গায়ত্রীকে "নাগী" বলে।

১৩। যাহার প্রথম পাদে ছয় অক্ষর এবং দ্বিতীয় তৃতীয় পাদে নয় অক্ষর এইরূপ গায়ত্রীকে "বারাহী" বলে।

## षट्कसप्तकाष्टकैर्वर्द्धमाना ॥ १४ ॥

षडक्षरः प्रथमः पादः, सप्ताक्षरो द्वितीयः, अष्टाक्षरस्तृतीयः, एवं त्रिभिः पादैर्वर्द्धमाना गायत्री भवति ॥ तत्रोदाहरणम्—

त्वमग्ने यज्ञानां होता विश्वेषां हितः।

देवेभिर्मानुषे जने ॥ ऋ०। ६म०। २अ०। १६सू० ॥ १ ॥ १४ ॥

## विपरीता प्रतिष्ठा ॥ १५ ॥

सैव वर्द्धमाना यदा विपरीता स्यात्तदा प्रतिष्ठा गायत्री भवति। अष्टाक्षरः प्रथमः पादः, द्वितीयः सप्ताक्षरः, तृतीयः षडक्षरः ॥ तत्रोदाहरणम्—

आपः पृणीत भेषजं वरूथं तन्वे३ मम।

ज्योक् च सूर्य्यं दृशे ॥ऋ०।१म०।५अ०।२३सू०॥२१॥१५॥

## तृतीयं द्विपाज्जागतगायत्राभ्याम् ॥ १६ ॥

तृतीयशब्देन एतदध्यायसूत्रपाठक्रमापेक्षया विराजमाह। तथाचोक्तं,—"विराजो दिशः (३।५)" इति। यदा द्वादशाक्षरः अष्टाक्षरश्च पादः स्यात्, ततस्ताभ्यां द्विपात् विराट् नाम गायत्री भवति ॥ तत्रोदाहरणम्—

पश्वा न तायुं गुहा चतन्तं नमो युजानं नमो वहन्तम्।

सजोषाः धीराः पदैरनु ग्मन्नुप त्वा सीदन् विश्वे यजत्राः ॥ ऋ० ॥ १म०। १२अ०। ६५सू० ॥ १ ॥ १६ ॥

---

১৪। যাহার প্রথম পাদে ছয় অক্ষর, দ্বিতীয় পাদে সাত অক্ষর ও তৃতীয় পাদে আট অক্ষর, তাহাকে "বৰ্দ্ধমানা গায়ত্রী" বলে।

১৫। যাহার প্রথম পাদে আট অক্ষর, দ্বিতীয় পাদে সাত অক্ষর ও তৃতীয় পাদে ছয় অক্ষর, তাহাকে "প্রতিষ্ঠা গায়ত্রী" বলে।

১৬। জগতীর একপাদ (দ্বাদশাক্ষর) ও গায়ত্রীর এক পাদ (অষ্টাক্ষর) দ্বারা দ্বিপাদ বিরাট্ নামক গায়ত্রী ছন্দ হয়।

## ত্রিপাত্ ত্রৈষ্টুভৈঃ ॥ ১৭ ॥

একাদশাক্ষরৈঃ পাদৈঃ ত্রিপাত্ বিরাট্ নাম গায়ত্রী ভবতি। তৃতীয়মিতি অনুবর্ত্তনীয়ম্ ॥ তত্রোদাহরণম্—

দুষ্টীয়ন্নিরধিতবে যুবাকু রায়ে চ নো মিমীতং বাজবত্যৈ।

ইষে চ নো মিমীতং ধেনুমত্যৈ ॥ ঋ০। ১ম০। ১৩অ০। ১২০সূ০ ॥ ৯ ॥ ১৭ ॥

ইতি গায়ত্র্যধিকারঃ।

## উষ্ণিগ্গায়ত্রৌ জাগতশ্চ ॥ ১৮ ॥

যত্র গায়ত্রৌ অষ্টাক্ষরৌ পাদৌ, জাগতশ্চ দ্বাদশাক্ষরঃ, এবং ত্রিভিঃ পাদৈঃ উষ্ণিক্ নাম ছন্দো ভবতি। অত্র চ ক্রমো ন বিবক্ষিতঃ। পাদসঙ্খ্যামাত্রং বিধীয়তে ॥ ১৮ ॥

## ককুভ্মধ্যে চেদন্ত্যঃ ॥ ১৯ ॥

গায়ত্রয়োঃ পাদয়োর্মধ্যে জাগতশ্চেত্ পাদো ভবতি, তদা সা উষ্ণিক্ ককুপ্সংজ্ঞাং লভতে ॥ তত্রোদাহরণম্—

সদেবঃ সমদ্বাঽসতি সবীরো নরো মরুতঃ স মর্ত্যঃ।

যং ত্রায়ধ্বে স্যাম তে ॥ ঋ০। ৫ম০। ৪অ০। ৫৪সূ০ ॥ ১৫ ॥ ১৯ ॥

---

১৭। ত্রিষ্টুপ্ ছন্দের তিন পাদে (অর্থাৎ একাদশাক্ষর তিন্পাদে "ত্রিপাদ বিরাট্ গায়ত্রী" ছন্দ হয়।

(এই স্থানেই গায়ত্রী অধিকার সমাপ্ত হইল)

১৮। যাহার দুইপাদ অষ্টাক্ষর ও একপাদ দ্বাদশাক্ষর, এরূপ ত্রিপাদ ছন্দকে "উষ্ণিক্" বলে। এই স্থলে অষ্টাক্ষর ও দ্বাদশাক্ষর পাদের অগ্র পশ্চাৎ কোনও ক্রমের বিবক্ষা নাই।

১৯। যাহার প্রথম ও অন্ত্য পাদ অষ্টাক্ষর এবং মধ্যপাদ দ্বাদশাক্ষর, এরূপ উষ্ণিকের "ককুভ্" সংজ্ঞা হয়।

## पुरउष्णिक् पुरतः ॥ २० ॥

पुरतश्चेत् जागतः पादः स्यात्, गायत्री च परतः, तदा सा पुरउष्णिक्संज्ञां लभते ॥ तत्रोदाहरणम्—

अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तये ।

देवा भवत वाजिनः ॥ ऋ० । १म० । ५अ० । २३सू० ॥१९॥२०॥

## परोष्णिक् परः ॥ २१ ॥

जागतः पादः परश्चेद्भवति, पूर्वौ च गायत्रौ, तदा परोष्णिक् नाम भवति । "उष्णिग्गायत्रौ जागतश्च" (३।१८) इत्यनेन गतार्थमेतत्, विशेषसंज्ञाविधानार्थं पुनरुच्यते । प्रथमसूत्रे उष्णिग्ग्रहणमधिकारार्थम् ॥ तत्रोदाहरणम्—

अग्ने वाजस्य गोमत ईशानः सहसो यहो ।

अस्मे धेहि जातवेदो महि श्रवः ॥ ऋ० । १म० । १२अ० । ७९सू० ॥ ४ ॥ २१ ॥

## चतुष्पादृषिभिः ॥ २२ ॥

सप्ताक्षरैश्चतुर्भिः पादैरुष्णिगेव भवति ॥ तत्रोदाहरणम्—

नदं चतुर्दन्तीनां नर्दं यो युवतीनाम् ।

पतिं वो अघ्न्यानां धेनूनामिषुध्यसि ॥ ऋ० ८।५८।२) ॥२२॥

इति उष्णिगधिकारः ॥

---

२०। যাহার প্রথম পাদ দ্বাদশাক্ষর ও শেষ দুই পাদ অষ্টাক্ষর তাহাকে "পুর উষ্ণিক্" বলে।

২১। যাহার শেষপাদ দ্বাদশাক্ষর ও প্রথম দুই পাদ অষ্টাক্ষর তাহাকে "পরোষ্ণিক্" বলে।

২২। সপ্তাক্ষর চারিপাদেও উষ্ণিক্ছন্দ হয়।

(এখানেই উষ্ণিক্ অধিকার সমাপ্ত হইল)

[ অথ অনুষ্টুবধিকারঃ ]

## অনুষ্টুব্ গায়ত্রৈঃ ॥ ২৩ ॥

চতুষ্পাদিত্যনুবর্ত্ততে। গায়ত্রৈরষ্টাক্ষরৈঃ পাদৈঃ, চতুষ্পাৎ ছন্দঃ, অনুষ্টুপ্সংজ্ঞং ভবতি ॥ তত্রোদাহরণম্—

গায়ন্তি ত্বা গায়ত্রিণোঽর্চন্ত্যর্কমর্কিণঃ।

ব্রহ্মাণস্ত্বা শতক্রত উদ্বংশমিব যেমিরে ॥ ঋ০। ১ম০। ২অ০। ১০সূ০ ॥ ১ ॥ ২৩ ॥

## ত্রিপাৎ ক্বচিজ্জাগতাভ্যাঞ্চ ॥ ২৪ ॥

অনুষ্টুবিত্যনুবর্ত্ততে। গায়ত্রগ্রহণঞ্চ। গায়ত্রেণৈকেন পাদেন, দ্বাভ্যাং জাগতাভ্যাং, ক্বচিৎ ত্রিপাদনুষ্টুবেব স্যাৎ ॥ ২৪ ॥

## মধ্যেঽন্তে চ ॥ ২৫ ॥

জাগতয়োঃ পাদয়োর্মধ্যেঽন্তে চ যদা গায়ত্রঃ পাদো ভবতি, তদাপি অনুষ্টুবেব স্যাৎ। মধ্যপক্ষে উদাহরণম্—

প্রপূষ্ণ প্রধন্ব বাজসাতয়ে।

পবিত্রাণি সচক্ষণিঃ।

দ্বিষস্তরধ্যা ঋণয়া ঈয়সে ॥

অন্তপক্ষে উদাহরণম্—

মা কস্মৈ ধাতমভ্যমিত্রিণে নো মা কুত্রা নো গৃহেভ্যো ধেনবো গুঃ।

---

২৩। যাহার প্রত্যেক পাদেই আট অক্ষর, এরূপ চতুষ্পাদ ছন্দের "অনুষ্টুভ্" সংজ্ঞা হয়।

২৪। অষ্টাক্ষর একপাদ ও দ্বাদশাক্ষর দুইপাদ এই তিন পাদেও কোন স্থলে "অনুষ্টুভ্" হইয়া থাকে।

২৫। যাহার প্রথম ও শেষ পাদ দ্বাদশাক্ষর এবং মধ্যপাদ অষ্টাক্ষর, অথবা প্রথম দুইপাদ দ্বাদশাক্ষরও শেষপাদ অষ্টাক্ষর, এরূপ দ্বিবিধ ছন্দকেও "অনুষ্টুভ্" বলে।

स्तनाभुजो अग्निश्नी: ॥ ऋ० । १म० । १७म० । १२० सू० ॥ ८ ॥ २५ ॥

इत्यनुष्टुबधिकारः ॥

[ अथ बृहत्यधिकारः ]

बृहती जागतस्त्रयश्च गायत्राः ॥ २६ ॥

एको जागतः पादः, त्रयश्च गायत्राः, तदा बृहती नाम छन्दो भवति ॥ २६ ॥

पथ्या पूर्वश्चेत् तृतीयः ॥ २७ ॥

बृहती इत्यनुवर्त्तते। पूर्वः पादो जागतो यदि तृतीयो भवति, अन्ये गायत्राः, तदा असौ बृहती पथ्या नाम छन्दो भवति ॥ २७ ॥

न्यङ्कुसारिणी द्वितीयः ॥ २८ ॥

पूर्वश्चेदित्यनुवर्त्तते। पूर्वश्चेत् जागतः पादः द्वितीयो भवति, शेषाश्च गायत्राः, तदा न्यङ्कुसारिणी नाम्नी बृहती भवति ॥२८॥

स्कन्धोग्रीवी क्रौष्टुकेः ॥ २९ ॥

इयमेव न्यङ्कुसारिणी क्रौष्टुकेराचार्य्यस्य मतेन स्कन्धग्रीवी नाम छन्दो भवति। आचार्य्यग्रहणं पूजार्थम् ॥ २९ ॥

---

২৬। একপাদ দ্বাদশাক্ষর ও তিন্‌পাদ অষ্টাক্ষর হইলে "বৃহতী" নামক ছন্দ হয়।

২৭। যাহার তৃতীয় পাদ দ্বাদশাক্ষর ও অন্য তিনপাদ অষ্টাক্ষর, এরূপ বৃহতীর "পথ্যা" সংজ্ঞা হয়।

২৮। যাহার দ্বিতীয় পাদ দ্বাদশাক্ষর ও অন্য তিন পাদ অষ্টাক্ষর তাহাকে "ন্যঙ্কুসারিণী" নামক বৃহতী বলে।

২৯। ক্রৌষ্টুকি আচার্য্যের মতে এই ন্যঙ্কুসারিণী বৃহতীকেই "স্কন্ধোগ্রীবী" নামকছন্দ বলে।

## उरोबृहती यास्कस्य ॥ ३० ॥

इयमेव न्यङ्कुसारिणी यास्कस्याचार्य्यस्य मतेन उरोबृहती नाम्नी भवति ॥ ३० ॥

## उपरिष्टाद्-बृहत्यन्ते ॥ ३१ ॥

यदा जागतः पादः अन्ते भवति, शेषास्त्र गायत्राः, तदा उपरिष्टात् बृहती नाम भवति ॥ तत्रोदाहरणम्—

सखायस्त्वा ववृमहे देवं मर्त्तास ऊतये ।

अपां नपातं सुभगं सुदीधितिं सुप्रतूर्त्तिमनेहसं ॥ ऋ० । ३ । १ । १ ॥ ३१ ॥

## पुरस्ताद्बृहती पुरः ॥ ३२ ॥

स एव जागतः पादः पूर्व्वस्मिन् भवति, शेषास्त्र गायत्राः, तदा पुरस्ताद्बृहती नाम भवति । "बृहती जागतस्त्रयश्च गायत्राः (३।२५)" इत्यनेनैव मतार्थमेतत् संज्ञाविशेषदर्शनार्थं पुनरुच्यते ॥ ३२ ॥

## क्वचिन्नवकाश्चत्वारः ॥ ३३ ॥

क्वचिद्वेदे नवाक्षराः चत्वारः पादा दृश्यन्ते, सापि बृहत्येव ॥ तत्रोदाहरणम्—

तं त्वा वयं पितो वचोभिर्गावो न हव्या सुषूदिम ।

---

৩০। যাস্ক আচার্য্যের মতে এই ন্যঙ্কুসারিণীকেই "উরোবৃহতী" বলে।

৩১। যাহার শেষপাদ দ্বাদশাক্ষর ও অন্য তিনপাদ অষ্টাক্ষর, তাহাকে "উপরিষ্টাৎ বৃহতী" বলে।

৩২। যাহার প্রথম পাদ দ্বাদশাক্ষর ও শেষ তিন পাদ অষ্টাক্ষর তাহাকে "উপরিষ্টাৎ বৃহতী" বলে।

इन्द्रेभ्यस्त्वा सधमादमस्मभ्यं त्वा सधमादम् ॥ ऋ० १ । १८ । २१ ॥ ३३ ॥

## वैराजौ गायत्रौ च ॥ ३४ ॥

यत्र वैराजौ पादौ, पूर्वौ दशाक्षरौ भवतः, ततो गायत्रौ च सापि बृहती ॥ ३४ ॥

## त्रिभिर्जागतैर्महाबृहती ॥ ३५ ॥

त्रिभिर्जागतैः पादैः छन्दो महाबृहती नाम ॥ ३५ ॥

## सतोबृहती ताण्डिनः ॥ ३६ ॥

इयमेव बृहती ताण्डिन आचार्यस्य मते सतोबृहती नाम भवति ॥ ३६ ॥

इति बृहत्यधिकारः ॥

[ अथ पङ्क्त्यधिकारः ]

## पङ्क्तिर्जागतौ गायत्रौ च ॥ ३७ ॥

यदा द्वौ जागतौ पादौ तथा गायत्रौ च, तदा पङ्क्तिर्नाम छन्दः ॥ ३७ ॥

## पूर्वौ चेदयुजौ सतःपङ्क्तिः ॥ ३८ ॥

यदा पूर्वोद्दिष्टौ पादावयुजौ भवतः, प्रथमतृतीयौ पादौ जागता-

---

৩৩। কোন বেদে চারিপাদেই নয় অক্ষর দেখা যায়, তাহাকেও বৃহতী বলে।

৩৪। যাহার প্রথম দুইপাদ দশাক্ষর ও পরের দুইপাদ অষ্টাক্ষর, তাহাকেও বৃহতী বলে।

৩৫। দ্বাদশাক্ষর তিনপাদে "মহা বৃহতী" ছন্দ হয়।

৩৬। তাণ্ডিন মুনির মতে এই বৃহতীকেই "সতোবৃহতী" বলে।

৩৭। যাহার দুইপাদ দ্বাদশাক্ষর ও দুইপাদ অষ্টাক্ষর তাহাকে "পংক্তি" ছন্দ বলে।

वित्यर्थः । द्वितीयचतुर्थौ च गायत्रौ, तत् छन्दः सतःपङ्क्ति-र्नाम ॥ ३८ ॥

विपरीतौ च ॥ ३९ ॥

यदा तावेव पादौ विपरीतौ भवतः, तदापि सतःपङ्क्ति-रेव । अयमर्थः, प्रथमतृतीयौ पादौ गायत्रौ, द्वितीयचतुर्थौ जागतौ ॥ ३९ ॥

आस्तारपङ्क्तिः परतः ॥ ४० ॥

यदा जागतौ पादौ परौ भवतः, गायत्रौ च पूर्वौ, तदा आस्तार-पङ्क्तिर्नाम ॥ ४० ॥

प्रस्तारपङ्क्तिः पुरतः ॥ ४१ ॥

यदा जागतौ पादौ पूर्वौ भवतः, गायत्रौ च परतः, तदा प्रस्तार-पङ्क्तिर्नाम ॥ "पङ्क्तिर्जागतौ गायत्रौ च (३।३७) इत्यनेन गतार्थमिदं, सञ्ज्ञाविशेषज्ञापनार्थं पुनरुच्यते ॥ ४१ ॥

विष्टारपङ्क्तिरन्तः ॥ ४२ ॥

यदा जागतौ पादौ मध्ये भवतः, आद्यन्तयोश्च गायत्रौ, तदा विष्टारपङ्क्तिर्नाम ॥ ४२ ॥

---

৩৮। যাহার প্রথম ও তৃতীয় পাদ দ্বাদশাক্ষর এবং দ্বিতীয় ও চতুর্থ পাদ অষ্টাক্ষর, সেই ছন্দকে "সতঃ-পংক্তি" বলে।

৩৯। যাহার প্রথম ও তৃতীয় পাদ অষ্টাক্ষর এবং দ্বিতীয় ও চতুর্থ পাদ দ্বাদশাক্ষর, তাহাকেও "সতঃ-পংক্তি" বলে।

৪০। যাহার প্রথম দুইপাদ অষ্টাক্ষর ও পরের দুইপাদ দ্বাদশাক্ষর তাহাকে "আস্তার-পঙ্‌ক্তি" বলে।

৪১। যাহার প্রথম দুইপাদ দ্বাদশাক্ষর ও পরের দুইপাদ অষ্টাক্ষর, তাহাকে "প্রস্তারপংক্তি" বলে।

৪২। যাহার প্রথম ও চতুর্থ পাদ অষ্টাক্ষর এবং দ্বিতীয় ও তৃতীয় পাদ দ্বাদশাক্ষর তাহাকে "বিষ্টারপংক্তি" বলে।

संस्तारपङ्क्तिर्बहिः ॥ ४३ ॥

यदा तावेव जागतौ पादौ बहिर्भवतः, मध्ये च गायत्रौ, तदा संस्तारपङ्क्तिर्नाम छन्दः ॥ ४३ ॥

अक्षरपङ्क्तिः पञ्चकाश्चत्वारः ॥ ४४ ॥

पञ्चाक्षरैश्चतुर्भिः पादैः अक्षरपङ्क्तिर्नाम छन्दः। ननु चत्वारिंशदक्षरा पङ्क्तिश्छन्दः, तत् कथं पञ्चकाश्चत्वार इति उच्यते। तत्रोत्तरम्। "द्वावप्यल्पशः" (३।४५) इत्यस्मात् सिंहावलोकितन्यायेनाल्पग्रहणमनुवर्त्तते, तेन पङ्क्तेरल्पत्वं विशेषात् प्रतिपादितं भवति ॥ ४४ ॥

द्वावप्यल्पशः ॥ ४५ ॥

पञ्चग्रहणमनुवर्त्तते। पञ्चाक्षराभ्यां पादाभ्यां अल्पशः पङ्क्तिर्नाम छन्दो भवति, क्वचिदेव वेदे न सर्वत्र ॥ ४५ ॥

पदपङ्क्तिः पञ्च ॥ ४६ ॥

पञ्चका इत्यनुवर्त्तते। यदा पञ्चाक्षराः पञ्च पादा भवन्ति, तदा पदपङ्क्तिर्नाम छन्दः ॥ ४६ ॥

चतुष्कषट्कौ त्रयश्च ॥ ४७ ॥

चकारः पञ्चका इत्यनुकर्षणार्थः। यदा प्रथमश्चतुरक्षरः

---

৪৩। যাহার প্রথম ও চতুর্থপাদ দ্বাদশাক্ষর এবং দ্বিতীয়পাদ ও তৃতীয়পাদ অষ্টাক্ষর তাহাকে "সংস্তারপংক্তি" বলে।

৪৪। পঞ্চাক্ষর চারিপাদে "অক্ষরপংক্তি" ছন্দ হয়।

৪৫। পঞ্চাক্ষর দুইপাদে "অল্পশঃপংক্তি" ছন্দ হয়। বেদের কোন কোন স্থলেই এই ছন্দের ব্যবহার দেখা যায়, ইহা সর্ব্বত্র ব্যবহৃত নহে।

৪৬। পঞ্চাক্ষর পাঁচ পাদে "পদপংক্তি" নামক ছন্দ হয়।

পাদঃ, দ্বিতীয়ঃ ষড়ক্ষরঃ, ততঃ ত্রয়ঃ পঞ্চাক্ষরাঃ, তদা পঞ্চপদা পঙ্‌ক্তিরেব ॥ ৪৭ ॥

## পথ্যা পঞ্চভির্গায়ত্রৈঃ ॥ ৪৮ ॥

পঞ্চভিরষ্টাক্ষরৈঃ পাদৈঃ পথ্যা নাম পঙ্‌ক্তির্ভবতি। অস্যোদাহরণম্—

অক্ষন্নমীমদন্ত হ্যোতি ॥ ( ঋ০ ১।৮২।২॥ ৪৩ ॥

ইতি পঙ্‌ক্ত্যধিকারঃ ॥

[ অথ ত্রিষ্টুব্‌জগত্যধিকারঃ ]

## জগতী ষড়্‌ভিঃ ॥ ৪৯ ॥

গায়ত্রৈরিত্যনুবর্ত্ততে। গায়ত্রৈঃ ষড়্‌ভিঃ পাদৈর্জগতী নাম ছন্দো ভবতি ॥ ৪৯ ॥

## একেন ত্রিষ্টুব্-জ্যোতিষ্মতী ॥ ৫০ ॥

ত্রিষ্টুভঃ প্রস্তুতত্বাৎ প্রত্যাসত্তেশ্চ তস্যা এব সম্বন্ধঃ। একেন ত্রৈষ্টুভেন পাদেনাধিকারাৎ চতুর্ভির্গায়ত্রৈঃ পঞ্চপাৎ ত্রিষ্টুপ্ জ্যোতিষ্মতী নাম। ত্রৈষ্টুভেন সহ পঞ্চভির্গায়ত্রৈরিত্যুক্তে চত্বার এব গায়ত্রাঃ পাদা লভ্যন্তে। যথা উপাধ্যায়েন সহ পঞ্চ শিষ্যা আগতা ইত্যুক্তে উপাধ্যায়পঞ্চমাঃ প্রতীয়ন্তে ॥ ৫০ ॥

## তথা জগতী ॥ ৫১ ॥

একেন জাগতেন পাদেন চতুর্ভির্গায়ত্রৈঃ, পঞ্চপাজ্জগতী জ্যোতিষ্মতী নাম ॥ ৫১ ॥

---

৪৭। যাহার প্রথমপাদে চারি অক্ষর, দ্বিতীয় পাদে ছয় অক্ষর ও পরের তিন পাদে পাঁচ অক্ষর, সেই পঞ্চপাদ ছন্দকেও "পংক্তি" বলে।

৪৮। অষ্টাক্ষর পাঁচপাদে "পথ্যা" নামক পংক্তি ছন্দ হয়।

৪৯। অষ্টাক্ষর ছয়পাদে "জগতী" নামক ছন্দ হয়।

৫০। একাদশাক্ষর একপাদ ও অষ্টাক্ষর চারিপাদ, এই পাঁচপাদে "জ্যোতিষ্মতী" নামক ত্রিষ্টুপ্ ছন্দ হয়।

## पुरस्ताज्ज्योतिः प्रथमेन ॥ ५२ ॥

प्रथमेन त्रैष्टुभेन पादेन शेषैश्च गायत्रैः, पुरस्ताज्ज्योतिर्नाम त्रिष्टुप् भवति। पूर्वेणैव गतार्थत्वात् विशेषसंज्ञाज्ञापनार्थमिदम्। तथा जगती इत्यनुवर्त्तनीयम्। तेनाद्येन जागतेन पादेन चतुर्भिश्च गायत्रैः पुरस्ताज्ज्योतिर्नाम जगती भवति ॥५२॥

## मध्येज्योतिर्मध्यमेन ॥ ५३ ॥

यदा मध्यमः त्रैष्टुभः पादो भवति, उभयतश्च द्वौ द्वौ गायत्रौ, तदा मध्येज्योतिर्नाम त्रिष्टुप् भवति। मध्येज्योतिरिति अलुक्-समासः। तथा जगती इत्यनुवर्त्तनीयम्। तेन मध्यमेन जागतेन उभयतश्च द्वौ द्वौ गायत्रौ तदा मध्येज्योतिर्नाम जगती भवति ॥ ५३ ॥

## उपरिष्टाज्ज्योतिरन्तेन ॥ ५४ ॥

यदा चत्वारो गायत्राः पादाः भवन्ति, अन्ते च त्रैष्टुभः, तदा उपरिष्टाज्ज्योतिर्नाम त्रिष्टुब् भवति। तथा जगती इति अनुवर्त्तनीयम्। तेनान्तेन जागतेन, शेषैश्च गायत्रैश्चतुर्भिः, उपरिष्टाज्ज्योतिर्नाम जगती भवति ॥ ५४ ॥

---

৫১। দ্বাদশাক্ষর একপাদ ও অষ্টাক্ষর চারিপাদ এই পাঁচ পাদে "জ্যোতিষ্মতী" নামক জগতীছন্দ হয়।

৫২। যাহার প্রথমপাদে একাদশাক্ষর ও শেষ চারিপাদে অষ্টাক্ষর, তাহাকে "পুরস্তাজ্জ্যোতি" নামক ত্রিষ্টুভ্ বলে। এবং যাহার প্রথমপাদে দ্বাদশাক্ষর ও শেষ চারিপাদে অষ্টাক্ষর তাহাকে "পুরস্তাজ্জ্যোতি" নামক জগতী বলে।

৫৩। যাহার প্রথম দুইপাদ ও শেষ দুইপাদ অষ্টাক্ষর এবং মধ্যের পাদ একাদশাক্ষর তাহাকে "মধ্যেজ্যোতি" নামক ত্রিষ্টুভ্ বলে, এবং যাহার প্রথম দুইপাদ ও শেষ দুইপাদ অষ্টাক্ষর এবং মধ্যের পাদ দ্বাদশাক্ষর তাহাকে "মধ্যেজ্যোতি" নামক জগতী বলে।

৫৪। যাহার প্রথম চারিপাদ অষ্টাক্ষর ও শেষপাদ একাদশাক্ষর তাহাকে

## একস্মিন্ পঞ্চকে ছন্দঃ শঙ্কুমতী ॥ ৫৫ ॥

যদৈকঃ পঞ্চাক্ষরঃ পাদো ভবতি, ত্রয়শ্চ ষড়ক্ষরাঃ, তদা শঙ্কুমতী নাম গায়ত্রী। ছন্দোগ্রহণে প্রকৃতে পুনঃ ছন্দোগ্রহণং ছন্দোমাত্রপ্রতিপত্ত্যর্থম্। তেন সর্বেষু ছন্দঃসু পঞ্চাক্ষরৈকপাদলক্ষিতা শঙ্কুমতী ভবতি। ইতরথা হি অনন্তরং সম্প্রত্যয়ঃ স্যাৎ ॥ ৫৫ ॥

## ষট্কে ককুম্মতী ॥ ৫৬ ॥

একস্মিন্ ষড়ক্ষরে পাদে অন্যেষু যথালক্ষণমুপাত্তেষু ছন্দোমাত্রং ককুম্মতী নাম ভবতি ॥ ৫৬ ॥

## ত্রিপাদণিষ্ঠমধ্যা পিপীলিকমধ্যা ॥ ৫৭ ॥

যদা আদ্যন্তৌ পাদৌ বহ্বক্ষরৌ, মধ্যমোঽল্পতরাক্ষরস্তদা অণিষ্ঠমধ্যা সতী পিপীলিকমধ্যা নাম ভবতি। অয়মর্থঃ, আদ্যন্তৌ পাদৌ অষ্টাক্ষরৌ, মধ্যমস্ত্র্যক্ষরঃ, এবং ত্রিপাদ্‌গায়ত্রী পিপীলিকমধ্যা নাম ভবতি। এবং চতুরক্ষরে পঞ্চাক্ষরে অপি মধ্যমে পাদে পিপীলিকমধ্যা সিধ্যতি। যৎ কিঞ্চিৎত্রিপাৎ ছন্দো লঘুমধ্যমপাদং, তৎসর্বং পিপীলিকমধ্যমুচ্যতে ॥ ৫৭ ॥

---

"উপরিষ্টাজ্জ্যোতি" নামক ত্রিষ্টুভ্ বলে, এবং যাহার প্রথম চারিপাদ অষ্টাক্ষর ও শেষপাদ দ্বাদশাক্ষর তাহাকে "উপরিষ্টাজ্জ্যোতি" নামক জগতী বলে।

৫৫। পঞ্চাক্ষর একপাদ ও ষড়ক্ষর তিনপাদে "শঙ্কুমতী" নামক গায়ত্রীচ্ছন্দ হয়। ছন্দ অধিকার সত্ত্বেও এই সূত্রে ছন্দঃশব্দের পুনরায় উপাদান সামান্য ছন্দের পরিগ্রহার্থ, সুতরাং সমস্ত ছন্দের যথোক্ত ত্রিপাদই পঞ্চাক্ষর এক পাদের সহিত মিলিত হইলে শঙ্কুমতী নামক তত্তৎ ছন্দ হইবে।

৫৬। ষড়ক্ষর একপাদের সহিত মিলিত হইলে যথোক্ত লক্ষণ সমস্ত ছন্দেরই "কুকুম্মতী" সংজ্ঞা হয়।

৫৭। যাহার আদি ও অন্তপাদ বহ্বক্ষর এবং মধ্যপাদ অল্পাক্ষর এরূপ গায়ত্রীকে "পিপীলিকমধ্যা" বলে। যেমন যাহার প্রথম ও শেষপাদ অষ্টাক্ষর

## विपरीता यवमध्या ॥ ५८ ॥

आद्यन्तौ पादौ लघ्वक्षरौ, मध्यमस्तु बह्वक्षरः, सा गायत्री यवमध्या नाम भवति। एवमुष्णिगादिष्वपि योज्यम् ॥ ५८ ॥

## ऊनाधिकेनैकेन निचृद्भुरिजौ ॥ ५९ ॥

चतुर्विंशत्यक्षरा गायत्री, एकेनाक्षरेण न्यूनेन, सा निचृदिति विशेषसञ्ज्ञां लभते। एकेनाधिकेन भुरिगिति। एवमुष्णिगादिष्वपि द्रष्टव्यम् ॥ ५९ ॥

## द्वाभ्यां विराट्स्वराजौ ॥ ६० ॥

ऊनाधिकग्रहणमनुवर्त्तते। द्वाभ्यामक्षराभ्यां ऊनाधिकाभ्यां गायत्री यथाक्रमं विराट्स्वराट्सञ्ज्ञा भवति ॥ ६० ॥

## आदितः सन्दिग्धे ॥ ६१ ॥

यदा षड्विंशत्यक्षरं छन्दो भवति, तदा किं प्रतिपत्तव्यं, किं गायत्री स्वराट्, उत उष्णिक् विराट् इति। एवं सन्दिग्धे सति छन्दसि आदिभूतात् पादात् निर्णयः कर्त्तव्यः। यदि प्रथमः पादो

---

এবং মধ্যপাদ ত্র্যক্ষর এইরূপ ত্রিপাদ গায়ত্রীর নাম "পিপীলিকমধ্যা, এবং অন্যান্য সমস্ত ত্রিপাদ ছন্দেরও মধ্যপাদ অল্পাক্ষর হইলেই পিপীলিকমধ্যা সংজ্ঞা হইবে।

৫৮। যাহার আদি ও অন্তপাদ অল্পাক্ষর এবং মধ্যপাদ বহ্বক্ষর, এরূপ গায়ত্রীর নাম "যবমধ্যা", এবং উষ্ণিক্ প্রভৃতি ছন্দেরও মধ্যপাদ বহ্বক্ষর হইলে "যবমধ্যা" সংজ্ঞা হইবে।

৫৯। চতুর্বিংশ অক্ষর গায়ত্রীর এক অক্ষর কম হইলে "নিচৃৎ" ও এক অক্ষর অধিক হইলে "ভুরিক" এইরূপ বিশেষ সংজ্ঞা হয়। উষ্ণিক্ প্রভৃতি ছন্দেরও এইরূপ জানিবে।

৬০। দুই অক্ষর কম ও দুই অক্ষর অধিক হইলে যথাক্রমে গায়ত্রীছন্দের বিরাট্ ও স্বরাট্ সংজ্ঞা হয়।

গায়ত্রঃ, তদা গায়ত্র্যেবাসৌ। অথ উষ্ণিক্ তদা উষ্ণিগিতি। এবং সর্বত্র ॥ ৬১ ॥

## দৈবতাদিতশ্চ ॥ ৬২ ॥

ইদমপরং নির্ণয়নিমিত্তমুচ্যতে। সন্দিগ্ধে ছন্দসি দৈবতাদেশ্চ নির্ণয়ঃ কর্ত্তব্যঃ। আদিগ্রহণং স্বরাদিপরিগ্রহার্থম্ ॥ ৬২ ॥

কস্য ছন্দসঃ কা দেবতা যথা নির্ণয়ঃ কর্ত্তব্যঃ ইত্যপেক্ষায়ামিদমুচ্যতে ॥

## অগ্নিঃ সবিতা সোমো বৃহস্পতির্বরুণ ইন্দ্রো বিশ্বেদেবাঃ ॥ ৬৩ ॥

গায়ত্র্যাদীনাং জগতীপর্য্যন্তানাং যথাক্রমমগ্ন্যাদয়ো দেবতা বেদিতব্যাঃ। তত্র সন্দিগ্ধে ছন্দসি, যদা আগ্নেয়ং তদা গায়ত্রী, যদি সাবিত্রং তদা উষ্ণিক্। এবং সর্বত্র। বৈদিকেষ্বেব ছন্দঃসু নিচৃদ্ভুরিজৌ, তথা বিরাট্‌স্বরাজৌ দৃশ্যেতে, ন লৌকিকেষু। অতো লৌকিকেষু সন্দেহাভাবাত্ নির্ণয়নিমিত্তভূতা দৈবতাদয়ো নেষ্যন্তে ॥ ৬৩ ॥

---

৬১। যখন ছাব্বিশ অক্ষরে ছন্দ হয়, তখন যেমন দুই অক্ষর অধিক ধরিলে স্বরাট্ গায়ত্রীছন্দ হইতে পারে, তেমন দুই অক্ষর কম ধরিলে বিরাট্ উষ্ণিক্‌ও হইতে পারে, সুতরাং তখন কোন্ ছন্দ হইবে এই সন্দেহে আদি পাদের দ্বারা ছন্দের নির্ণয় করিতে হইবে, অর্থাৎ যদি গায়ত্রীর প্রথমপাদ হয়, তবে গায়ত্রী, আর যদি উষ্ণিকের প্রথমপাদ হয়, তবে উষ্ণিক্ হইবে। অন্যান্য সন্দিগ্ধ স্থানেও এরূপ ভাবেই সন্দেহের নিরাস করিতে হইবে।

৬২। দেবতাদি দ্বারাও সন্দিগ্ধ স্থলের ছন্দোনির্ণয় করিতে হইবে। আদি শব্দ স্বরাদির পরিগ্রাহক।

৬৩। দেবতা দ্বারা ছন্দের নির্ণয় করিতে হইলেই কোন্ ছন্দের কোন্ দেবতা তাহা জানা আবশ্যক, অতএব দেবতানির্ণয়ের জন্য এই সূত্রের অবতারণা। গায়ত্রী হইতে জগতী পর্য্যন্ত পূর্ব্বোক্ত সাত প্রকার ছন্দের যথা-

# आर्य्यप्रभा ।

चतुर्थवर्ष । सुदुर्लभाः सर्व्वमनोरमा गिरः । ३य संख्या ।

## स्त्रीसभ्यता ।

सर्व एव हिन्दुधर्म्मावलम्बिनो विशेषतः संस्कृत-विद्यार्थिनो विद्वांस एवं गर्वभावहन्ति चेतसु, यद् यसां देशानामभ्युदयात्प्रागेव भारतीया हिन्दवः सभ्यताया उन्नततमं सोपानमधिरुरुहुः, वयमपि पुनः क्रमशस्तदधिरोक्ष्याम इति। किन्तु विदाङ्कुर्वन्तु ते पुराणसभ्यतासोपानमधिरूढवो हिन्दुधर्म्मपक्षपातिनः कथन्नाम तच्छक्नुयुः ? साम्प्रतं पाश्चात्यविद्याशिक्षामधिगम्य स्त्रियः क्षणे क्षणे नूतनां सभ्यतां सृजन्ति, यया च न्यक्क्रियन्ते आर्यसभ्यताशील-शालिन्यो महिलाः ।

हन्त ! क्वाधुना तत्पुराणपरिच्छदादिकम् ? क्व वा कर्पूरकुङ्कुम-मृगनाभिमलयजादिकैः स्वाऽङ्गरचना ? क्व वा सत्कुलप्रसूतानामार्य-विदुषीणान्तासान्तदसूर्य्यम्पश्यत्वम् ?——साम्प्रतं हि पाश्चात्यवनिता-वसनोपानहादिपरिधानानुकरणेनाऽऽत्मानं सभ्यं मन्यन्ते, न तावत्पार-तन्त्र्यमुररीकर्त्तुमिच्छन्ति, समयपरिपालनार्थन्न तादृक् पतिष्वनु-रज्यन्ति, असकृत्पाश्चात्यशब्दोच्चारणेन दिव्यं मन्यन्ते आत्मानम् ।

यदि च विमुखभागधेयतया वयसा वपुषा विद्ययाऽन्येन वा केनचिद्गुणेन विसदृशं भर्त्तारमासादयेयुस्तदा सर्वथा तमुपहसन्ति निन्दन्ति न्यक्कुर्वन्ति तृणाय च मन्यन्ते। विद्यया च बुद्धिवैशद्य-लाभात् भृत्यमिव मूर्द्धानं पदे पदे पादेनाक्रम्यारुरुक्षन्ति, किं बहुना विद्वानपि गुणाकरोऽपि सुशीलोऽपि मेधाव्यपि अङ्गविकलादिदोष-

रहितोऽपि भर्त्ताऽनधिगताऽऽङ्गविद्यश्चेदेताभिर्ज्ञानलवदुर्विदग्धाभि- रतत्त्वज्ञ इति उपहस्यते, पशुरिव च परिभूयते, अपि च काश्चिदधि- गताङ्गविद्यत्वात्पुरुषैः सममात्मानं कल्पयन्त्यो धूर्त्तानामाभिजात्य- मप्युपगच्छन्ति। स्त्रियश्च काश्चित्पाश्चात्यविद्यासलिलविमलीकृत मतयो भर्त्तृभिः पूज्या भूषणाच्छादनादिभिरिति पुरुषा अपि स्त्रीणामाराधने नियुज्यन्ते। स्वैररीत्या यत्र कुत्राऽपि पर्य्यटन्त्यो- ऽकाण्डे कञ्चित्पाश्चात्यविद्याविद्योतितं पुरुषं विलोक्य पाणौ तस्य स्वपाणिं निधाया"ऽऽङ्गल"शब्दोच्चारणेन सानन्दं परिपीड़यन्ति पाणिम्।

यान् प्राणाधिकान् स्तनन्धयान् विलोलकुन्तलान् आत्मजान् बालान् आ-प्रसवादुत्सङ्गे नीत्वा स्तन्यपानैर्लालनपालनादिभिश्चाहर्निश- मात्यन्तिके शाययित्वा क्षणमपि नेत्रपथादवियोगीकृत्य प्राणेभ्योऽपि अधिकतरान्मन्यमाना लज्जाशीलैकधना आसन् या आर्य्यमहिलाः— साम्प्रतं क्व सा परिपाटी लज्जाविधुराणां कुलवतीनान्तासां, प्रसव- मात्रेण पुत्रान् धात्रीसात्कृत्य पुनर्यथावस्थमासादयन्ति नार्य्यः, न स्तन्यं पाययन्ति, न वा उत्सङ्गे निदधति, न दिवसमध्ये सकृदप्यवलोकयन्ति, सत्येवं कथमपत्येषु प्रगाढ़स्नेहः सम्भविष्यति नारीणां? स्वमातृस्तन्य- पानं विना च धात्रीदुग्धपानेन कथं वा ते बाला गाम्भीर्य्यादिगुण- शालिनो मेधाविनश्च भवेयुः।

एवं बहुविधाः सभ्यता दृश्यन्ते साम्प्रतं स्त्रीषु, यावत् न इमाः नूतनाः सभ्यताः स्त्रीभ्यो निराकृतास्तावत्कथन्नाम तेऽत्र भवन्त- श्चिरन्तनसभ्यतासोपानमारोहणसमुत्सुकास्तां पदवीं लभेरन्? अतो यतितव्यं प्रथमं संस्कृतशिक्षादानेन यथास्याः पुनः परिवर्त्तनं भवेत्॥

व्याकरण-साहित्य-शास्त्रिणः—

श्री-आदित्यप्रसाद-शर्मणः,

जम्बुकातावासवासिनः।

## कौतुककणा। ( सगुड़-पिष्टकम् )।

सप्तमवर्षीय-बालकस्य गोवर्द्धनस्याभवदेकदा सगुड़-पिष्टकभक्षणे बलवती स्पृहा। किन्तु हा कष्टम्! यदैव स तत्कथनाय मातरमुपागच्छत्तदैव किमिति भक्षयिष्यति तन्नोदेति स्वकीय-स्मृतिपथे। एवं विस्मृत वृत्तान्तः स प्रतिदिनमेव मनसि प्रालपत्, रहसि चाक्रन्दत्।

पुत्रस्य भावान्तरं लक्षीकृत्य "वत्स गोवर्द्धन! किन्ते जातम्, किं वा वस्तु भक्षयिष्यसी"त्येवं जनन्या बहुशः पृष्टोऽपि सर्व्वास्वेव कथास्वसम्मतिं प्रकाशयन् स दृढं प्रहृतः। अदूरादेव श्रुत्वा गोवर्द्धनस्य सनिर्वेदं परिवाहितरवं पिता समीपमागत्य स्वभार्य्यामनिन्दत्—"कथमेवमयं ताड्यते त्वया? हा हन्त! गण्डद्वयमस्य सगुड़-पिष्टकवत् परिदृश्यते।

इत्येवमुक्ते पितरि परित्यक्ताक्रन्दनतया स्मितमुखमण्डलो गोवर्द्धन आह—"हुं स्मृतिपथमायातन्तद्-मातः! अहं सगुड़-पिष्टकं भक्षयिष्यामीति॥"

---

## वञ्चक-दशा।

कस्मिंश्चिदधिष्ठाने द्वावन्धौ लोकान् याचित्वाऽर्ज्जितेनार्थेन जीविकां निर्व्वाहयतः। एकदा तु कुबुद्धिपरतन्त्रस्तयोः प्रथमः द्वितीयस्य हस्तादेकां ताम्रमुद्रां तुष्णीमग्रहीत्। द्वितीयस्तु सविषादन्तमकथयत्—कथं रे लम्पट! मम हस्तादाच्छिद्य तस्करेणेव त्वया ताम्रमुद्रा गृहीता?

प्रथमः—कथमन्धेनापि त्वयैतत् दृष्टम्?

द्वितीयः—त्वया यदिमद्धनमपहर्त्तुं शक्यते तदा मम दर्शनेनैव का क्षतिः?

अथ ताभ्यां किञ्चिद्दातुं समुत्सुकः कश्चित् पथिकस्तयोरीदृशालापश्रवणेन जातसन्देहः कतिपयैर्मिलित्वा तौ द्वावेव भृशं प्रहारयामास, तयोरक्षिचतुष्टयञ्च समुत्पाट्य नगरात् सनिकारं ताड़यामास।

## प्रभु-भृत्य-संवादः।

प्रभुर्निधिरामशर्म्मा सभृत्यः शिष्यभवनमागत्य रन्धनकाले "किञ्चित्काष्ठमानय" इति भृत्यमादिदेश, भृत्यस्तु "(अहं) जपे तिष्ठामि साम्प्रत"मिति च्छलोक्त्या जोषं स्थितः।

अथ रात्रौ शयित्वा शर्म्मणा प्रदीपनिर्व्वाणाय समादिष्टो भृत्योऽकथयत्—"भोः कर्त्तृमहाशय, नेत्रद्वयं निमील्यतां, तदाऽन्धकारमयमेव सर्व्वं दृश्यते।" पुनस्तु शर्म्मा भृत्यमादिदेश—"रे नित्यधाम! बहिर्गत्वा दृश्यतान्तावत् तत्र किं वृष्टिर्भवति? भृत्यस्तूत्तरयाञ्चकार—गृहमध्यमागतं मार्ज्जारमेकं स्पृष्ट्वा आर्द्रशरीरतया वृष्टिपतनमेवानुमिनोमि।

ततः शर्म्मणा गृहार्गलबन्धने समादिष्टो भृत्यः प्राञ्जलिराह—"मया तु द्वे कर्म्मणी कृते, मयि कृपयेदं कर्म्म यदि भवतैव सम्पन्नं स्यात्तदाऽहं नितरां सुखी भविष्यामि।"

तदा सम्यग् विभाव्य सर्व्वं निधिरामशर्म्मा तु अग्निशर्म्मा भूत्वा नित्यधामं नित्यधामाख्यमेव स्थानं प्रापयामास।

---

## धूर्त्त-विवरणम्।

कदाचित् शीतसमयस्य मध्यरजन्यां ताम्रकूटधूमपिपासुः कश्चिद्धूर्त्तो नगरमयं परिभ्राम्य यदा कुत्राप्यनलं न लेभे, "तदाग्निरग्नि"रिति कृत्वा उच्चैर्निनदितुमारेभे। नगरजनाश्च प्रायः सर्व्व एवैतद्भीषणनादमाकर्ण्य सलिलहस्ताः "कुत्राग्निसंयोगः, कस्य भवनेऽग्निः संघटितः" इत्यादि सव्यस्तं बहुशः पृष्ट्वापि नोत्तरं प्रापुः। स धूर्त्तोऽपि तदोद्घाटितसकलकपाटतया स्वाभीष्टं सम्पाद्य स्वस्थानं प्रतस्थे।

सिद्धान्तवागीशोपनाम-

श्रीसुरेन्द्रमोहन-व्याकरणतीर्थस्य,

ढाका आलगी-ग्रामवासिनः।

# प्रतिभा।

वैशाखात् परम।

किन्तु तयोश्चिकित्सकानाञ्च सर्व्वः प्रयासो विफलप्रायः। बहु-चिकित्सादिनापि तद्देहस्य किमपि परिवर्त्तनं न जातं। क्रमशो मार्त्तण्डः प्रचण्डातपेन सर्व्वान् सन्तप्य परोपतापित्वफलमिवाधः-पातं लब्धवान्। तदधःपातेन च अन्येषां कथञ्चित् सन्तापनिवृत्ता-वपि सदानन्दनिलयोपस्थितानां सर्व्वेषामेव मनस्तापः समवर्द्धत। सर्व्वे एव तदानीं तस्या जीवने निराशाः सन्तः क्रमशः स्वस्व-निवासं जग्मुः। यदा चिकित्सका अपि निरुत्साहा "अस्या जीवनाशा नास्ती"त्यब्रुवंस्तदा सरलाया वक्षःस्थलं चक्षुर्जलेना-प्लावितं। तदानीञ्च निष्प्रभेव इन्दुप्रभा कञ्चन असावनीयम भावमनु-भवन्ती प्रमुक्तकण्ठं रोदितुमारेभे। तयोः क्रन्दनेन तत्र स्थिताः केऽपि चक्षुर्जलं सम्बरितुं न प्राभवन्। तस्या आकृतेरेवं कमनीयता, यत्तां पश्यत एव स्वतः स्नेहभावः समुदेति, किं पुनरेवं परिचरन्त्योस्तयोः।

तदवलोक्य च सदानन्दो मनसा विशेषतः खिद्यमानोऽपि सरला-मिन्दुप्रभाञ्च सान्त्वयितुमन्तर्निगृह्य तद्दुःखभारमभाषत—अयि! कथमेतदर्थं व्यर्थं क्रन्दथः? संसारे कोऽपि चिरं स्थातुं नायातः, सर्व्वेषामेवैवं परिणतिः सम्पत्स्यते, "अद्य वाब्दशतान्ते वा मृत्युर्व्वै प्राणिनां ध्रुव" इति मरणे शोकः सम्मतोवाविवेकपरिचायकः। विशेषतस्तु दृश्यताम्—किं नाम मरणं? आत्मा तु नित्यस्तस्य विनाशात्मकं मरणं न सम्भवति, परन्तु "तत्शरीरसम्बन्धत्याग" एव तत्शरीरावच्छिन्नात्मनो मरणमिति व्यवह्रियते। यथाह भगवान्—

"वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही।"

सुतरां मरणे नात्मनः कथमपि क्षय इति नास्ति तदर्थं शोककारणं। "यद्येवं कथं हृद्यस्य मरणे खिद्यन्ते लोका" इति यदि युवयोरनु-

योगस्तदा श्रूयताम्—तेनैव तत्शरीरसम्बन्धत्यागेन संसारबन्धन-निदानस्य पुत्रकलत्रादिरूपसम्बन्धस्यापि विगमो भवेदिति मोहान्धा लोका यथायथं लौकिकस्वार्थभ्रान्त्या तदर्थं क्रन्दन्ति। नो चेत् कथं सर्वेषां मरणे सर्वे न क्रन्देयुः? एतादृगेव माया-बन्धनं यत्तेनैवाभिभूता लोकाः "का तव कान्ता कस्ते पुत्रः संसारोऽय-मतीव चित्र" इति वाक्यस्य सारमस्मरन्त एव "हा मे पुत्रो मृतः, हा मे कलत्रं मृतं, हा मे भ्राता मृत" इति वृथा विलपन्ति। अत्र तु युवयोस्तादृशः कश्चिद् यौनः सम्बन्धोऽपि नास्ति, तत् कथमेवं विल-प्यते? परित्यज्यतां वृथा शोकः, यथा च निस्स्वार्थतो यथासाध्यमस्याः परिचर्य्यादिकमाचरितं, तथैव यावज्जीवनं परिचर्य्यतां, यद्यस्या आयु-र्व्विद्येत तदोज्जीवनेनावश्यं विनङ्क्ष्यति मनसः खेदः। श्रुत्वैवमुपदेशं शोकभारक्लपितमानसा इन्दुप्रभा बाष्पोपरुद्धकण्ठा सोत्कण्ठ-मवादीत्—पितः श्रुतं शास्त्रयुक्तितर्कोपबृंहितं तत्त्वनिश्चायकमति-गभीरार्थं भवदीयं वचः, किन्तु नास्य भाजनं मादृशो रसयोजनः। किं कथयामि, कथमपि न प्रतिरोद्धुं शक्नोम्यतिवेगं शोकावेगम्, अप्रतिबद्ध एव निर्झरत्यश्रुप्रवाहः। न जानामि दर्शनात् प्रभृत्येव कथमस्या दग्धहृदयाया अपि एतादृशः स्नेहसमुद्रेकः? अन्त-र्निहितमेतादृशं सम्पर्कविशेषं तर्कयामि, यद्बन्धनं सनिर्बन्धचेष्टयापि छेत्तुमशक्यम्। कदाप्येनमपश्यमिति न स्मरामि, किन्तु दर्शनात् प्रभृत्येव नान्यत्र सञ्चरतो मे चक्षुषी। अस्या दुर्दशादर्शनेन शतधा विदीर्य्यते मे हृदयम्। कथमपि नास्याः कष्टं शक्नोमि द्रष्टुम्। नावधारयामि किमपरमिदं दुर्व्विलसितं दैवस्य? आबाल्याद् यथेष्टं कष्टमर्पितवतोऽपि किं न मनस्तुष्टिरजनिष्ट स्रष्टुः? मन्ये केवलं कष्टानुभवार्थमेव मे सृष्टिरङ्गीकृता विश्वसृजा। यातु दृढं सत्यास्मि दुर्व्विलसितमवलोकयितुमङ्गं वज्रमयी। एवं रुदत्याश्च तस्या अरुन्तुदेन भावेनाक्रान्तं सदानन्दस्यापि मानसम्। क्रमशश्च वर्द्ध-

मानायां तमस्विन्यां चिकित्सका: सर्वथैव निराशास्तथैवानुष्ठातु-मादिष्टवन्त: सकष्टं स्वस्वनिलयमचलन्। सदानन्दोऽपि सन्ध्या-वन्दनादिकमाचरितुं गृहान्तरं गत:। इन्दुप्रभा सरला च तथैवो-पचरणे निरता, तन्माता चान्तरान्तरा समागत्यावस्था व्यलोकि। विजयस्तु तत्रोपस्थित: स्वीयस्वभावचापल्येनेन्दुप्रभाया अचेतनायाश्च तस्या: सौन्दर्य्यमालोक्यातीव मुग्धस्तयो: कस्या: सौन्दर्य्यस्यातिशय्य-मिति निर्व्वाचयितुमभिनिविष्टवान्। किन्तु यस्या यदङ्गे न्यपातय-न्नेत्रे तत्रैव किञ्चिदपि न्यूनत्वमनालोक्य सर्वथैव प्रशशंस संसृष्टि-कौशलं स्रष्टु:। वस्तुतस्तयोरेवं सादृश्यं यत् सहसावलोक्य भेदाव-धारणमेवाशक्यमासीत्। उभयोरेवतयोरवर्णनीयं रूपमभिनिर्वर्ण्य स पापिष्ठ एवमभिभूत: समभवद्, यदेकस्या अचैतन्यमपि न गणया-मास. परन्तु सञ्जातवेपथुस्तत्र स्थिर: समवस्थातुमसमर्थ इव सरलाभयेनागत्य बहिर्जगाम। पुन: पुनश्च तद्दर्शनलालसया अवस्थावगमव्याजेनाजगाम। अहो स्वभाववैचित्र्यं जगत:! कुत्र किमुद्देश्येन क: किमाचरतीत्यवधारणं धीरधीषणावधीरितगुरूणां महतामपि दु:साध्यं किं पुन: सरलमतीनामबलानाम्? सुतरां विजयो यत्तयोरूपराशिपिपासयैव पुन: पुनस्तत्र गतागती कृतवान्, सरलहृदया सरला इन्दुप्रभा वा तन्नाववुध्यत, तौ तु विजयस्यैवं व्यवहारं सहृदयतापरिचायकत्वेन प्रशशंसतु:। एवं गच्छति काले ज्वलति च तत्शरीरशीतलताप्रसारणार्थं परितो हुताशने तन्मुखे-क्षणैकलब्ध्या इन्दुप्रभा सहसैव तच्चक्षुषोरुन्मीलनं समीक्ष्य चैतन्यं मरणस्यासन्नत्वं वेतिशङ्कमानातिवेपमाना सरलामोचयाञ्चक्रे। सरलया च सुनिपुणं दृष्टायास्तस्या आस्यतो नातिस्पष्टमतिकष्टो-च्चारितं वच: समुदचरत्—हा—नाथ! क्व यासि? केन भावेनैव-मनुतिष्ठसि? तिष्ठ क्षणं, नाहमङ्गसङ्गेन तवाङ्गं दूषितं करोमि, केवलमस्मिन्नन्तकालेऽस्मि वारमेकं तव श्रीचरणधारणस्य प्रत्याशिनी,

अथवा काहं तव श्रीचरणधारणे? रच चरममनुरोधं क्षण-मपेक्षस्व, यावत्त्वां समीक्षमाणा मन्दाकिनीक्रोड़माश्रयामि, यत्-फलेन जन्मान्तरे तव चरणप्रान्ते स्थानमालप्स्ये। हा—कथं तदपि नाङ्गीकरोषि? जन्मान्तरमिलनभयादपि किं पलायसे? हा—कथं सत्यमेवादर्शनतां गतः?

मा! मन्दाकिनि! बन्दे तव चरणारविन्दं, नास्ति मादृशी मन्दभागिनी। मा पतितपावनि! पुनीहि मां पतिततमां, मा गङ्गे! देहि तवतरङ्गाङ्के स्थानं नापरं सोढुं पारये, अथवातःपरं किमिवास्ति दुःसहनीयं नाम? मा सन्तापहारिणि! सान्त्वय तवाधमसन्तानं, तवास्मिन् शीतले जले शमयामि बहुकालकीलिता-मन्तर्ज्वालां। श्रुतं हि परमपतिव्रता सीता पतिविरहदाह-मसहमाना तवैव क्रोड़े निपत्य कथञ्चित् शान्तिमलभत, एव-मगणितानामन्यासामपि पतिविरहितानां पतिव्रतानां तवैव शीतलं जलं शान्तिनिकेतनमिति मातस्तत् कथमहमपि तदा तव शीतलं जलमासाद्य शान्तिं नासादयिष्ये! हा हन्त!! कथ-मधुनापि मे ज्वालां न निवारयसि? श्रूयते हि नास्ति मातुः सदसत्पक्षपातः—स्तत् कथं नास्ति मय्यक्षिपातः? अथवा मम सन्तापानलेन किं तव जलमपि समुत्तप्तं जातं, नोचेत्, कथमधुनापि ज्वाला न प्रशाम्यति? मातस्त्रितापनाशिनि! तदा किं नास्त्येव जगति मन्दभागिन्या ममानन्दसन्तापस्य प्रशमनोपायः? (शैत्याप-सारणार्थं प्रज्वालितं हुताशनं विलोक्य) अहो कथमत्र दृश्यते हुताशनः? तत् किं मम सन्ताप एव क्रमशो वृंहिततापो दहन-रूपेण मामागच्छति ग्रसितुं, हा किमिदानीं करोमि? क्व गच्छामि? कमपरं यामि शरणं, मातरवेक्षस्व सन्तानं शरणागतं, अथवा किं मया रक्षितया? मरणमेव मे सन्तापनाशनैकनिदानम्।

(क्रमशः)

स्वराः षड्जादयः ॥ ६४ ॥

षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाः स्वराः गायत्र्यादिषु क्रमेण द्रष्टव्याः ॥ ६४ ॥

सितसारङ्गपिशङ्गकृष्णनीललोहितगौरा वर्णाः ॥ ६५ ॥

गायत्र्यादिषु क्रमेण वर्णा वर्णनिर्णयनिमित्तमभिधीयन्ते ॥६५॥

आग्निवेश्यकाश्यपगौतमाङ्गिरसभार्गवकौशिक-
वाशिष्ठानि गोत्राणि इति ॥ ६६ ॥

गायत्र्यादीनां क्रमेणैतानि गोत्राणि भवन्तीति वाक्यशेषः। श्यामानि अतिच्छन्दांसि, रोचनाभाः कृतयः, इत्येवमधीयते अतिच्छान्दसाः। तन्नोपपद्यते। कृतीनामतिच्छन्दस्त्वान्निवृत्तिर्द्विजोः

---

ক্রমে সূত্রোপাত্ত অগ্নি প্রভৃতি সাতটি দেবতা বুঝিতে হইবে, সুতরাং সন্দিগ্ধ স্থলে যে দেবতার নির্দ্দেশ থাকিবে, তদনুসারেই ছন্দের নির্ণয় করিতে হইবে, যেমন অগ্নিদেবতার নির্দ্দেশ থাকিলে বুঝিতে হইবে গায়ত্রী, সবিতা দেবতার নির্দ্দেশ থাকিলে উষ্ণিক্ ইত্যাদি। বেদোক্ত ছন্দেই বিরাট্ স্বরাট্ প্রভৃতি সংজ্ঞাভেদ আছে, লৌকিক ছন্দে তাহা নাই, সুতরাং লৌকিক ছন্দে সন্দেহেরই সম্ভাবনা না থাকায় সন্দেহনিবারক দেবতাদিনির্দ্দেশেরও কোন প্রয়োজন নাই।

৬৪। গায়ত্রী হইতে জগতী পর্য্যন্ত সাত প্রকার ছন্দের স্বরও যথাক্রমে ষড়্জ, ঋষভ, গান্ধার, মধ্যম, পঞ্চম, ধৈবত ও নিষাদভেদে সাতপ্রকার।

৬৫। গায়ত্রী প্রভৃতি সপ্তবিধ ছন্দের যথাক্রমে সিতসারঙ্গ প্রভৃতি সূত্রোপাত্ত সপ্তবিধ বর্ণও অভিহিত হইল।

৬৬। গায়ত্রী প্রভৃতি সপ্তবিধ ছন্দের গোত্রও যথাক্রমে অগ্নিবেশ্য, কাশ্যপ, গৌতম, আঙ্গিরস, ভার্গব, কৌশিক ও বাশিষ্ঠভেদে সাত প্রকার। যে সমস্ত

विराट्स्वराजोश्च प्रदेशाभावात् कश्चित् नास्ति संशयः। यस्य निर्णयनिमित्तं वर्णविन्यासः क्रियते, तदपि ऋषिदेवतास्वरवर्णानां ज्ञानात् निःश्रेयसमिच्छन्ति छान्दसाः॥ ६६॥

इति भट्टहलायुधकृतौ छन्दोवृत्तौ तृतीयोऽध्यायः॥ ३॥

---

चतुर्थोऽध्यायः।

## चतुःशतमुत्कृतिः॥ १॥

चतुरधिकं शतं चतुःशतम्, मध्यमपदलोपी समासः। अथवा चत्वारि च शतञ्च चतुःशतम्, द्वन्द्वसमासः। कर्मधारयपक्षस्तु नेष्यते। तत्र चतुःशतानि इति प्राप्नोति। यत्र चतुःशतमक्षराणां सङ्ख्या भवति, तदुत्कृतिर्नाम छन्दः॥ १॥

## चतुरश्चतुरस्त्यजेदुत्कृतेः॥ २॥

चतुःशताक्षरात् छन्दसः क्रमेण चतुरश्चतुरः सङ्ख्याविशेषान् त्यजेत्। एतदुक्तं भवति, उत्कृतेरारभ्य चतुर्भिश्चतुर्भिरक्षरैः न्यूनानि छन्दांसि अन्यानि स्थापयेत्, अष्टचत्वारिंशदक्षरं यावत्॥ २॥

---

ছন্দের পূর্ব্বোক্ত রূপে সন্দেহের সম্ভাবনা নাই, সেই স্থলে দেবতাদি নির্ণয়ের সংশয়নিরাসরূপ প্রয়োজন না থাকিলেও ছন্দের দেবতাদি জ্ঞান দ্বারা শুভাদৃষ্ট হয়, ইহাই তন্নির্ণয়ে ছন্দঃশাস্ত্রকারের অভিপ্রায়।

( তৃতীয় অধ্যায় সমাপ্ত হইল )।

১। ১০৪ অক্ষরে "উৎকৃতি" নামক ছন্দ হয়।

২। উৎকৃতির চারির চারির অক্ষর বাদ দিয়া ৪৮ অক্ষর পর্য্যন্ত বক্ষ্যমাণ ছন্দঃসকল ব্যবস্থাপিত হইবে।

## तान्यभिसंव्याप्रेभ्यः कृतिः ॥ ३ ॥

तान्युत्कृतेरनन्तराणि छन्दांसि अभि-सम्-वि-आङ्-प्र इत्येतेभ्यः पराणि कृतिसञ्ज्ञानि भवन्ति। तत्र शताक्षरं छन्दोऽभिकृतिः। षण्णवत्यक्षरं, सङ्कृतिः। द्वानवत्यक्षरं, विकृतिः। अष्टाशीत्यक्षरम्, आकृतिः। चतुरशीत्यक्षरं प्रकृतिः ॥ ३ ॥

## प्रकृत्या च ॥ ४ ॥

उपसर्गवर्जितः शुद्धः कृतिशब्दः प्रकृत्या स्वरूपेणैवावतिष्ठते। तेनैतदुक्तं भवति, अशीत्यक्षरं, कृतिः ॥ ४ ॥

## धृत्यष्टिशर्करीजगत्यः ॥ ५ ॥

कृतेरधस्तात् धृति-अष्टि-शर्करी-जगती इत्येते शब्दाः क्रमेण व्यवस्थापनीयाः ॥ ५ ॥

## पृथक् पृथक् पूर्वत एतान्येवैषाम् ॥ ६ ॥

एषां धृत्यादीनां पूर्वतः पृथक् पृथक् एतानि एव शब्दरूपाणि विन्यसेत्। पृथक्पृथग्ग्रहणं प्रत्येकं पूर्वत्वज्ञापनार्थम्। अन्यथा हि समुदायपूर्ववृत्तित्वमेषां स्यात्। तेन अयमर्थः,—धृतिशब्दात्

৩। কৃতি শব্দের পূর্ব্বে অভি, সম্, বি, আঙ্ ও প্র যোগ করিয়া উৎকৃতির পরবর্ত্তী পাঁচটি ছন্দের সংজ্ঞা হইবে। অর্থাৎ ১০০ অক্ষর ছন্দের নাম অভিকৃতি, ৯৬ অক্ষর ছন্দের নাম সঙ্কৃতি, ৯২ অক্ষর ছন্দের নাম বিকৃতি, ৮৮ অক্ষর ছন্দের নাম আকৃতি ও ৮৪ অক্ষর ছন্দের নাম হইবে প্রকৃতি।

৪। উপসর্গবর্জ্জিত শুদ্ধ কৃতি শব্দ স্বরূপেই অবস্থিত হইবে। অর্থাৎ দ্বিতীয়সূত্রানুসারে পূর্ব্বোক্ত ৮৪ হইতে ৪ বাদ দেওয়ায় ৮০ অক্ষর ছন্দের নাম হইবে "কৃতি"।

৫। কৃতির পরে ধৃতি, অষ্টি, শর্করী ও জগতীশব্দ ক্রমে ব্যবস্থাপিত করিতে হইবে।

পূর্ব্বং ধৃতিশব্দঃ, অষ্টিশব্দাৎ পূর্ব্বম্ অষ্টিশব্দঃ, শর্করীশব্দাৎ পূর্ব্বং শর্করীশব্দঃ, জগতীশব্দাৎ পূর্ব্বং জগতীশব্দঃ ॥ ৬ ॥

## দ্বিতীয়ং দ্বিতীয়মতিতঃ ॥ ৭ ॥

অত্র দ্বিতীয়ং দ্বিতীয়ং শব্দরূপমতিশব্দাৎ পরতঃ প্রয়োক্তব্যম্। এবং সতি উত্তরেষাং ছন্দসামেতাঃ সংজ্ঞাঃ ক্রমেণ ভবন্তি। তত্র ষট্সপ্তত্যক্ষরম্ অতিধৃতিঃ। দ্বাসপ্তত্যক্ষরং ধৃতিঃ। অষ্টষষ্ট্যক্ষরম্ অত্যষ্টিঃ। চতুঃষষ্ট্যক্ষরম্ অষ্টিঃ। ষষ্ট্যক্ষরম্ অতিশর্করী। ষট্পঞ্চাশদক্ষরং শর্করী। দ্বাপঞ্চাশদক্ষরম্ অতিজগতী। অষ্টাচত্বারিংশদক্ষরং জগতী ॥ ৭ ॥

## অত্র লৌকিকম্ ॥ ৮ ॥

অধিকারোঽয়ম্ আশাস্ত্রপরিসমাপ্তেঃ। পূর্ব্বেষাং ছন্দসাং বৈদিকত্বমেব। ইতঃ প্রভৃতি আর্য্যাদীনাং চূলিকাপর্য্যন্তানাং লৌকিকত্বমেব। সমান্যাদীনামুৎকৃতিপর্য্যন্তানাং বৈদিকত্বং লৌকিকত্বং চ। অত্র বৈদিকচ্ছন্দসাং প্রস্তাবে প্রসঙ্গাৎ বেদব্যাসাদিমুনিপারম্পর্য্যা-

---

৬। এই সকল ধৃত্যাদি শব্দের পূর্ব্বে পৃথক্ পৃথক্ ধৃত্যাদি শব্দই বিন্যস্ত করিতে হইবে। অর্থাৎ ধৃতি শব্দের পূর্ব্বে ধৃতি শব্দ, অষ্টি শব্দের পূর্ব্বে অষ্টি শব্দ, শর্করী শব্দের পূর্ব্বে শর্করী শব্দ ও জগতী শব্দের পূর্ব্বে জগতী শব্দ বিন্যস্ত করিতে হইবে,

৭। দ্বিতীয় ধৃত্যাদি শব্দ (অর্থাৎ ষষ্ঠ সূত্রদ্বারা বিহিত পূর্ব্বে ধৃত্যাদি শব্দ) অতি শব্দের পরে প্রযুক্ত হইবে। এরূপ ভাবে দ্বিতীয়, পঞ্চম, ষষ্ঠ ও সপ্তম সূত্র অনুসারে ছন্দের এইরূপ ক্রমিক সংজ্ঞা নির্দ্দিষ্ট হইল। যথা—৭৬ অক্ষর ছন্দের নাম "অতিধৃতি" ৭২ অক্ষর ছন্দের নাম "ধৃতি" ৬৮ অক্ষর ছন্দের নাম "অত্যষ্টি" ৬৪ অক্ষর ছন্দের নাম "অষ্টি" ৬০ অক্ষর ছন্দের নাম "অতিশর্করী" ৫৬ অক্ষর ছন্দের নাম "শর্করী" ৫২ অক্ষর ছন্দের নাম "অতিজগতী" ও ৪৮ অক্ষর ছন্দের নাম "জগতী।"

৮। শাস্ত্রপরিসমাপ্তি পর্য্যন্ত এই সূত্রটি অধিকৃত হইবে। অর্থাৎ এই

गतं स्मृतिपुराणेतिहासादिषु दृश्यमानम् आर्य्यादिदण्डकपर्य्यन्तं लौकिकच्छन्दोजातम् अधिक्रियते, तन्मूलत्वात् काव्यस्य। काव्यं च कीर्त्तिरूपत्वात् आनन्दहेतुत्वात् च पुरुषार्थः॥ ८॥

**आत्रैष्टुभाच्च यदार्षम्॥ ९॥**

आङ् अभिविधौ। त्रिष्टुप् एव त्रैष्टुभं, स्वार्थे तद्धितः। गायत्र्यादित्रिष्टुप्पर्य्यन्तं यत् आर्षं छन्दो जातं, वैदिके व्याख्यातं, लौकिके च तत् तथैव द्रष्टव्यम्। किं तत् आर्षं? चतुर्विंशत्यक्षरा गायत्री। अष्टाविंशत्यक्षरा उष्णिक्। द्वात्रिंशदक्षरा अनुष्टुप्। षट्त्रिंशदक्षरा बृहती। चत्वारिंशदक्षरा पङ्क्तिः। चतुश्चत्वारिंशदक्षरा त्रिष्टुप्। चः समुच्चये॥ ९॥

**पादश्चतुर्भागः॥ १०॥**

चतुर्भागः चतुर्विंशत्यक्षरायाः गायत्र्याः चतुर्थो भागः पादसञ्ज्ञां लभते। गायत्र्याः षड़क्षरः पादः। एवमुष्णिगादिष्वपि द्रष्टव्यम्। समवृत्तविषयमेतत्॥ १०॥

**यथावृत्तसमाप्तिर्वा॥ ११॥**

यस्य वृत्तस्य यादृशैः पादैः न्यूनाक्षरैः अधिकाक्षरैर्वा समाप्ति-

---

সূত্রদ্বারা অতঃপর নির্দ্দিশ্যমান আর্য্যা প্রভৃতি ছন্দের লৌকিকত্ব বিহিত হইল এবং এই বিধান অনুসারে পূর্ব্বোক্ত গায়ত্রী প্রভৃতি ছন্দের বৈদিকত্ব বুঝিতে হইবে।

৯। গায়ত্রী হইতে ত্রিষ্টুপ্ পর্য্যন্ত যে সমস্ত আর্য ছন্দঃ নির্দ্দিষ্ট হইয়াছে, (যেমন ২৪ অক্ষর গায়ত্রী, ২৮ অক্ষর উষ্ণিক্, ৩২ অক্ষর অনুষ্টুভ্, ৩৬ অক্ষর বৃহতী, ৪০ অক্ষর পংক্তি, ৪৪ অক্ষর ত্রিষ্টুভ্) বেদের ন্যায় লোকেও তাহাদের সেইরূপ ব্যবহার হইবে।

১০। ছন্দের চারিভাগের একভাগকে পাদ বলে। যেমন চতুর্ব্বিংশত্যক্ষর গায়ত্রীর ছয় অক্ষরে এক পাদ ইত্যাদি। সমবৃত্ত বিষয়েই এই সূত্র।

दृश्यते, तस्य तादृशा एव पादाः ग्रहीतव्याः । वाशब्दो व्यवस्थित-विभाषा । उद्गतादिषु विषमवृत्तेषु चतुर्भागातिक्रमेणापि पाद-व्यवस्थादर्शनात् ॥

आदौ तावद् गणच्छन्दो मात्राच्छन्दस्ततःपरम् ।
तृतीयमक्षरच्छन्दः छन्दस्त्रेधा तु लौकिकम् ॥
आर्य्याद्युद्गीतिपर्य्यन्तं गणच्छन्दः समीरितम् ।
वैतालीयादि चूलिकान्तं मात्राच्छन्दः प्रकीर्त्तितम् ॥
समान्याद्युत्कृतिं यावदक्षरच्छन्द एव च ।

तत्रादौ तावत् आर्य्यालक्षणसिद्ध्यर्थं गणसञ्ज्ञां करोति ॥११॥

## लः समुद्रा गणः ॥ १२ ॥

लः इति एकमात्रिकस्य अक्षरस्य ग्रहणम् । समुद्राः इति चतुःसङ्ख्योपलक्षणार्थम् । चतुर्णां लकाराणां गणः, इत्येषा सञ्ज्ञा विधीयते ॥ १२ ॥

## गौ गन्तमध्यादिर्लश्च ॥ १३ ॥

अनेन गणस्य विन्यासभेदं दर्शयति । स हि गणः कदाचित् गुरुद्वयेन भवति, कदाचित् अन्त्येन एकेन गुरुणा, कदाचित् मध्य-

---

১১। অথবা ন্যূনাধিক যত অক্ষর পাদদ্বারা যেই বৃত্তের সমাপ্তি দেখা যায়, তত অক্ষরেই সেই ছন্দের পাদ গ্রহণ করিতে হইবে। অর্থাৎ উদ্গতাদি বিষমবৃত্তে চারিভাগের একভাগে পাদের ব্যবস্থা না হইয়া নির্দ্দিশ্যমান অক্ষর অনুসারেই পাদের ব্যবস্থা হইবে।

১২। চারিটি লঘুবর্ণের "গণ" সংজ্ঞা হয়। আর্য্যালক্ষণসিদ্ধিই গণ-সংজ্ঞার প্রয়োজন।

১৩। সেই গণ কোন স্থলে দুইটি গুরুবর্ণ ( ऽ ऽ ) দ্বারা কোন স্থলে দুইটি লঘুবর্ণ (।।) ও অন্ত একটি গুরুবর্ণ (।ऽ) দ্বারা, কোন স্থলে মধ্যবর্ত্তী একটি গুরুবর্ণ

मेन, कदाचित् आद्येन, कदाचित् चतुर्भिः लघुभिः। षष्ठस्य भेदस्य अभावात् विस्पष्टार्थमिदं सूत्रम्। अन्तमध्यादिः इति प्रथमं द्वन्द्व-समासं कृत्वा पश्चात् गकारेण बहुव्रीहिः। द्वन्द्वात् परो यः श्रूयते, लभते असौ प्रत्येकाभिसम्बन्धम्। द्वौ गकारौ, चत्वारो लघवो भवन्ति, स एको गणः (ऽऽ)। गकारः अन्ते यस्य सः गन्तः द्वितीयो गणः (॥ऽ)। गकारो मध्ये यस्य सः गमध्यः तृतीयो गणः (।ऽ।)। गकारः आदिः यस्य सः गादिः चतुर्थो गणः (ऽ॥)। नकारलकारौ मिलितौ चत्वारो लघवो भवन्ति, सः पञ्चमो गणः (॥॥)। एवं गणेषु सिद्धेषु इदानीम् आर्य्यालक्षणं करोति ॥ १३ ॥

[ अथ आर्य्याधिकारः ]

## स्वरा अर्द्धञ्चार्य्यार्द्धम् ॥ १४ ॥

गणग्रहणमनुवर्त्तते। स्वरा इति सप्तानां सञ्ज्ञा। यत्र प्रस्तारे गणाः सप्त भवन्ति, अर्द्धं च गणस्य, तत् आर्य्यार्द्धं निष्पद्यते। द्वितीयमपि अर्द्धं तादृशमेव। समप्रविभागे अर्द्धशब्दः। यद्येवम्, अर्द्धशब्दस्य अर्द्धं नपुंसकम् इत्यनेन एकदेशिसमासे सति पूर्वनिपातः प्राप्नोति। यथा, अर्द्धाढकम्, अर्द्धपलम्, अर्द्धखारी इति। न एषः दोषः। सत्यपि समप्रविभागत्वे सम्बन्धमात्रस्य अत्र विवक्षितत्वात्, समप्रविभागस्यार्द्धशब्दस्य एकदेशिसमासव्यभिचार-दर्शनात्। यथा,—तुलार्द्धेन गां क्रीणाति ॥

पर्णार्द्धक्रीतताम्बूलचर्वणाद्गर्वितानना:।
अनभ्यासाद्गलल्लाला यान्त्येते वारयात्रिकाः ॥

तथा अत्र समप्रविभागत्वेऽप्यर्द्धशब्दस्यैकदेशिसमासदर्शनाच्च।

---

ও দুইটি লঘুবর্ণ ( ।ऽ। ) দ্বারা, কোন স্থলে আদি একটি গুরু ও দুইটি লঘুবর্ণ ( ऽ॥ ) দ্বারা, এবং কোন স্থলে চারিটি লঘুবর্ণ ( ।।।। ) দ্বারা বিন্যস্ত হইবে। ( এরূপ বিন্যাসভেদের কারণ নির্দ্দেশের জন্য ১।১৩ সূত্র দেখ ) ইহার অতিরিক্ত কোনও বিন্যাসভেদের সম্ভাবনা না থাকায় এই সূত্র স্পষ্টার্থই বলিতে হইবে।

अर्द्धचन्द्रं दधन्मूर्द्ध्नि पातु वः पार्व्वतीपतिः ।
कालकूटविषं हन्तुं सङ्गृहीतमिवामृतम् ॥

तथाच—

तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम् ।
अर्द्धराज्यहरं भृत्यं यो न हन्यात् स हन्यते ॥

अत्र अर्द्धस्य लक्षणं कुर्व्वाणः एवं ज्ञापयति आचार्य्यः, यत् आर्य्यायामवान्तरपादव्यवस्था नास्ति। तेन द्वीपादन्यस्मात् इत्यादौ गणत्रयस्यान्ते गुरुत्वं न स्यात् ॥

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ १४ ॥

## अत्रायुङ् न ज् ॥ १५ ॥

अत्र आर्य्याच्छन्दसि, अयुग् गणाः, प्रथमः तृतीयः पञ्चमः सप्तमश्च, न जगणः मध्यगुरुः न कर्त्तव्यः। शेषास्तु कामतः अत्र भवन्ति ॥ १५ ॥

## षष्ठो ज् ॥ १६ ॥

आर्य्याच्छन्दसि षष्ठः गणः मध्यगुरुः एव भवति॥ अत्र उदाहरणम्—

भ०१ स०२ द्वि०३ द्वि०४ स०५ ज०६ सर्व०७ गु०
S I I I I S S S S S I I S I S I I I I I S
सा जयति जगत्यार्य्या देवी दिवमुत्पतिष्णुरतिरुचिरा ।

---

१४। যাহাতে সাতটি গণ ও গণের অর্দ্ধ থাকে, সে আর্য্যার্দ্ধরূপে পরিনিষ্পন্ন হয়। এস্থলে সমগ্রবিভাগ করটি অর্দ্ধশব্দের প্রয়োগ থাকায় দ্বিতীয়ার্দ্ধও এইরূপ বুঝিতে হইবে। আচার্য্য আর্য্যার্দ্ধের লক্ষণ করিয়া জানাইতেছেন যে, আর্য্যাতে অবান্তরপাদ ব্যবস্থা নাই।

১৫। আর্য্যাচ্ছন্দের প্রথম, তৃতীয়, পঞ্চম ও সপ্তমগণ মধ্যগুরু (। S।) হইবে না।

हि०१ ज०२ स०३ भ०४ हि०५ ए०६ म०७गु०

S S I S I I I S S I I S S I S I I S

या हृश्यतेऽम्बरतले कंसवधोत्पातविद्युदिव ॥ १६ ॥

## न्लौ वा ॥ १७ ॥

षष्ठ इत्यनुवर्त्तते । आर्य्यायाः षष्ठो गणः (IIII) सर्वलघुर्वा भवति ॥ तत्रोदाहरणम्—

हि०१ ज०२ हि०३ हि०४ हि०५ सर्व०६ सर्व०७ गु०

S S I S I S S S S S S I I I I I I I S

रूपान्तरेण देवीं तामिव स्तौमि सपदि किल मद्दिव:

हि०१ भ०२ भ०३ भ०४ स०५ ए०६ हि०७गु०

S S S I I S I I S I I I I S I S S S

पादस्पर्शसुखादिव मौलिलनयनोऽभवद्यस्याः ॥ १७ ॥

## न्लौ चेत् पदं द्वितीयादि ॥ १८ ॥

षष्ठो गणः सर्वलघुश्चेद्भवति, तदा द्वितीयादक्षरादारभ्य पदं प्रवर्त्तते ॥ पूर्वमेव उदाहरणम् ॥ १८ ॥

## सप्तमः प्रथमादि ॥ १९ ॥

षष्ठे गणे मध्यगुरौ सर्वलघौ वा (IIII) जाते सप्तमो गणः सर्वलघुश्चेद्भवति, तदा प्रथमाक्षरादारभ्य पदं प्रवर्त्तते ॥ तत्रोदाहरणम्—

---

১৬। আর্য্যাচ্ছন্দের ষষ্ঠগণ মধ্যগুরু (।ऽ।) ই হইবে।

১৭। অথবা আর্য্যাচ্ছন্দের ষষ্ঠগণ সর্ব্বলঘু (।।।।) হইবে।

১৮। ষষ্ঠগণ যদি সর্ব্বলঘু হয়, তবে দ্বিতীয় অক্ষরাবধি পদ প্রবর্ত্তিত হয়।

১৯। ষষ্ঠগণ মধ্যগুরু বা সর্ব্বলঘু হইয়া সপ্তমগণ যদি সর্ব্বলঘু হয়, তবে প্রথম অক্ষরাবধি পদ প্রবর্ত্তিত হয়।

द्वि० १ भ० २ द्वि० ३ ज० ४ द्वि० ५ ज० ६ सर्व० ७ गु०

S S S I I S S I S I S S I S I I I I I S

ब्रह्मक्षत्रकुलीनः प्रलीनसामन्तचक्रनुतचरणः ।

सर्व० १ ज० २ द्वि० ३ ज० ४ द्वि० ५ ज० ६ द्वि० ए० ७ गु०

I I I I I I S I S S S S S S I S I I S

सकलसुकृतैकपुञ्जः श्रीमान् मुञ्जश्चिरञ्जयति ॥

सर्व० १ ज० २ द्वि० ३ द्वि० ४ सर्व० ५ सर्व० ६ सर्व० ७ गु०

I I I I I S I S S S S I I I I I I I I I I I I S

जयति भुवनैकवीरः सीरायुधतुलितविपुलबलविभवः ।

सर्व०१ ज०२ सर्व०३ भ०४ द्वि०५ ए०६ द्वि०७ गु०

I I I I I S I I I I I S I I S S I S S S

अनवरतवित्तवितरणनिर्जितचम्पाधिपो मुञ्जः ॥ १९ ॥

## अन्त्ये पञ्चमः ॥ २० ॥

अन्ते भवमन्त्यं, दिगादित्वात् यत् । अन्त्ये द्वितीये अर्द्धे पञ्चमश्चेद्-गणः (IIII) सर्वलघुर्भवति, तदा प्रथमादिपदं प्रवर्त्तते । तत्रोदाहरणम्—

सर्व०१ भ०२ द्वि०३ स०४ स०५ ज०६ भ०७ गु०

I I I I S I I S S I I I S I I S I S I S I I S

स जयति वाक्पतिराजः सकलार्थिमनोरथैककल्पतरुः ।

द्वि०१ ज०२ भ०३ द्वि०४ सर्व०५ ए०६ भ०७ गु०

S S I S I S I I S S I I I I I S I I S

प्रत्यर्थिभूतपार्थिवलक्ष्मीहठहरणदुर्ललितः ॥ २० ॥

---

२०। দ্বিতীয়ার্দ্ধে পঞ্চমগণ যদি সর্বলঘু (IIII) হয়, তবে প্রথম অক্ষরাবধি পদ প্রবর্ত্তিত হয়।

षष्ठश्च ल् ॥ २१ ॥

अन्त्य इत्यनुवर्त्तते। अन्त्ये द्वितीये अर्द्धे मध्यगुरौ सर्वलघौ (।।।।) वा षष्ठे गणे प्राप्ते, तदपवादो लकारो विधीयते। पूर्वमेव उदाहरणम् ॥ २१ ॥

त्रिषु गणेषु पादः पथ्यादौ च ॥ २२ ॥

चकारोऽन्त इत्यनुकर्षणार्थः। यस्या आर्य्याया अन्त्ये अर्द्धे आद्ये च त्रिषु गणेषु पादः समाप्यते, सा आर्य्या पथ्या नाम भवति ॥ तद्-यथा—

द्वि०१ द्वि०२ द्वि०३ भ०४ द्वि०५ ज०६ द्वि०७ गु०

ऽ ऽ ऽ ऽ ऽ ऽ ऽ । । ऽ ऽ । ऽ । ऽ ऽ ऽ

पथ्याशी व्यायामी स्त्रीषु जितात्मा नरो न रोगी स्यात्।

सर्व०१ भ०२ द्वि०३ भ०४ द्वि०५ ए०६ द्वि०७ गु०

। । । । ऽ । । ऽ ऽ ऽ । । ऽ ऽ । ऽ ऽ ऽ

यदि वचसा मनसा वा द्रुह्यति नित्यं न भूतेभ्यः ॥

पादग्रहणं यत्युपलक्षणार्थम् ॥ २२ ॥

विपुलाऽन्या ॥ २३ ॥

यस्या आर्य्याया अन्त्ये अर्द्धे आद्ये वा उभयोर्वा त्रिषु गणेषु पादो न विश्राम्यति, सा आर्य्या विपुला नाम। सा च आद्यन्तोभय-पूर्वकत्वात् त्रिधा भवति। सामान्येन विधानमेतत्। तत्रादिविपुला।

---

২১। দ্বিতীয়ার্দ্ধের ষষ্ঠগণ লঘু (।) হইবে। ১৬ ও ১৭ সূত্র দ্বারা মধ্য-গুরু ও সর্ব্বলঘুর প্রাপ্তিতে এই অপবাদ বিহিত হইল।

২২। যাহার প্রথম ও শেষার্দ্ধে তিনগণে পাদসমাপ্তি হয়, সেই আর্য্যাকে "পথ্যা" বলে।

২৩। যেই আর্য্যার প্রথমার্দ্ধে শেষার্দ্ধে বা উভয়ার্দ্ধে তিন গণে পাদসমাপ্তি না হয়, সেই আর্য্যাকে "বিপুলা" বলে। সেই বিপুলা আদ্যন্তোভয়ার্দ্ধপূর্ব্বকত্ব-

द्वि०१ द्वि०२ द्वि०३ ज०४ द्वि०५ सर्वं०६ द्वि०७ गु०

S S S S S S I S I S S I I I I S S S

स्निग्धच्छायासावर्ण्यलेपिनो किञ्चिदवनतप्रान्ता।

सर्वं०१ द्वि०२ द्वि०३ स०४ द्वि०५ ए०६ द्वि०७ गु०

I I I I S S S S I I S S S I S S S

मुखविपुला सौभाग्यं लभते स्त्रीत्याह माण्डव्यः॥

जघनविपुला।

द्वि०१ ज०२ स०३ भ०४ द्वि०५ ज०६ द्वि०७ गु०

S S I S I I I S S I I S S I S I S S S

चित्तं हरन्ति हरिणीदीर्घदृशः कामिनां कलालापैः।

द्वि०१ ज०२ द्वि०३ सर्वं०४ स०५ ए०६ सर्वं०७ गु०

S S I S I S S I I I I I S I I I I S

नीवीविमोचनव्याजकथितजघना जघनविपुला॥

उभयविपुला।

द्वि०१ सर्वं०२ स०३ ज०४ द्वि०५ ज०६ भ०७ गु०

S S I I I I I I S I S I S S I S I S I I S

या स्त्री कुचकलशनितम्बमण्डले आयते महाविपुला।

द्वि०१ ज०२ स०३ ज०४ भ०५ ए०६ भ०७ गु०

S S I S I I I S I S I S I I I S I I S

मन्थोरमाभिरतिदीर्घलोचना भवति सा सुभगा॥

अत्रोच्यते। पथ्याविपुलालक्षणयोः सन्धानवस्थानलक्षणविरोधः, तेन मिश्रीभावो नास्ति। य एव अंशो विपुलया स्पृष्टः तेनैव पथ्यात्वं नष्टं भवति। उभयाश्रयत्वात् पथ्यालक्षणस्य विपुलायाः तत्र अंशेन अपि प्रवेशो दुर्लभः। ततश्च पथ्यालक्षणैकांशकैवल्ये-

---

নিবন্ধন আদিবিপুলা অন্তবিপুলা ও উভয়বিপুলাভেদে তিন প্রকার। উদাহরণ মূলিতে দ্রষ্টব্য।

ऽपि तदन्यमात्रविषयत्वात् विपुला भवत्येव। पथ्याचपलयोश्च विरोधाभावात् बाध्यबाधकभावो नास्ति। तत्रायं सङ्ग्रहः ॥

एकैव भवति पथ्या विपुलास्तिस्रस्ततश्चतस्रस्ताः ।
चपलाभेदैस्त्रिभिरपि भिन्ना इति षोड़शार्य्याः स्युः ॥
गीतिचतुष्टयमित्थं प्रत्येकं षोड़शप्रकारं स्यात् ।
साकल्येनार्य्याणामशीतिरेव भेदाः स्युः ॥

तेषामनुक्तोदाहरणानि ज्ञ्चानि ॥ २३ ॥

## चपला द्वितीयचतुर्थौ ग्मध्ये जौ ॥ २४ ॥

अधिकारोऽयम्। द्वितीयचतुर्थौ गणौ मध्यगुरू (। ऽ ।) भवतः, प्रथमश्च अन्तगुरुः, (।।ऽ) तृतीयः द्विगुरुः, (ऽऽ) पञ्चमश्च आदिगुरुः, (ऽ।।) शेषं यथाप्राप्तम्। एवं गकारयोर्मध्ये द्वितीय-चतुर्थौ जकारौ भवतः, सा आर्य्या चपला नाम॥ उदाहरण-मग्रतः ॥ २४ ॥

## पूर्वे मुखपूर्वा ॥ २५ ॥

पूर्वे अर्द्धे चपलालक्षणं चेद्-भवति, तदासौ मुखचपला आर्य्या॥ पथ्यापूर्वं मुखचपलोदाहरणम्।

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ भ०७ गु०
। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ । । ऽ
अतिदारुणा द्विजिह्वा परस्य मर्मानुसारिणी कुटिला।
द्वि०१ सर्व०२ द्वि०३ द्वि०४ द्वि०५ ए०६ सर्व०७ गु०
ऽ ऽ । । । । ऽ ऽ ऽ ऽ ऽ ऽ । । । । । ऽ
दूरात् परिहरणीया नारी नागीव मुखचपला ॥

---

२४. याहार द्वितीय ও চতুর্থগণ গুরুদ্বয়ের মধ্যবর্তী হইয়া মধ্যগুরু (। ऽ ।) হয়, সেই আর্য্যাকে "চপলা" বলে। এইটি অধিকার সূত্র।

২৫। পূর্ব্বার্দ্ধে চপলালক্ষণ প্রবর্ত্তিত হইলে সেই আর্য্যাকে "মুখচপলা" বলে।

आदिविपुलापूर्वकं मुखचपलोदाहरणम् ।

द्वि०१ ज०१ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

S S I S I S S I S I S S I S I S S S

यस्याश्च लोचने पिङ्गले भ्रुवौ सङ्गते मुखं दीर्घम् ।

स०१ ज०२ द्वि०३ द्वि०४ भ०५ ए०६ सर्व०७ गु०

I I S I S I S S S S S I I I I I I I S

विपुलोन्नताश्च दन्ताः कान्ताऽसौ भवति मुखचपला ॥

उभयविपुलापूर्वं मुखचपलोदाहरणम् ।

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

I I S I S I S S I S I S S I S I S S S

विपुलाभिजातवंशोद्भवापि रूपातिरेकरम्यापि ।

द्वि०१ ज०२ द्वि०३ ज०४ सर्व०५ ए०६ सर्व०७ गु०

S S I S I S S I S I I I I I I I I I S

निःसार्य्यते गृहाद्दल्लभापि यदि भवति मुखचपला ॥

## जघनपूर्वेतरत्र ॥ २६ ॥

द्वितीये अर्द्धे चपलालक्षणं चेद्भवति, सा आर्य्या जघनचपला नाम ॥

तत्र पथ्यापूर्वकं जघनचपलोदाहरणम् ।

द्वि०१ भ०२ द्वि०३ भ०४ स०५ ज०६ द्वि०७ गु०

S S S I I S S S I I I I S I S I S S S

यत्पादस्य कनिष्ठा न स्पृशति महीमनामिका वापि।

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ए०६ सर्व०७ गु०

S S I S I S S I S I S S I I I I I S

सा सर्वधूर्त्तभोग्या भवेदवश्यं जघनचपला ॥

---

२६। দ্বিতীয়ার্দ্ধে চপলালক্ষণ প্রবর্ত্তিত হইলে সেই আর্য্যাকে "জঘনচপলা" বলে।

अन्त्यविपुलापूर्वकं जघनचपलोदाहरणम्।

द्वि०१ द्वि०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

SS SS SS IS IS SISIS I S

यस्याः पादाङ्गुष्ठं व्यतीत्य याति प्रदेशिनी दीर्घा।

स०१ ज०२ द्वि०३ ज०४ भ०५ ए०६ स०७ गु०

IIS ISISS I S IS IIIII S S

विपुले कुले प्रसूतापि सा ध्रुवं जघनचपला स्यात्॥

महाविपुलापूर्वकं जघनचपलोदाहरणम्।

स०१ स०२ स०३ ज०४ भ०५ ज०६ द्वि०७ गु०

IISI ISIISIS I S III IS IS SS

मकरध्वजसद्मनि दृश्यते स्फुटं तिलकलाञ्छनं यस्याः।

स०१ ज०२ द्वि०३, ज०४ भ०५ ए०६ स०७ गु०

IIS IS ISSI SIS IIIIISS

विपुलान्वयाभिजातापि जायते जघनचपलासौ॥ २६॥

## उभयोर्महाचपला॥ २७॥

यस्या उभयोरर्द्धयोश्चपलालक्षणं भवति, सा आर्य्या महाचपला नाम। तत्र पथ्यापूर्वकं महाचपलोदाहरणम्।

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

IIS IS I S SISIS S IS I SSS

हृदयं हरन्ति नार्य्यो मुनेरपि भ्रूकटाक्षविक्षेपैः।

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ए०६ भ०७ गु०

S SIS IS S ISIS S I S IIS

दोर्मूलमभिदेशं निदर्शयन्त्यो महाचपलाः॥

विपुलापूर्वकं महाचपलोदाहरणम्।

---

२७। যাহার উভয়ার্দ্ধে চপলালক্ষণ প্রবর্ত্তিত হয়, সেই আর্য্যাকে "মহাচপলা" বলে।

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ

चिबुके कपोलदेशेऽपि कूपिका दृश्यते स्मिते यस्याः ।

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ए०६ भ०७ गु०

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । । ऽ

विपुलान्वयप्रसूतापि जायते सा महाचपला ॥ २७ ॥

## आद्यर्द्धसमा गीतिः ॥ २८ ॥

आद्येनार्द्धेन सममन्त्यं यस्याः सा आद्यर्द्धसमा, मध्यपदलोपी समासः। एतदुक्तं भवति द्वितीयेऽपि अर्द्धे षष्ठो गणो जकारः न्लौ वा कर्त्तव्यः ॥ तत्र पथ्यागीत्युदाहरणम्—

स०१ द्वि०२ स०३ भ०४ स०५ ज०६ द्वि०७ गु०

। । ऽ ऽ ऽ । । ऽ ऽ । । । । ऽ । ऽ । ऽ ऽ ऽ

मधुरं वीणारणितं पञ्चमसुभगश्च कोकिलालापः ।

द्वि०१ भ०२ द्वि०३ स०४ स०५ ज०६ भ०७ गु०

ऽ ऽ ऽ । । ऽ ऽ । । ऽ । । ऽ । ऽ । ऽ । । ऽ

गीतिः पौरवधूनामधुना कुसुमायुधं प्रबोधयति ॥

आदिविपुलागीत्युदाहरणम् ।

सर्व०१ भ०२ द्वि०३ ज०४ द्वि०५ ज०६ स०७ गु०

। । । । ऽ । । ऽ ऽ । ऽ । ऽ ऽ । ऽ । । । ऽ ऽ

इयमपरा विपुलागीतिरुच्यते सर्वलोकहितहेतोः ।

स०१ ज०२ द्वि०३ ज०४ स०५ ज०६ द्वि०७ गु०

। । ऽ । ऽ । ऽ ऽ । । ऽ । । । ऽ । ऽ । ऽ ऽ ऽ

यदनिष्टमात्मनस्तत्परेषु भवतापि मा क्वचित् कारि ॥

पथ्यामहाचपलागीत्युदाहरणम्—

২৮। যাহার শেষার্দ্ধ প্রথমার্দ্ধের সমান, অর্থাৎ যাহার দ্বিতীয়ার্দ্ধেও ষষ্ঠগণ মধ্যগুরু বা সর্ব্বলঘু সেই আর্য্যাকে "গীতি" বলে।

# आर्य्यप्रभा ।

चतुर्थवर्षं । } सुदुर्लभाः सर्व्वमनोरमा गिरः । { ४र्थ संख्या ।

परम-पूज्यपाद-

श्रीयुक्त-कुञ्जविहारि-तर्कतीर्थ-महोदयानां

श्रीचरण-सरोजेषु—

आर्य्यवर्य्य,

प्रणतिरियं विधेयस्य । अवाप्य भवत उपदेशराजिराजितां आदेशलिपिं अनुदासीनोऽस्मि स्वकर्म्मसु । वस्तुतः निर्देशकारिणो वयं भगवतो जगदीश्वरस्य । निर्देशश्च भगवतः—

"कर्म्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्म्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्म्मणि ॥" इति —

सुतरां के वयं फलाफलविचारकारिणः ?

भवदादेशानुसारेणायं प्रबन्धः प्रेष्यते । अतःपरं यथादेशं प्रबन्धाः प्रेष्येरन् । इति शम् ।

भवद्विधेयस्य—

श्रीसुरेन्द्रकुमार-ब्रह्मचारिणः ।

---

## मृत्यु-मर्त्त्य संवादः ।

कश्चित् पञ्चविंशवर्षदेशीयः सुदर्शनो युवा सप्ताहमात्रव्यापिना अविरामज्वरेण पीड्यमानो जीविताशया मुहुर्मुहुर्भेषजमासेवमानो मृत्युशय्यामध्यशेत । पित्रादयो बान्धवजना भीतभीतास्तं परितः उपाविशन् । अस्मिन्नेव समये भगवान् सर्व्वलोकाश्रयभूतो मृत्युः

सपरिजनस्तत्राविरासीत्, अपातयच्च युवकस्य तस्य वदने स्वच्छायां सर्व्वलोकभयङ्करीम्। अकाण्डे युवकमुखपतितां मृत्युच्छायां तां विलोक्य तत्रस्थानां सर्व्वेषां "हा पुत्र, हा मित्र, हा बान्धव, हा पितः, हा तात, हा स्वामिन्, हा दयित, हा पितृव्य क्व यासि, अस्मान् विहाय। हा हतविधे! कथमेवं निर्द्दयोऽसि" इत्याद्युच्चावचाः रोदनध्वनयः प्रादुरासन्। युवकस्तु आबाल्यात् सेवितयोः स्नेहमययोः पित्रोः, प्राणप्रियस्य बन्धोः, सर्व्वदा अनुगतानां सुहृदां, प्राणप्रियस्य स्तनन्धयस्य शिशोः, प्राणानामपि अर्द्धभागिन्याः प्रियतमायाः, अन्येषामपि बान्धवजनानां सकातरं विलापमुपश्रुत्य मर्म्मच्छेदकरीं यातनामवाप। परिजनेषु यः प्रियतमः तं स्मृत्वा अधिकतरेण हृदयमर्म्मभिदा दुःखराशिना आक्रम्यत। अमन्यत च—हा हन्त! यद्येवमवश्यमरणं पुरा अज्ञास्यम्, तदा निस्पृहः असक्तश्चाभविष्यम्, ततो न एतामासक्तिमूलां यातनां अवाप्स्यम्। हतेन्द्रियाधीनेन मया किं नाम नाचरितं पापकर्म्म? असारमपि दुःखसंकुलमपि सुसारमिव सुखमयमिव इन्द्रियैर्मे प्रदर्शितम्। इदानीं पश्चात्तापानल-दन्दह्यमानमानसस्य हा हन्त का नाम गतिर्भवेत्, कश्च उपायः? एष मे पिता आबाल्यात् मां स्नेहपाशेन शृङ्खलयन् अपात्। एषा स्नेहमयी मे गर्भधारिणी स्वस्तन्यैः पीयूषकल्पैः मामवर्द्धयत्। अहमस्मितयो-रेकमात्रमपत्यम्। का दशा एतयोर्मय्यसंस्थिते। एषा स्तनन्धय-तनया नवयौवना प्रियभाषिणी सर्व्वेन्द्रियसुखावहा प्रियतमापत्नी, हा एषा मया विरहिता कथमिव स्थास्यति? अग्रतो मे अवस्थितो भीषणाकारः कार्ष्णायसकठोरमतिर्मृत्युः। हा किं करवाणि? इदं सुशोभनं भुवनं, सुरचितं भवनं, सुपोषितं परिजनं, सुसेवितं बान्धव-जनं, सुखप्रदं सखिमण्डलं, सुखस्वरूपमिव प्रियाया बाहुपाशालिङ्गनं, आनन्दरचितमिव शिशोर्वदनचन्द्रकं, किमपरं चिरं मार्ज्जित-भूषितं नानाविधाहारपरम्पराभिरेतावत्कालं सुपोषितं सुशोभनं

देहमपि विहाय अद्य मया क्व गन्तव्यम् ? यत्राक्षबुद्धा एतावन्तं कालमहं मोहेनैव विडम्बितः, स देहोऽपि मां नानुगमिष्यति । हा आसन्नसमयोऽयमुपस्थितः । अथ मृत्युमेव अनुनेष्यामि । "हे मृत्यो ! देवानामपि नियामकः दयालुर्भवानिति मया श्रुतं, तद्दयया क्षमस्व माम् ; कञ्चित् कालं प्रतीक्ष्य पुनस्त्वया आगन्तव्यम् । देव ! इदानीमेवाहं अभ्यस्तविद्यः उपार्ज्जनक्षमः संवृत्तः, पितरौ मे अर्ज्जनाक्षमौ जातौ, तयोः सेवावसरो न मे पुरा जातः, शिशुतनया च सुदती अकठोरयौवना मे प्रियतमा, मयि त्वदधीने तेषां का नाम गतिर्भविता ? तत् वदामि चरणयोर्निपत्य क्षमस्व देव एनं दासजनं ; गतेषु कियत्सु वर्षेषु भवता पुनरागन्तव्यं, तदाहं निर्व्विचार एव भवन्तमनुगमिष्यामि ।

मृत्युः ।—अरे मर्त्त्य युवन् ! न त्वदाशंसानुसारेण दया मे रोचते, यथा ते कर्त्तव्यबोधः न खलु तथा मम । विषयसम्भोगलालसया शृङ्खलितो यथा त्वं प्रार्थयसे, अहमपि यदि तथैव प्रवर्त्तेयं तदैषा धरणिः लघीयसि एव काले लोकभराक्रान्ता रसातलं गच्छेत् । को मां सम्मुखस्थमालोक्य न बिभेति, न वा जीवितं कामयते ? पित्रादिभ्यः का ते चिन्ता, स्वस्वभरणोपायस्तैरेव करणीयः, कस्त्वमपरः कर्त्ता स्वकर्म्मसूत्रग्रथितेषु तेषु । चल, रे अलं वादानुवादैः ।

मर्त्त्ययुवा ।—हा देव ! एवमसि निर्द्दयः कठोरचित्तः ; अकाले मां कवलयसि कालपाशेन । इदानीमपि विषयभोगलालसा न मे तिरोहिता । अधुनैव मामादाय गन्तुमीहसे । बाल्यादारभ्य अध्ययनादिविधौ एव मयातिवाहितः कालः, न पित्रोश्चरणशुश्रूषा विहिता, न वा किञ्चिदिष्टं सुखमुपभुक्तम् । हा त्वं देवः सन्नपि एवं कठोरः ?

मृत्युः ।—अरे मर्त्त्य, निर्द्दयं मामात्थ, अरे बहु खलु तवादर्षे, न दृष्टास्त्वया मत्कवलग्रस्ताः शिशवो बालाः स्तनन्धयाः केवल ?

एतावान् कालस्तव भोगावसरो मया दत्तः, तथाप्यहं निर्दयः ? ये च वृद्धा गलितदशना लुलितचर्म्माणः पलितशिरसः चिन्ताज्वरेण दन्दह्यमानाः रोगक्षीणकलेवरा मया नीयन्ते, किन्तेऽपि सुखिता एव मामनुगच्छन्ति ? किन्तुभ्यं न तदपेक्षया स्वल्पीयसी यातना दत्ता ? अहं निर्दयः !! बाल्यादारभ्य एतावान् कालस्त्वया ऐहिकभोगसाधनार्थमेव नीतः ! अरे नरशिशो ! ऐहिकभोग्यलाभाय त्वया बहुकालोऽपनीतः, मत्कवलमगच्छंश्चेत्त्वमस्य परिश्रमस्य फलं अतःपरं विंशति पञ्चविंशति वा वर्षाणि विषयान् उपभुञ्जीथाः, किन्तु चिन्तय, यदि एतावान् कालो धर्म्मसेवया अयापयिष्यः, तदा तत्फलत्वेन महाप्रलयान्तं ब्रह्मलोकमनामयमध्यवत्स्यः। यातु अलं न मे अत्रास्ति काचित् शक्तिः, प्राक्तनमिह भुञ्जते जीवाः। येन स्वल्पायुष्करं कर्म्म कृतं स भवेदेव स्वल्पायुः, येन च दीर्घायुर्जनकं कर्म्मबीजमुप्तं स दीर्घायुष्टफलं लभेत। दुराकाङ्क्षाऽसि यत् उप्तबदरबीजः नारिकेलफलं काङ्क्षसे।

मर्त्त्यः।—मया इहापि जन्मनि न किञ्चित् पुण्यमासेवितं, येन जन्मान्तरे मे भवेत् सुफलं, तद्देहि मे अवसरं धर्म्मानुष्ठानाय।

मृत्युः।—इयान् कालस्त्वया कथमपव्ययितः ? पर्य्याप्तानि खलु पञ्चविंशति वर्षाणि धर्म्मानुष्ठानाय।

मर्त्त्यः।—देव ! वार्द्धक्ये धर्म्ममाचरिष्यामीति मनसा संस्मरन् अहमेतावन्तं कालं विषयभोगेनानयम्। पूर्व्वं नाजानाम्—यत् यौवन एव मे मृत्युर्निश्चित इति।

मृत्युः।—किं बालं म्रियमाणं नाद्राक्षीः ?

मर्त्त्यः।—देव, दृष्टा बहवोऽजातदन्ता एव शिशवो मृत्युना ग्रस्यमानाः, भूरिशश्च बालाः किशोरा युवानः प्रौढाश्च म्रियमाणा, वृद्धास्तु म्रियन्त एव।

मृत्युः।—यदि बालानामपि मरणं दृष्टं, तदा कथं 'वार्द्धक्ये धर्म्ममासेविष्ये' इति कृता त्वया मतिः?

मर्त्त्यः।—देव, किं ब्रवीमि, बाल्ये यौवने वा मृत्युर्मे दूरमास्तामियं कथा, अहं वार्द्धक्ये मृत्युवशगो भविष्यामीत्यपि प्रत्ययो मे नासीत्। जरामामाक्रमिष्यति इत्यपि वचो न मया प्रतीतम्।

मृत्युः।—किमेवं कश्चिद्दृष्टः यो न म्रियते, चिरयौवनश्च जीवति?

मर्त्त्यः।—नहि।

मृत्युः।—कथन्तर्हि ते अयं जरामरणयोरप्रत्ययः?

मर्त्त्यः।—न अप्रत्ययः किन्तु अस्मरणम्।

मृत्युः।—स्मारकं त्वया किमपि नोपलब्धम्?

मर्त्त्यः।—नहि।

मृत्युः।—प्रत्यक्षत एव प्रतिदिनं शतशो म्रियमाणा जरन्तश्च दृश्यन्ते, कथं तेन ते न स्मृतिर्जाता?

मर्त्त्यः।—देव, ते म्रियमाणा जरन्तश्च मया प्रत्यक्षतो दृष्टा अपितु न गृहीताः, परन्तूपहसिताः!

मृत्युः। (सशिरःकम्पम्) उपहसिताः!! यदि उपहसिताः, तदा त्वामपि उपहसन्तु। प्रत्यक्षतो विलोक्यापि अवश्यम्भाविनं अखण्डनीयं जरामरणं उपहसितवानसि! किं मृत्युविजयी उपायस्त्वया कश्चिदधिगतः, येन ते मृत्यावपि उपहासः।

मर्त्त्यः।—देव, संहर कोपं, यौवनमदेन तदा मे अपरा दशासीत्, किं करवाणि। अवश एव तदा असारे कल्पनामात्रमनोरमे सुखे कृताध्यवसायः अवश्यम्भवमपि मृत्युम् कल्पनया दूरीचकार। परलोके चाप्रत्ययं कुर्व्वता अधर्म्मसञ्चयमपि विदधता ऐहिकसुखे एव मतिरदीयत। हा हन्त! ये परलोकसुखावहमुपायमब्रुवन् तेषां वचसि कदाचिदपि श्रद्धा न रचिता। देव, कृपालो! वद, किं त्वद्विजयी उपायः कश्चिदस्ति?

मृत्युः।—अस्त्येव युवन् अस्त्येव। किन्तु गूढ़तमः खलु स बहुलायाससाध्यश्च। किन्तु यावान् कालस्त्वया विषयसुखसाधनाय अतिवाहितः, तावता कालेनापि सुव्ययितेन मृत्युविजयः शक्यः कर्त्तुम्।

मर्त्त्यः।—ये विजितमृत्यवस्ते त्वदधीना न जायन्ते नाम?

मृत्युः।—मृत्युविजयिनो मदधीना जायेरन्, दूरमास्तामयं प्रलापः, तेषां अनुग्रहार्पितं पदकमलरजोऽपि माहृशैर्दुर्लभम्। यदि तेषामाज्ञानुसारेण कदाचिदहं तान् मम राजधान्यां नेतुमर्हामि, तदा सर्व्वाणि तीर्थानि सर्व्वे च देवाः तत्र उपतिष्ठन्ति। किमपरमहं मद्विजयिनं जीवं द्रष्टुकाम एव इतस्ततो भ्राम्यामि।

मर्त्त्यः।—देव, अति हि नाम उत्कण्ठा मम समजनि, अनुग्रहार्द्रं खलु मयि भवतः मानसमिति जानामि, यद्यहमधिकारी स्यां, तदा ब्रवीतु कीदृशः खलु स उपायो येन भवान् जीयते?

मृत्युः।—सद्गुरुचरणकृपातः स उपायो लभ्यः। नावसरोऽयं मे कथयितुं, संक्षेपत इदं वच्मि—

> "रागद्वेषविषापूरः स्वमनोविलमन्दिरः।
> लोभव्यालो न यं भुङ्क्ते मयासौ न जिघांस्यते॥
> पीताशेषविवेकाम्बुः अघोराम्भोधिवाड़वः।
> न निर्द्दहति यं कोपी मयासौ न जिघांस्यते॥
> यस्य सिलानां कठिनं राशिसुयमिवाकुलम्।
> यं पीड़यति मानङ्गो मयासौ न जिघांस्यते॥

अपि च,—

> एकस्मिन् निर्म्मले येन पदे परमपावने।
> संश्रिता चित्तविश्रान्तिर्मयासौ न जिघांस्यते॥" इति—

मर्त्त्यः।—देव, गुरुर्भवान् मे, अहमस्मि शिष्यस्ते, उपदिश मां भूतार्थं, यथाहं गच्छेम परमं श्रेयोमार्गम्। अवगच्छामीदानीं यत् पितृ-मातृ-दुहित्रादयः केऽपि न मामकीनाः, अथच कथमियं

लोकानां मन्तो भ्रान्तियन्त्र मुह्यन्तोऽपि एतेषु आसज्जन्ते, अहं मम इति सम्बन्धं रचयन्तो आत्मोद्धाराय न यतन्ते ? कथमियं भ्रान्तिः निःशेषमुद्धृता स्यादिति।

मृत्युः।—वत्स, सुखितोऽस्मि ते अनेन प्रश्नेन। अस्मिन् जन्मनि नास्ति ते अवसरः, परजन्मनि यतेथास्त्वं मुक्तिलाभाय, आशंसे च आप्तकामस्त्वं भवेः। अविद्यावशादेव मूढ़ा नाम रूपमात्र-विशेषात् कुत्रचित् मज्जन्ते, कस्माच्चित् विरज्यन्ते। तत्त्वं पुनस्ते नासादयन्ति। पश्चाच्च आसन्नवर्त्तिनं मामालोक्य मोहवशात् अनात्मीयेष्वपि आत्मीयत्वेन कल्पितेषु पुत्रमित्रकलत्रादिषु संसक्त-चेतसो देहमेवाचेतनं आत्मत्वेन मन्यमानास्तद्वियोगेन सन्तप्तचित्ता हा हतोऽस्मि इति विलपन्ति !! ये च श्रवणमननादिभिर्विगलिता-विद्यादिदोषा विवेकिनस्ते देहमपीमं पाञ्चभौतिकं अपवित्रं मन्यन्ते, सुतरां तद्वियोगे न मुह्यन्ति, प्रत्युत आरोपितबन्धविगमात् स्वाभाविकं त्रिविधदुःखात्यन्ताभावरूपं निर्व्वाणं आप्नुवन्तस्ते देह-नाशे महोत्सववन्त इव नन्दन्ति। ते हि मन्यन्ते—

"देहनाशे विनष्टोऽस्मीति यस्यामतेर्भमः।
मातुः स्तनतटात् तस्य मन्ये वेताल उत्थितः॥ इति—

यातु अलमिदानीमतिप्रसङ्गेन। स्मर सम्प्रति भगवत्पदारविन्द-द्वन्द्वं सर्व्वमोहविनाशकम्। इति शम्।

काव्यसांख्यतीर्थोपनामक-श्रीसुरेन्द्रकुमार-तत्त्वरत्नस्य।

---

## प्रतिभा।

(आषाढ़ात् परम्)

एहि हुताशन ! गृहाण शरीरमिदं, धक्धक् प्रज्वलिता तव ज्वालेव यदि मे प्रभविष्यति शमयितुमन्तर्ज्वालां. श्रूयते हि—"विषस्य विष-मौषध"मिति। हा ! कथं विलम्बसे ? किं कलङ्किनीं मत्वा त्वमपि मां

क्षीयाङ्गे ग्रहीतुं शङ्कसे? अहो का तव शङ्का? प्रतिदिनमशस्त्रं सहस्रशः शरीराणि त्वयैव ग्रस्यन्ते, नास्ति तव पापिनिष्पापादि-विवेचनापि, पापियसामपि त्वमेव परोक्षास्थानम्, त्वमपि यदि पापीयांसं ग्रसितुं शङ्कसे, कोऽन्यस्तदा तत्र प्रभवेत्? न हि विषधरधरं गङ्गाधरं विना कोऽपि विषमविषवेगं सोढुं शक्नुयात्। परन्तु वङ्के! नाहमपह्नुवे लेशतोऽपि स्वदोषं, पतिपरित्यागविधुरातिसन्तप्तहृद-यापि पतिचरणं विना क्षणमपि नान्यमचिन्तयम्, चिन्तयामि वेति शपे। अथवा कीदृशो तव सकाशे दोषापङ्कृतिर्नाम? सुविचक्षणेन सम्यक् निरीक्षणेनापि बहिरलक्ष्यमाणं दोषं स्पर्शमात्रेण त्वमेवा-विष्करोषि। हा कथं त्वमपि क्रमश एव क्षीणालोकः समवलोक्यसे? बुद्धं दुःसमये कोऽपि सानुक्रोशं न पश्यति। हा हतप्राणाः! कथं स्वयमेव यूयं न यात? सततजनितदाहे-ऽस्मिन् देहे स्थित्वा क्लेशसहस्रसहनेऽपि कथं नाम युष्माकमनुरक्तिः? किं चिरसौहार्द्देन सहेहृदाक्रहृहनानुकूलयार्थमेव बहिर्गन्तुं नास्य-भिलाषः? तिष्ठत तर्हि, दर्शयामि युष्मान् रमणीविक्रमसुदृबन्धना-दिना। अहो स्वात्मैव कथमात्महत्यारूपं महापातकमनुतिष्ठामि? तस्मात् क्षमे समाधन्यतया निर्म्मीमानपि युष्मान्। हा हतविधे! कोऽयं ते प्रतिवादिनो विधिः? मृत्वा यत् सुखमुपलभेऽहं दंदह्य-माना तदप्यसह्यं नाम? हा मातः! हा पितः! पश्य सन्तानस्य दशाविपर्य्यासम्। हा आर्य्यश्वशुर! हा मातः! श्वश्रूदेवि! कुत्र स्थः, पश्यतं स्नुषायाः सर्व्वस्वं मुषितमिति। हा—यस्याः शरीर-परिरक्षणार्थमनारतं रत्नराशिर्धूलिराशिरिव विसर्जितः, यस्या रक्षणाविक्षणार्थं लक्षलक्षमुद्राव्ययेऽपि न कुण्ठता प्रदर्शिता, यस्याः कदर्थ्यायां अपि परिचर्य्यार्थमगणिताः परिचारिका नियोजिताः, यस्या अवस्थानार्थमिन्द्रभवनमिव तद्भवनं व्यवस्थापितं, यस्याः कष्टनिवारणचेष्टैव प्रधानतः कर्त्तव्यत्वेन निर्द्धारिता, यां प्रत्यपत्या-धिकमपि स्नेहस्रोतः प्रवाहितं, अन्तकालेऽपि यस्यै तदनन्तचन्द्र-कान्तादिकान्तमणिरत्नाद्यन्वितं, सर्व्वस्वं समर्पितं दृश्यतामद्य सा लुप्तसर्व्वस्वा सर्व्वथैवासहाया कीदृशीं यातनां सहते। क्रमशः।

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ स०७ गु०

S S I S I S S I S I S S I S I I I S S

कामश्चकास्ति गीतिर्मृगीदृशां मीधुपानचपलानाम् ।

स०१ ज०२ द्वि०३ ज०४ द्वि०५ सर्व०६ स०७ गु०

I I S I S I S S I S I S S I I I I I I I S S

सुरतञ्च मुक्तलज्जं निरर्गलालापमणितरमणीयम् ॥

महाचपलामहाविपुलागीत्युदाहरणम् ।

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ सर्व०६ सर्व०७ गु०

S S I S I S S I S I S S I I I I I I I I I S

पञ्चेषुवल्लभः पञ्चमध्वनिस्तत्र भवति यदि विपुलः ।

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

I I S I S I S S I S I S S I S I S S S

चपलं करोति कामाकुलं मनः कामिनामसौ गीतिः ॥२८॥

## अन्त्येनोपगीतिः ॥ २९ ॥

अन्त्येनार्द्धेन समसाद्यमर्द्धं यस्याः सा आर्य्या उपगीतिर्नाम ॥

तत्र पथ्योपगीत्युदाहरणम्—

द्वि०१ भ०२ भ०३ द्वि०४ द्वि०५ ए०६ भ०७ गु०

S S S I I S I I S S S S I S I I S

गान्धर्वं मकरध्वजदेवस्यास्त्रं जगद्विजयि ।

सर्व०१ भ०२ भ०३ स०४ द्वि०५ ए०६ द्वि०७ गु०

I I I I S I I S I I I I S S S I S S S

इति समवेक्ष्य मुमुक्षुभिरुपगीतिस्त्यज्यते देशः ॥

महाविपुलोपगीत्युदाहरणम्—

२৯। যাহার প্রথমার্দ্ধ শেষার্দ্ধের সমান, অর্থাৎ যাহার প্রথমার্দ্ধেও ষষ্ঠগণ এক লঘু, সেই আর্য্যাকে উপগীতি কহে।

स०१ ज०२ द्वि०३ सर्व०४ भ०५ ए०६ द्वि०७ गु०
I I S I S I S S I I I I S I I I S S S
विपुलोपगीतिझङ्कारमुखरिते भ्रमरमालानाम्।
द्वि०१ ज०२ द्वि०३ ज०४ स०५ ए०६ द्वि०७ गु०
S S I S I S S I S I I I S I S S S
रेवातपोवने वसुतोऽस्तु सततं मम प्रीतिः॥

पथ्यामहाचपलोपगीत्युदाहरणम्—

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ए०६ भ०७ गु०
I I S I S I S S I S I S S I S I I S
विषयामिषाभिलाषं करोति चित्तं सदा चपलम्।
द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ए०६ द्वि०७ गु०
S S I S I S S I S I S S I S S S
वैराग्यभावनानां तथोपगीत्या भवेत् स्वस्थम्॥

महाचपलामहाविपुलोपगीत्युदाहरणम्—

स०१ ज०२ द्वि०३ ज०४ भ०५ ए०६ द्वि०७ गु०
I I S I S I S S I S I S I I I S S S
विपुलोपगीति सन्त्वज्यतामिदं स्वरुचकं भिक्षो।
स०१ ज०२ द्वि०३ ज०४ द्वि०५ ए०६ द्वि०७ गु०
I I S I S I S S I S I S S I S S S
विषयाभिलाषदोषेण बाध्यते चञ्चलं चित्तम्॥ २९॥

## उत्क्रमेणोद्गीतिः॥ ३०॥

पूर्वोक्तात् क्रमात् विपरीतक्रम उत्क्रमः। अयमर्थः—आद्यमन्त्यं भवति अन्त्यमाद्यौ, सोद्गीतिः नाम आर्य्या। तत्र पथ्योद्गीत्युदाहरणम्।

---

३०। আর্য্যার প্রথমার্দ্ধ যাহার শেষার্দ্ধ ও শেষার্দ্ধ যাহার প্রথমার্দ্ধ হয়, তাহাকে "উদ্গীতি" বলে।

भ०१ द्वि०२ स०३ स०४ द्वि०५ ए०६ भ०७ गु०

S I I S S I I S I I S S S I S I I S

व्याध इवोद्गीतिरवैः प्रथमं तावन्मनो हरसि।

भ०१ स०२ भ०३ द्वि०४ द्वि०५ ज०६ द्वि०७ गु०

S I I I I S S I I S S S S I S I S S S

दुर्नयकर विश्राम्यसि पश्चात् प्राणेषु विप्रियैः शल्यैः॥

महाविपुलोद्गीत्युदाहरणम्—

द्वि०१ ज०२ द्वि०३ ज०४ स०५ ए०६ भ०७ गु०

S S I S I S S I S I I I S I S I I S

एषा तवापरोद्गीतिरत्र विपुला परिभ्रमति।

द्वि०१ ज०२ द्वि०३ सर्व०४ द्वि०५ ज०६ स०७ गु०

S S I S I S S I I I I S S I S I I I S S

त्वद्वल्लभापि यत् कीर्त्तिरखिलदिक्पालपार्श्वमुपयाति॥

पथ्यामहाचपलोद्गीत्युदाहरणम्।

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ए०६ स०७ गु०

S S I S I S S I S I S S I I I S S

उद्गीतिरत्र नित्यं प्रवर्त्तते कामचपलानाम्।

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

S S I S I S S I S I S S I S I S S S

तस्मान्मुने! विमुञ्च प्रदेशमेतं समेतमेताभिः॥

महाविपुलामहाचपलोद्गीत्युदाहरणम्—

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ए०६ भ०७ गु०

I I S I S I S S I S I S S I S I I S

विपुला पयोधरश्रोणिमण्डले चक्षुषोश्चपला।

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ भ०७ गु०

S S I S I S S I S I S S I S I S I I S

उद्गीतिशालिनी कामिनी च सा वालिनी मनो हरति॥३०॥

## अर्द्धे वसुगणा आर्य्यागीतिः ॥ ३१ ॥

अष्टगणे प्रथमार्द्धे सा आर्य्यागीतिर्नाम आर्य्या। अष्टमोऽपि गणश्चतुर्मात्रको भवतीत्यर्थः। विशेषाभावात् द्वितीयमप्यर्द्धं तादृशमेव। अत्रापि षष्ठो गणः द्विविकल्प एव नलकारः। अर्द्धे इति वर्त्तमाने पुनरर्द्धग्रहणाद्गणग्रहणाच्चेयमपि पथ्यादिलक्षणपूर्व्विका आर्य्यागीतिः॥ पथ्यार्य्यागीत्युदाहरणम्—

सर्व०१ सर्व०२ द्वि०३ द्वि०४ द्वि०५ ज०६ द्वि०७ स०८

I I I I I I I I S S S S  S S I S  I  S S I I S

अजमजरममरमेकं प्रत्यक् चैतन्यमीश्वरं ब्रह्मपरम्।

द्वि०१ द्वि०२ स०३ स०४ द्वि०५ ज०६ द्वि०७ द्वि०८

S S S S I I S I I S S  S  I S I S S  S S

आत्मानं भावयतो भवमुक्तिः स्यादितीयमार्य्यागीतिः॥

महाविपुलार्य्यागीत्युदाहरणम्—

स०१ ज०२ स०३ ज०४ भ०५ सर्व०६ सर्व०७ स० ८

I I S I S I I I S I S I S I I I  I I I I I I I I S

विषयाभिलाषमृगतृष्णिका ध्रुवं हरति हरिणमिव हतहृदयम्।

स०१ ज०२ स०३ ज०४ द्वि०५ ज०६ सर्व०७ द्वि०८

I I S I S I I I S I S I S S I S I I I I I I S S

विपुलात्ममोक्षसुखकाङ्क्षिभिस्ततस्त्यज्यते विषयरससङ्गः॥

पथ्याजघनचपलार्य्यागीत्युदाहरणम्—

द्वि०१ ज०२ द्वि०३ स०४ द्वि०५ सर्व्व०६ स०७ स०८

S S I S I S S I I S S S I  I I I I I S I I S

वाताहतोर्म्मिमालाचपलं सम्प्रेक्ष्य विषयसुखमल्पतरम्।

---

৩১। যাহার প্রথমার্দ্ধ ও শেষার্দ্ধ অষ্ট অষ্টগণ দ্বারা নিবদ্ধ, তাহাকে "আর্য্যাগীতি" বলে।

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ म०८

S S I S I S S I S I S S I S I S S I I S

मुक्ता समस्तसङ्गं तपोवनान्याश्रयन्ति तेनात्मविदः॥

महाविपुलामहाचपलार्य्यागीत्युदाहरणम्—

म०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ मर्व्व०७ म०८

I I S I S I S S I S I S S I S I I I I I I S

चपलानि चक्षुरादीनि चित्तहारी च हन्त हतविषयगणः।

द्वि०१ ज०२ द्वि०३ म०४ ज०५ मर्व०६ म०७ द्वि०८

S S I S I S S I S I S I I I I I I I I S S S

एकान्तशीलिनां योगिनामतो भवति परमसुखसम्प्राप्तिः॥३१॥

इत्यार्य्याधिकारः॥

[ अथ वैतालीयाधिकारः। ]

## वैतालीयं द्विस्वरा अयुक्पादे युग्वसवोऽन्ते-ल्गाः॥ ३२॥

ल इत्यनुवर्त्तते। यत्रायुक्पादे प्रथमे तृतीये च द्विःस्वराः चतुर्दशलकारा भवन्ति, युक्पादे च द्वितीये चतुर्थे च युग्वसवः षोड़शलकाराः तत् वैतालीयं नाम छन्दः। तेषां लां मध्ये उभयोरपि पादयोरन्ते रेफलकारगकाराः कर्त्तव्याः। आद्ये पादे षड्लकाराः पश्चादवशिष्यन्ते द्वितीये चाष्टौ। एवं वैतालीयार्द्धं सिध्यति। द्वितीयमप्यर्द्धं तादृशमेव॥ तत्रोदाहरणम्—

৩২। যাহার প্রথম ও তৃতীয় পাদে প্রত্যেকতঃ চতুর্দ্দশ লকার, এবং দ্বিতীয় ও চতুর্থ পাদে প্রত্যেকতঃ ষোড়শ লকার থাকে, অথচ প্রত্যেক পাদের অন্তভাগ রগণ (SIS) একটি লঘুবর্ণ ও একটি গুরুবর্ণ দ্বারা নিবদ্ধ হয়, সেই ছন্দকে "বৈতালীয়" বলে।

रगणः लं० गु०

१।२ ३।४ ५ ६ "७।८८ १०।११" १२ १३।१४

सुत् नौ ण ग रौ र स ञ्च या

रगणः लं० गु०

१।२ ३।४ ५।६ ७ ८ "८।१० ११ १२।१३" १४ १५।१६

व्य नौ भू त शि रा ऽस्थि प ञ्ज राः ।

रगणः लं० गु०

१।२ ३।४ ५ ६ "७।८८ १०।११" १२ १३।१४

क ग्रैः प रु पै स्त वा र यो

रगणः लं० गु०

१।२ ३।४ ५।६ ७ ८ ८।१० ११ १२।१३ १४ १५।१६

वै ता लो य' त नु वि त न्व ते ॥

अपिच ।

तव तन्वि ! कटाक्षवीक्षितैः प्रहरद्भिः श्रवणान्तमोचरैः ।
विशिखैरिव तीक्ष्णकोटिभिः प्रहतः प्राणिति दुष्करं गतः ॥

अपिच ।

शवशोणितपञ्जराञ्चितं पुरुषान्त्रग्रथितोर्द्ध्वमूर्द्धजम् ।
वपुरन्तरवन् हि दीपितं वैतालीयमिदं विलोक्यताम् ॥

वैतालीयमिति वेतालशब्दात् कशाश्वादेराकृतिगणत्वात् शणप्रत्ययः चातुरर्थिकः । अत्र पादग्रहणमिदं ज्ञापयति. यदा आर्य्यादीनां पादश्चतुर्भाग इति व्यवस्था नास्ति ॥ ३२ ॥

## गौपच्छन्दसकम् ॥ ३३ ॥

अस्मिन् वैतालीये छन्दसि अन्ते गकारश्चेदधिको भवति, तदा औपच्छन्दसकं नाम छन्दः ॥ तत्रोदाहरणम्—

---

৩৩। বৈতালীয় ছন্দের প্রত্যেক পাদের অন্তে যদি এক একটি গুরুবর্ণ অধিক সন্নিবিষ্ট হয়, তবে তাহাকে "ঔপচ্ছন্দসক" বলে।

रगणः लं० गु० गु०
१।२ ३।४ ५ ६ "७।८।९ १०।११" १२ १३।१४ १५।१६
वा क्यै र्म धु रैः प्र ता र्य पू र्व्वं

रगणः लं० गु० गु०
१।२ ३।४ ५।६ ७ ८ "९।१० ११ १२।१३" १४ १५।१६ १७।१८
यः प श्चा द भि म न्द धा ति मि त्रम्।

रगणः लं० गु० गु०
१।२ ३।४ ५ ६ "७।८ ९ १०।११" १२ १३।१४ १५।१६
तं दु ष्ट म तिं वि शि ष्ट गो ष्ठ्या

रगणः लं० गु० गु०
१।२ ३।४ ५।६ ७ ८ "९।१० ११ १२।१३" १४ १५।१६ १७।१८
मौ प च्छ न्द म कं व द न्ति वा ह्यम्॥

अपिच।

परमर्मनिरीक्षणानुरक्तं स्वयमत्यन्तनिगूढ़चित्तवृत्तिम्।
अनवस्थितमर्थलुब्धमाराद्दौपच्छन्दसकं जहीहि मित्रम्॥
उपच्छन्दःशब्दादर्हणादिपाठात् चातुरर्थिकौ वुञ्प्रत्ययः॥३३॥

## आपातलिका भगौ ग्॥ ३४॥

रेफलकारगकाराणामपवादः। द्विःस्वरा अयुक्पादे, युग्वसवः अन्ते इत्यनुवर्त्तते। पूर्वलक्षणयोरन्ते भकारो गकारद्वयञ्च भवतः, तद्वैतालीयमापातलिका नाम लभते॥ तत्रोदाहरणम्—

भगणः गु० गु०
१।२ ३।४ ५।६ "७।८ ९ १०" ११।१२ १३।१४
पि ङ्ग ल के शी क पि ला क्षी

भगणः गु० गु०
१।२ ३।४ ५।६ ७ ८ "९।१० ११ १२" १३।१४।१५।१६
वा चा टा वि क टो न्न त द न्ती।

৩৪। যদি পূর্ব্বোক্ত বৈতালীয় ছন্দের রগণ স্থানে ভগণ (ऽ।।) ও রগণের পরবর্ত্তী লঘুগুরু স্থানে গুরুবর্ণ সন্নিবেশ হয়, তবে তাহাকে "আপাতলিকা" বলে।

भगणः गु० गु०
१।२ ३।४ ५ ६ "७।८ ९ १०" ११।१२ १३।१४
आ पा त लि का पु न रे षा

भगणः गु० गु०
१ २ ३ ४ ५।६ ७ ८ "९।१० ११ १२" १३।१४ १५।१६
नृ प ति कु ले ऽपि न भा ग्य मु पै ति ॥

आपातलिका अस्थिरा इत्यर्थः ॥ ३४ ॥

## शेषे परेण युङ् न साकम् ॥ ३५ ॥

अत्र वैतालीयाधिकारे येषां लकाराणां नियम उक्तस्तद्व्यतिरिक्तो यो लकारवर्गः, सः शेषः, तस्मिन् नियमः क्रियते, युग् लकारः परेण साकं न मिश्रीकार्य्यः, द्वितीयः तृतीयेन, चतुर्थः पञ्चमेन, युक्पादे, षष्ठश्च सप्तमेन। एवं वदता शेषाणां मिश्रीभावोऽप्यनुज्ञातः ॥ तत्रोदाहरणं पूर्वमेव ॥ ३५ ॥

## षट् चामिश्रा युजि ॥ ३६ ॥

अत्र द्वितीयचतुर्थयोः पादयोः षड् लकाराः अमिश्राः न कर्त्तव्याः, पृथक् पृथक् न प्रयोक्तव्या इत्यर्थः। प्रथमतृतीययोश्च पादयोः स्वरुचिः ॥ तत्रोदाहरणं वैतालीये तावत्।

---

৩৫। এই বৈতালীয় অধিকারে রগণাদি দ্বারা পাদের অন্তস্থিত অষ্ট লকারের বিন্যাস নিয়মিত হইয়াছে, তাহার অবশিষ্ট লকারই শেষশব্দে বুঝিতে হইবে; সুতরাং সেই শেষ প্রথম ও তৃতীয় পাদের ছয় লকার এবং দ্বিতীয় ও চতুর্থ পাদের আট লকার সম্বন্ধে এই নিয়ম করা হইতেছে যে, যুগ্ম লকার পরের সহিত অর্থাৎ দ্বিতীয় লকার তৃতীয়ের সহিত, চতুর্থ লকার পঞ্চমের সহিত ও ষষ্ঠ লকার সপ্তমের সহিত মিশ্রিত হইবে না। এই নিয়ম দ্বারা অন্য লকারের মিশ্রীভাবও অনুজ্ঞাত হইল।

৩৬। এই বৈতালীয় অধিকারে দ্বিতীয় ও চতুর্থপাদে ছয়টি লকার অমিশ্রিত (অর্থাৎ একক্রমে পৃথক্ পৃথক্ প্রযুক্ত) হইবে না। ইহাদ্বারা প্রথম ও তৃতীয় পাদে পৃথক্ পৃথক্ প্রযুক্ত হইতেও বাধা নাই।

अमरगिरमिह सद्मनि द्विषां नवनिशितायुधवृष्टिरग्रत: ।
कुवलयदलदीर्घचक्षुषां प्रमदानां न कटाक्षवीक्षितम् ॥

औपच्छन्दसकोदाहरणम्—

परयुवतिषु पुत्रभावमादौ कृत्वा प्रार्थयते पुन: पतित्वम् ।
इदमपरमिहोच्यते विशेषादौपच्छन्दसकं खलस्य वृत्तम् ॥

आपातलिकोदाहरणम्—

अभिरमयति किन्नरकण्ठी हंसगति: श्रवणायतनेत्रा ।
विशदकमलकोमलगात्री युवतिरियं हृदयं तरुणानाम् ॥३६॥

**पञ्चमेन पूर्व: साकं प्राच्यवृत्ति: ॥ ३७ ॥**

इदानीं विशेषलक्षणमाह—शेषे परेण युङ् न साकम् इत्यनेन पञ्चमचतुर्थयोरेकीभावो निषिद्ध: । सोऽनेन विधीयते । युजोत्यनुवर्त्तते । यदा युक्पादे पञ्चमेन लकारेण पूर्व: सङ्गच्छते, तदा प्राच्यवृत्तिर्नाम वैतालीयं भवति । शेषं यथाप्राप्तम् ॥ तत्रोदाहरणम्—

रगण: ल० गु०

१ २ ३।४ ५ ६ "७।८ ८ १०।११" १२ १३।१४

वि पु ला य सु वा च का स्त रा:

रगण: ल० गु०

१।२ ३ ४।५ ६ ७ ८ "८।१० ११ १२।१३" १४ १५।१६

क स्य नाम न ह र न्ति मा न सम् ।

रगण: ल० गु०

१ २ ३।४ ५ ६ "७।८ ८ १०।११" १२ १३।१४

र स भा व वि शे ष पे श लाः

---

৩৭। দ্বিতীয় ও চতুর্থপাদে যদি পঞ্চম লকারের সহিত চতুর্থ লকার সঙ্গত (অর্থাৎ একটি বর্ণদ্বারা নিবদ্ধ) হয়, তবে তাহাকে "প্রাচ্যবৃত্তি" নামক বৈতালীয় বলে। এই সূত্র ও ৩৮।৩৯ সূত্র ৩৫ সূত্রের অপবাদরূপে বিহিত।

रगणः लं० गु०

१।२ ३ ४।५ ६ ७ ८ "९।१० ११ १२।१३" १४ १५।१६
प्रा च्य वृ त्ति क वि का व्य स म्प दः ॥३७॥

## अयुक् तृतीयेनोदीच्यवृत्तिः ॥ ३८ ॥

पूर्वः साकमित्यनुवर्त्तते। अयुक्पादे तृतीयेन लकारेण यदि पूर्वः सङ्गच्छते, तदा उदीच्यवृत्तिर्नाम वैतालीयम्। शेषं यथाप्राप्तमेव ॥ तत्रोदाहरणम्—

रगणः लं० गु०

१ २।३ ४ ५ ६ "७।८ ९ १०।११" १२ १३।१४
भ वा च क म नू र्जि ता स्व रं

रगणः लं० गु०

१ २ ३।४ ५।६ "७ ८ ९।१० ११ १२।१३" १४ १५।१६
श्रु ति दु ष्टं श्रु ति क ष्ट म क्र मम्।

रगणः लं० गु०

१ २।३ ४ ५ ६ "७।८ ९ १०।११" १२ १३।१४
प्र सा द र हि त स्व ने च्छ ति

रगणः लं० गु०

१ २ ३।४ ५।६ ७ ८ "९।१० ११ १२।१३" १४ १५।१६
क वि भिः का व्य मु दी च्य वृ त्ति भिः ॥ ३८ ॥

## आभ्यां युगपत् प्रवृत्तकम् ॥ ३९ ॥

आभ्यां पूर्वोक्तलक्षणाभ्यां युगपत्प्रवृत्ताभ्यां प्रवृत्तकं नाम

---

৩৮। প্রথম ও তৃতীয় পাদে যদি তৃতীয় লকারের সহিত দ্বিতীয় লকার সঙ্গত (অর্থাৎ একটি গুরুবর্ণ দ্বারা নিবদ্ধ) হয়, তবে তাহাকে "উদীচ্যবৃত্তি" নামক বৈতালীয় বলে।

৩৯। দর্শিত প্রাচ্যবৃত্তি ও উদীচ্যবৃত্তি এই উভয়ের লক্ষণাক্রান্তকে "প্রবৃত্তক" নামক বৈতালীয় বলে।

वैतालीयम्। युक्पादे पञ्चमेन पूर्वः सङ्गच्छते, अयुक्पादे तृतीयेन द्वितीय इत्यर्थः॥ अत्रोदाहरणम्—

रगणः ल० गु०

१ २।३ ४ ५ ६ "७।८ ९ १०।११" १२ १३।१४

इ दं भ र त वं श भू भृ तां

रगणः ल० गु०

१।२ ३ ४।५ ६ ७ ८ "९।१० ११ १२।१३" १४ १५।१६

श्रू य तां श्रु ति म नो र सा य नम्।

रगणः ल० गु०

१ २।३ ४ ५ ६ "७।८ ९।१० ११" १२ १३।१४

प वि त्र म धि कं शु भो द यं

रगणः ल० गु०

१।२ ३ ४।५ ६ ७ ८ "९।१० ११ १२।१३" १४ १५।१६

व्या स व क्त्र क थि तं प्र वृ त्त कम्॥ ३९॥

## अयुक् चारुहासिनी॥ ४०॥

यस्य सर्वे पादा अयुग्लक्षणयुक्तास्तत् वैतालीयं चारुहासिनी नाम। किं तल्लक्षणं—चतुर्दशमात्रत्वं, तृतीयेन पूर्वस्य योगः॥ तत्रोदाहरणम्—

रगणः ल० गु०

१ २।३ ४ ५ ६ "७।८ ९ १०।११" १२ १३।१४

म नाक् प्र सृ त द न्त दी धि तिः

रगणः ल० गु०

१ २।३ ४ ५ ६ "७।८ ९ १०।११" १२ १३।१४

स्म रो ल्ल सि त ग ण्ड म ण्ड ला।

---

৪০। যাহার সমস্তপাদ অযুক্‌লক্ষণাক্রান্ত (অর্থাৎ প্রত্যেকপাদে মোট চতুর্দ্দশ লকার এবং দ্বিতীয় লকার তৃতীয়ের সহিত সঙ্গত) তাহাকে "চারু-হাসিনী" বলে।

रगणः ल० गु०

१ २।३ ४ ५ ६ "७।८ ९ १०।११" १२ १३।१४

क टा क्ष ल लि ता तु का मि नी

रगणः ल० गु०

१ २।३ ४ ५ ६ "७।८ ९ १०।११" १२ १३।१४

म नो ह र ति चा रु हा सि नी ॥ ४० ॥

## युगपरान्तिका ॥ ४१ ॥

युग्मलक्षणयुक्तैश्चतुर्भिः पादैः अपरान्तिका नाम वैतालीयम्। किन्तल्लक्षणं—षोड़शमात्रत्वं पञ्चमेन पूर्व्वस्य योगः, षस्णां मिश्राणां प्रयोगश्च ॥ तत्रोदाहरणम्—

रगणः ल० गु०

१ २ ३ ४।५ ६ ७ ८ "९।१० ११ १२।१३" १४ १५।१६

स्थि र वि ला स न त मौ क्ति का व ली-

रगणः ल० गु०

१ २ ३ ४।५ ६ ७।८ "९।१० ११ १२।१३" १४ १५।१६

क म ल को म ला ङ्गी मृ गे क्ष णा।

रगणः ल० गु०

१ २ ३ ४।५ ६ ७ ८ "९।१० ११ १२।१३" १४ १५।१६

ह र ति क स्य हृ द यं न का मि नः

रगणः ल० गु०

१ २ ३ ४।५ ६ ७ ८ "९।१० ११ १२।१३" १४ १५।१६

सु र त के लि कु श ला प रा न्ति का ॥ ४१ ॥

इति वैतालीयाधिकारः।

---

৪১। যাহার সমস্ত পাদ যুক্লক্ষণাক্রান্ত ( অর্থাৎ প্রত্যেক পাদে মোট ষোড়শ লকার এবং পঞ্চমের সহিত চতুর্থ সঙ্গত ইত্যাদি ) তাহাকে "অপরান্তিকা" নামক বৈতালীয় বলে।

[ अथ मात्रासमाधिकारः। ]

**गन्ता द्विर्वसवो मात्रासमकं नवमः ॥ ४२ ॥**

वैतालीयमित्यादिसूत्रात् समन्यन्त' पादग्रहणमनुवर्त्तते। ल इति सन्नाधिकारः। तेनायमर्थः— यत्र पादे गन्ताः सन्तः षोड़श लकारा भवन्ति, तन्मात्रासमकं नाम छन्दः। अन्ते द्वाभ्याम् एको गुरुः कर्त्तव्यः। नवमश्च लकार एव। द्विर्वसव इति द्विगुणिता वसवः, लकाराः षोड़श इत्यर्थः। शेषे परेण युङ्‌ न साकमित्यनुवर्त्तनीयम्। तत्रोदाहरणम्—

ल० गु०
१।२ ३।४ ५ ६ ७।८ ९ १० ११।१२ १३।१४ १५।१६
अ श्म श्रु मु खो वि र लै र्द न्तै-

ल० गु०
१।२ ३।४ ५।६ ७।८ ९ १० ११।१२ १३।१४ १५।१६
र्गं भी रा चो मि त ना मा ग्रः।

ल० गु०
१।२ ३।४ ५ ६ ७।८ ९ १० ११।१२ १३।१४ १५।१६
नि र्मां स ह नुः स्फु टि तैः कै शै-

ल० गु०
१।२ ३।४ ५ ६ ७।८ ९ १० ११।१२ १३।१४ १५।१६
र्मा त्रा स म कं ल भ ते दुः खम् ॥

गन्त इति अनेनैवान्तस्य गुरुत्वे सिद्धे पुनः गन्तग्रहणमातिदेशिकगुरुत्वनिवृत्त्यर्थम्। तेनात्र द्वौ लकारौ भङ्क्त्वा द्विमात्रिको गुरुः क्रियते इति वाक्यशेषः ॥ ४२ ॥

---

৪২। যাহার প্রত্যেক পাদে অন্তে একটি গুরুবর্ণ থাকিয়া মোট ষোড়শ লকার থাকে এবং নবম লকার সঙ্গত না থাকে, তাহাকে "মাত্রাসমক" বলে।

## द्वादशश्च वानवासिका ॥ ४३ ॥

यस्य मात्रासमकस्य पादे द्वादशो लकारः स्वरूपेणावतिष्ठते, चकारात् नवमश्च, तन्मात्रासमकं वानवासिका नाम ॥ तत्रोदाहरणम्—

ल० ल० गु०
१।२ ३ ४ ५।६ ७।८ ९ १० ११ १२ १३।१४ १५।१६
म न्म थ चा प ध्व नि र म णी यः

ल० ल० गु०
१ २ ३ ४ ५।६ ७ ८ ९ १० ११ १२ १३।१४ १५।१६
सु र त म हो त् स व प ट ह नि ना दः।

ल० ल० गु०
१ २ ३।४ ५।६ ७।८ ९ १० ११ १२ १३।१४ १५।१६
व न वा स स्त्री स्व नि त वि शे षः

ल० ल० गु०
१।२ ३ ४ ५।६ ७।८ ९ १० ११ १२ १३।१४ १५।१६
क स्य न चि त्तं र म य ति पुं सः ॥ ४३ ॥

## विश्लोकः पञ्चमाष्टमौ ॥ ४४ ॥

द्वादशग्रहणं नवमग्रहणञ्च निवृत्तम्। यत्र चतुष्पादेषु पञ्चमाष्टमौ लकारौ तिष्ठतः, शेषं यथाप्राप्तं, तन्मात्रासमकं विश्लोको नाम ॥ तत्रोदाहरणम्—

---

৪৩। যেই মাত্রাসমকের প্রত্যেক পাদে দ্বাদশ লকার ও নবম লকার স্বরূপতঃই অবস্থিত থাকে, অর্থাৎ কোন ও গুরুবর্ণ সম্বদ্ধ না হয়, তাহাকে "বানবাসিকা" নামক মাত্রাসমক বলে।

৪৪। যেই মাত্রাসমকের প্রত্যেক পাদে পঞ্চম এবং অষ্টম লকার স্বরূপতঃই অবস্থিত থাকে, তাহাকে "বিশ্লোক" নামক মাত্রাসমক বলে।

ल० ल० गु०
१।२ ३।४ ५ ६ ७ ८ ९।१० ११।१२ १३।१४ १५।१६
भ्रा त गुं ण र हि तं वि श्लो कं

ल० ल० गु०
१।२ ३ ४ ५ ६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
दु र्णय क र ण क द र्थि त लो कम्।

ल० ल० गु०
१।२ ३।४ ५ ६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
जा तं म हि त कु ले ऽप्य वि नी तं

ल० ल० गु०
१।२ ३।४ ५ ६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
मि त्रं प रि ह र सा धु वि गो तम्॥ ४४॥

## चित्रा, नवमश्च॥ ४५॥

यस्य नवमो लकार एवावतिष्ठते, चकारात् पञ्चमाष्टमौ च, तन्मात्रासमकं चित्रा नाम॥ तत्रोदाहरणम्—

ल० ल० ल० गु०
१ २ ३।४ ५ ६ ७ ८ ९ १० ११।१२ १३।१४ १५।१६
य दि वा ञ्छ सि प र प द मा रो ढुं

ल० ल० ल० गु०
१।२ ३।४ ५ ६ ७ ८ ९ १० ११ १२ १३।१४ १५।१६
मै त्रीं प रि ह र स ह व नि ता भिः।

---

৪৫। যাহার নবম পঞ্চম ও অষ্টম লকার স্বরূপে অবস্থিত হয়, তাহাকে "চিত্রা" নামক মাত্রাসমক বলে।

लं० लं० लं० गु०

१।२ ३ ४ ५ ६ ७ ८ ९ १० ११।१२ १३।१४ १५।१६

मृ ग्यति मु नि र पि वि ष या म ङ्गा-

लं० लं० लं० गु०

१।२ ३।४ ५ ६ ७ ८ ९ १० ११।१२ १३।१४ १५।१६

श्चि त्ता भ व ति हि म न सो तृ प्तिः ॥

नवम इत्यनुवर्त्तमानेऽपि पुनर्नव मग्रहणमुपचित्राप्रतिप्रसवार्थम् ॥ ४५ ॥

## परयुक्तेनोपचित्रा ॥ ४६ ॥

परयुक्तेन दशमेन सह एकीभूतेन नवमेनोपचित्रा नाम भवति। पूर्वं लघुनियमेन लक्षणं प्रोक्तम्। इदं तु गुरुनियमेनाच्यते ॥ तत्रोदाहरणम्—

गु०

१।२ ३।४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६

य च्चि त्तं गु रु स क्त मु दा रं

गु०

१।२ ३।४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६

वि द्या भ्या स म हा व्य स नं च।

गु०

१।२ ३।४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६

पृ थ्वी त स्य गु णै रु प चि त्रा

गु०

१।२ ३ ४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६

च न्द्र म री चि नि भै र्भ व ती यम् ॥ ४६

४६। যাহার নবম দশমের সহিত একীভূত (অর্থাৎ একটি গুরুবর্ণ দ্বারা নিবদ্ধ) হয় তাহাকে "উপচিত্রা" বলে।

## सहमरणम् ।

सहमरणं नाम पत्या सह मरणमविरतमेव भारते अगणिताः पतिगतप्राणाः ललना अतिबलं ज्वलिते लोलजिह्वे भर्त्तुश्चितानले सलिल इव सलीलं प्रविश्य सम्पादयामासुः । अधुना च राजविधानविधिना निषिद्धतया साध्वीनां तत्रभवतीनामार्य्यरमणीनां सन्ततमभिलषितमपि तच्चितारोहणं प्रायो न सम्पद्यते । किन्त्वद्यापि साध्वीनां काचित् पतिपादपद्मं सतीजनैकसद्म ध्यायन्ती श्वासं निरोध्य काचिदतिकोमला परिभ्रष्टपतिपादकमला छिन्नमूला लतेव स्वत एव परिम्लाना, काचिद्वा पतिमरणक्षण एव तच्चरणैकक्षणपरा लब्धापूर्व्वविलक्षणयोगलक्षणा म्रियत इत्यन्तरान्तर श्रूयते । पतिविरहमसहमानानां मृत्वापि रमणीजनैकशरणं रमणीयरमणचरणं लब्धुं समीहमानानां प्रच्छन्नतोऽनलसंयोगादिना पतिपरित्यक्तमसारदेहं विहाय परलोकप्रस्थितानां वार्त्ता च प्रायश एव संवादपत्रादौ परिकीर्त्यते । एतावता चैतदनायासेनैवावगन्तुं शक्यते, यदद्यापि भारततले ललनाललामभूतानां सतीनां सर्व्वथा नाभावः सम्भव इति । या भारतभूतधात्री एकदा सतीसमाजशीर्षस्थानीयायाः सीतायाः प्रसवित्री चरमं पवित्रताचित्रं दर्शयामास, यत्र चैकदा सावित्री पवित्रीकृतलोकयात्रा पतिचरणैकमात्रशरणा यममपि दमयित्वा पातिव्रत्यचरमोत्कर्षप्रदर्शनेन त्रिलोक एव विस्मयालोकं प्रकाशयामास । यत्र च सीमन्तिनी दमयन्ती कान्तपरित्यक्ताप्येकान्ते

कान्त-चरणैकचिन्तनपरा कामासक्तं निषादापसदं नयनज्योतिषैव भस्ममादकार्षीत्, तत्रत्यानां ललनानां मानसपटात् पवित्रं सती-चरित्रचित्रं न कदापि विलुप्येत। अद्य यदादर्शसतीचित्रं सहर्ष मादर्शयितुं प्रबन्धोऽयमवतार्य्यते, तेनापि परिज्ञातुं शक्येत, यदद्यापि भारतीयजीर्णशीर्णपर्णनिलये पूर्णमाहात्म्येनैवानुत्तमा सतीप्रतिमा विराजते। ये तु धर्म्ममर्म्मानभिज्ञाः सावित्र्यादिचरित्राणां काल्प-निकत्वं कल्पयन्ति, तेऽप्येतत् सतीविवरणमाकर्ण्य "नास्ति किमप्य-साध्यं पतिव्रताना"मिति विश्वसन्ति।

विगताषाढ़मासस्य त्रयोदशदिवसे बभ्रुवाहनराज्य-मणिपुरे यदद्भुतं चितारोहणं सम्पन्नं, यत्सहायताकरणापराधेन कतिपये जना अपि राजकीयविचारालये दण्डिताः, तस्यैव यद्विवरणं मणि-पुरस्थप्रधानविचारकमन्तव्यात् संवादपत्रादौ प्रकटितं, तदेवाद्य समतीवाश्चर्य्यजनकमार्य्यप्रभाग्राहकेभ्यो विज्ञापयामीति नास्त्यत्र लेशतोऽप्यविश्वासकारणम्।

विगताषाढ़मासस्य त्रयोदशदिवसे ( २७ जुन ) मणिपुरान्तर्गत ज्वाराउलिग्रामे रामलालनामक एको ब्राह्मणः सूर्य्योदयसमये पञ्चत्वमगमत्, ततस्तस्य युवती भार्य्या जयदेवी चितारोहणविधिना स्वामिनोऽनुगमनस्याभिलाषमभिश्रवत्, तत् श्रुत्वा च तस्या बान्धवाः कृतनिर्बन्धाः अन्येऽपि मान्या जना बहुविधां बाधां प्रदर्श्य तां न्यषेधिषुः। किन्तु दृढ़व्रता सा जयदेवी कथंकथमपि तत्सङ्कल्पं नात्याक्षीत्। अगत्या तदात्मीयैर्नगररक्षिणे राजपुरुषाय तद्वार्त्ताम् विज्ञाप्य श्मशानभूमौ शवे नीयमाने निषिद्धगमनापि जयदेवी निषेधे स्वक्षेपमकुर्व्वाणा सयत्नं पुष्परत्नादिकं चतुर्द्दिक्षु क्षिपन्ती साक्षात्-शिवतुल्यं तत्शवदेहमन्वसरत्। एतत् पुनरतीवाश्चर्य्यजनकं यत्तन्निक्षिप्तं पुष्परत्नादिकमेकमपि भूमौ न निपतितं, तदनुयायिकैः सुनिपुणं निरूप्यापि निर्द्धारयितुं न पारितं, केनालक्षितभावे-

नान्तरीक्षादेव तदपहृतं, मन्ये तदलौकिकव्यापारमालोकितु-मुपगतैर्देवैरेव सतीकरतलस्पर्शपवित्रीकृततयाऽलक्षितभावेनान्त-रीक्षात्तदुग्रहीतमिति। गमनकाले च तस्याः सा मूर्त्तिः कीदृक् स्फूर्त्त्या परिवर्त्तिता तत् कीर्त्तयित्वा बोधयितुं नैव शक्यते, परन्त्वेतावतैव विज्ञेयं यत्तत्तेजःपुञ्जमालोक्य सञ्जातसाध्वसाः केऽपि तां पुनर्निषेद्धुं न प्राभवन्। यथास्थानमुपनीते च शवदेहे "सती सहमरणं यातीति" वार्त्तया शङ्किताः स्तम्भिता-श्चमत्कृताः समुत्सुकाश्च द्विसहस्राधिका लोका व्यस्तास्तत्रोपतस्थुः। ततो जयदेवीं साक्षाद्देवीमिव विलोक्य तन्निदेशवर्त्तिभिरिव सर्व्वैस्तन्निर्दिष्ट एव स्थाने समुचितायां चितायां विरचितायां सती जयदेवी जयारवपूर्व्वकं चरणं पतिदेहं समीक्षमाणा सप्त वारान् प्रदक्षिणीकृत्य स्वामिनो मस्तकं क्रोडे निधाय चितायामुपाविशत्। ततः सोत्कण्ठद्विसहस्राधिककण्ठोच्चरितैर्जयदेवीजयारवैर्दशदिशि मुखरितायां सा किञ्चिद्घृतं चितोपरि संस्थाप्यतां प्रज्वालयितुमादिशत्। किन्तु भीतः कोऽपि जीवितदेहं दाहयितुं वह्निसंयोजनं नाङ्गीकृतवान्। परन्तु कश्चिदुद्धतस्वभावो युवा पश्चाद्देशादतिसाहसादुपहसन्निवाब्रवीत् "यदि त्वं यथार्थतः सती तदा स्वप्रभावेणैव वह्निं प्रज्वालय किमितरसन्निधापितेन वह्निर्व्वह्निना" तत् श्रुत्वा च सा वाक्यव्ययमकृत्वा किञ्चिदिव हसन्ती मृतपत्युः कर्णे किमिव व्याहरन्ती ऊर्द्ध्वलोकमवलोक्य सुमधुरकरतलध्वनिमकार्षीत्। अहो कल्पनातीतः सतीप्रभावः! कृते च सर्व्वजनमनोमुग्धकारिणि करतलध्वनौ तत्क्षणादेवालक्षितभावेन सर्व्वजनसमक्षं तत्रानलः स्वयं प्रज्वलितः सहसैवातिलोललकलकजिह्वया तद्दम्पतिदेहं भस्मावशेषमग्रसीत्। तद्दृष्ट्वा च सर्व्वे हृष्टाः विस्मयाविष्टाः स्तम्भिताश्चमत्कृताश्च सहस्रसहस्रकण्ठैर्जयदेवीविजयमुच्चैराघोषयन्तः सतीमाहात्म्यमस्तुवन्। मन्ये शतशतनारीजनकमनीयकण्ठोत्थितः जयकारिणाकारिता दिव्याङ्गना

अपि तत्र सङ्गता अगख्यधन्यवादेन तां प्रशशंसुः। तत्प्रबला-नलान्तरालेऽप्यनेकैरेव तत्सतीवदनमीषद्धास्ययुक्तमवलोकितमित्यहो किमपरं विस्मयावहं नाम!! यैरयमलौकिकव्यापारः प्रत्यक्षी-क्तस्तेऽपि सर्व्वथैव सार्थकजीविताः, सीतासावित्र्यादिसतीनाम-साध्यसाधनादावपि सन्देहः सर्व्वथैव तेषां तिरोहितः। किन्तु कालस्य कुटिलावर्त्तनेनालोड़ितमेतद्बहुजनप्रत्यक्षीकृतं पवित्रं सतीचरित्रमपि पुराणाद्युपवर्णितालौकिकवृत्तवत् पुनरविश्वास-सागरातलजले विलीयेत। शक्तिह्रासेन सहैवाविश्वासः क्रमशो वर्द्धते, अस्मिंश्च युगे वयमेतादृशाः क्षीणशक्तयः सञ्जाताः, यत् कथञ्चिदप्यलौकिकं विश्वसितुं न पारयामः, तस्मादेतदपि परि-वर्णितं सतीचित्रं यत् केचिद्विश्वसितुं न प्रभविष्यन्ति, किं तत्र चित्रं ? किन्तु तदविश्वासेन प्रकृतसत्यस्यापलापो न भवेत्, विशेषतस्तु ये कथञ्चिदपि शक्तिशालिनस्तैश्चिरकालमवश्यमेव विश्वसनीयमिति सीतासावित्र्यादि-चरित्रवदेतद्दिचित्रसतीचरित्रमपि यथा भारतेति-हासवक्षसि समुज्ज्वलं स्वर्णाक्षरैर्लिखितं वर्त्तेत, यथा चैवं पवित्रं सतीचित्रं भारतीयप्रतिगृहमलङ्कुर्य्यात्तथावश्यमेव यतितव्यमार्य्य-सन्तानैः। देशहितैकव्रतैः कमलोपलालितभारतीयसुसन्तानैरपि एतस्या अनुपमसतीप्रतिमाया आजन्म जीवनवृत्तान्तं सविशेषपरि-चयं संगृह्य सर्व्वत्र तत्प्रचारव्यवस्था विधेया। तद्दाहस्थानमपि यथा चिरकालं सतीकीर्त्तिं परिकीर्त्तयेत्तथा तत्र कश्चित् स्थायी कीर्त्ति-स्तम्भः स्थापनीय इति।

## शोचनश्लोकाः।

१। आहारनिद्राभयमैथुनञ्च सामान्यमेतत् पुरुषैर्वधूनाम्।
प्रसूतिरासामधिको विशेषः प्रसूतिहीनाः पुरुषैः समानाः॥

२। षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता।
लज्जा मानं घृणा शौर्य्यं धर्म्मश्च सत्यवादिता॥

३ । मा पण्डित ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
विद्यागारे प्रतीच्यानां स्वातन्त्र्यञ्चेच्छसे यतः ॥

४ । मतिचोरं रसेन स्यात् रसगोलं रसे गुरु ।
प्रभुत्वं रसमूलञ्च काव्यतीर्थेऽपि जायते ॥

५ । वेतनं भोजनागारः स्वास्थ्यसत्सङ्गशिष्यकाः ।
पञ्च यत्र न विद्यन्ते तत्र दास्यं न कारयेत् ॥

६ । अर्थो ददाति सम्मानं सम्मानाद्जायते यशः ।
यशसो धर्म्मपात्रत्वं ततः सुखमियं कथा ॥

७ । बहुभार्य्यो बहुकन्यः शिक्षकश्च याजनिको विप्रः ।
यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः ॥

८ । शुश्रूषस्व खलान्, कुरु प्रियसुहृद्वृत्तिं सुधूर्त्ते जने
भर्त्तुर्विप्रकृतः स्वलाभवशगो मास्म प्रतीपंगमः ।
व्यक्तित्वं विजहीहि सम्मतिपरो भूयाः सदादुष्टके
यान्त्येवं धनिनां पदं खलु नरा वामा विनष्टाः परम् ।

विदीर्णवक्षसा पण्डितेन केनापि भाषिताः ॥

---

## प्रतिभा ।

( श्रावणात् परम् )

हा देव ! हा मातः ! यस्या बिन्दुमात्रनेत्रजलमालोक्यैवामङ्गलशङ्कया नितरां व्याकुलता प्रतिपादिता । या च तदाकूलताभयेन सततशतयातनापरीतातितापितापि कदापि न प्रमुक्तकण्ठमरोदीत्, दृश्यतामद्य सा मन्दभागधेया नक्तन्दिवमविरतं क्रन्दन्ती कैरपि नावलोक्यते ।

हा आर्य्यपुत्र ! कुत्रासि किमेवमपराद्धं ते चरणारविन्दयोः ? सति वा ममापराधे को दोषस्ते साक्षाद्दयावतारयोर्म्मातरपितरयोः ?

यन्मृत्युकालेऽपि पुनः पुनः समाहूतो नैकवारमपि समायातः ? अयि ! पाषाणवद्धहृदय ! यदा तावन्तकाले एकवारमात्रं शेषदर्शनं ते मुखचन्द्रस्य प्रार्थयित्वापि नावाप्तवन्तौ, दूतवचनेन सर्व्वथा हताशावपि सुदीर्घं निश्वस्य त्वामेवाहूय विलपन्तौ क्रमशो लोकान्तरितौ, तत्कालकृतं ते व्यवहारं स्मरन्त्या न निर्णेतुं शक्यते, कीदृक् परिवर्त्तेत मनुष्यचरितमिति। अयि कान्त ! एकान्तमनसा कदापि किं न चिन्त्यते ? क्वैकदा ते समुच्चतमे स्थाने समास्तृतमासनमासीदधुना वा कस्मिन्निम्नान्निम्नतमे तन्निपतितमिति। यद्भवतु, मम च त्वं यथापूर्व्वं स देवतुल्य एव, तस्मादेव च स्वामिन् ! तवैव सर्व्वस्वमन्तकाले श्वशुरदेवेन मह्यं प्रदत्तमपि तवैव प्रीतये यथासम्भवं विसर्ज्जितं, शिष्टञ्च यदासीदङ्गभूषणं तदप्यागमनकाले "पतिपरित्यक्तदेहं भूषणायोग्य"मिति विभाव्य तवैव मनस्तुष्ट्यर्थमर्पितं, किन्तु हन्त ! तथाप्यन्तकालेऽपि नासादितन्ते चरणप्रान्तमित्यैकान्तिकं दुःखं लोकान्तरचरम्। एवं विलपन्त्याश्च तस्या अनिवार्य्यशोकोद्वेगेन विलुप्तधैर्य्याया वाष्पोपरुद्धकण्ठतयेव पुनरपि मूर्च्छा व्यजायत। तामालोक्य च चिरमूर्च्छां मन्यमानातिवेपमाना इन्दुप्रभा प्रमुक्तकण्ठं रोरुद्यमानापि "अये नायं रोदनसमयः धैर्य्यमालम्ब्य परिचर्य्यता"मिति सरलया प्रबोध्यमाना पुनर्यथोचितं परिचरणमारभत, किन्तु केवलं तद्वाक्यावलीं पर्य्यालोचयन्त्यास्तस्याः प्रबलपर्य्याकूलतामवाप चेतः।

सदानन्दस्तु तत्क्रन्दनमाकर्ण्यातिसन्दिहानः सत्वरमागत्य मस्तकपार्श्वे सचेष्टाया उपविष्टायाः सरलायाः सर्व्वं समाकलय्य पतिपरित्यक्तेयं मरणार्थमेव मन्दाकिनीमग्नेत्यवधारयामास। अहो ईदृशस्याप्याकृतिविशेषस्य पत्न्या परित्याग इति गुरुतरेणात्र कारणेन भवितव्यमिति शङ्कातङ्कितचेतास्तत्रैवोपविवेश। तदानीं सर्व्वेषामेव जोषमासीनानां तेषां कस्य मनसि कीदृशश्चिन्तासमावेश आसीदिति

त एव जानन्ति, किन्तु विषमविषादचिह्नसंच्छन्नानि च मुखानि सर्व्वेषामेव। तस्मिन्नेव क्षणे पुनरपि सा चक्षुरुन्मील्य किमिवावलोकयितुं विस्फारितनेत्रा परिचरित्रीं सरलामिन्दुप्रभाञ्चावलोक्य विस्मितास्तम्भिता भीतेवाचिन्तयत्—"हा हन्त! काहं कुत्रासम्, कुत्र वास्मि समायाता? कथन्तदमन्दमरुदान्दोलितमन्दाकिनीकल्लोलं नावलोकयामि? गङ्गैव किं स्वीयोत्तुङ्गतरङ्गान्तराले तिरोधाप्य" मे जीवितसर्व्वस्वस्याङ्गं तन्मेलनभिया तापिताङ्गं मे तरङ्गाघातेन तीरमुत्तोलितवती? कस्येदं गृहं, कथमत्राहं समानीता? साक्षाद्देवीप्रतिमेव के एते मां परिचरतः? कोऽयं वापरः शिवानुध्यानपरः शिव इवोपविष्टो महात्मा, यद्दर्शनेनैवान्तरात्मा प्रसीदति, शतकृत्वो विचिन्त्यापि कारणं नावधारयाम्येतदघटनघटनस्य। तत् किं सत्यमेव पत्युरनुगमनमपि न मे संवृत्तं मन्दभाग्यायाः? अहो केनेदमनिष्टमाचरितं दुष्टेन? अथवा दुरदृष्टमेव मे सर्व्वकष्टनिदानमशिष्टायाः।" एवं चिन्तयन्ती च क्रमश एव लब्धचेतना सुप्तोत्थितेव सा वदनसन्निधानोपविष्टां सरलां सकष्टं स्पष्टमाचष्ट। अयि महाभागे! का त्वं मां मन्दभागिनीं भगिनीनिर्व्विशेषं परिचरसि? केयमपरा मत्शुश्रूषणपरा विमुञ्चति सहस्रधारमजस्रमश्रूनि, को वायमपरो महाभागोभगवदवतार इव गणयति मे भागधेयं मन्दभाग्यायाः। एकान्ततो विचिन्त्यापि न स्मरामि युष्माकं परिचयस्य। अथवा को वास्ति मे जगत्यां परिचितः? क्रमशः परिचयसूत्रमपि मे जगतो विलीनतामुपगतम्। अयि व्यवहारानुमितपूतचरिते! कथय कथं केनाहमत्र समानीता सन्तापपरीतचित्ता? कथं वा युष्माभिरेवमस्मि शुश्रूषिता? यदि केवलं मद्‌जीवनार्थमेतावत् शुश्रूषणं तद्विरम्यतां नाहमस्मि भाजनं जीवनस्य, मरणमेव मे शरणम्, यद्यपि युष्माकं सौम्याकृतिदर्शनेमान्यद्भीतिकारणमत्रास्तीति न मन्ये, तथापि वेपते परावास-निवास-

भीतकं मे हृदयमनारतम्। यस्य च जगति किमपि लक्ष्यं न समीक्ष्यते, किं फलं तस्य जीवितेन ? वरं मरणमेव तस्य बहुतरक्लेश-शमनं, विशेषतः पदे पदे सम्भावितापदो मादृशस्यासहायस्य स्त्रीजनस्य। अयि परहितव्रतनिरते ! पतामि ते पादयोः, सत्यं ब्रवीमि मरणमेव हि मे हितं, मरणमृते कथंकथमपि नास्ति मे शान्तिः। श्रूयते हि मुमूर्षतीत्यादि-वाक्यानामौपचारिकत्वं कल्पयन्तः सन्तः "कस्यापि मरणेच्छा न जायते" इति सिद्धान्तयन्ति, किन्तु तेऽपि यद्यस्मादृशचित्तमनुवर्त्तेरंस्तदा कदाचिदपि नैवं सिद्धान्तयेरन्। यदि मरणाभिलाष एव नाजनिष्यत्तदा किमगणिता योषितो भस्मीकृत-सर्वस्वे भर्त्तुः श्मशानानले स्वदेहमपातयिष्यन्। वस्तुतस्तासां रमणीनां मरणविवरणपर्य्यालोचनेनैतदवधार्य्यं पतिविरहितानां सतीनां तदनु-गमनसमं नास्ति शान्तिनिकेतनमिति। हा हन्त !! सन्ततं चेष्ट-मानाया अपि दुरदृष्टतो मे तदनुसरणमपि नाजनिष्ट। जाने किं वातः परं दैवदुर्व्विलसितमिति ? एवं कथयन्ती च सा हताशा शोकावेग-मसहमाना विवक्षुरपि वक्तुमसमर्थेवामन्दं चक्रन्द। तत्क्रन्दन-माकर्ण्य च सदानन्दो मन्दं मन्दमवादीत्। अयि मातर्नास्त्यत्र ते किमपि भीतिकारणम्, विहाय सर्व्वां दुश्चिन्तां प्रकृतिस्थतामासु यतस्व, स्वस्थायाश्च ते सर्व्वामवस्थामुपश्रुत्य यथोचितसुव्यवस्थां विधा-स्यामि। शोकादिभिराकुलीक्रियमाणतया सम्पद्यमानायामपि मरणेच्छायां सा न युक्ततमा, यतः स्वक्लेशनिवारणाभिसन्धिमूलकतया केवलं स्वार्थपरतैव प्रकल्प्यते। अथच स्वार्थसिद्धिरपि यथार्थतो न भवेत्, यस्मान्मरणानन्तरमेव क्लेशभोगैकबीजं स्वस्वकर्म्मानुरूपं पुनर्जन्म ग्रहीतव्यं। तदुक्तं—"ध्रुवं जन्म मृतस्य च।" जन्मसाम-यिकस्य क्लेशः कीदृश इति तु तत्स्मरणशीला जातिस्मरादय एव वक्तुं शक्नुयुः, शास्त्रतस्तुततोऽधिकं दुःखं नास्तीत्येवावगम्यते।

( क्रमशः )

// आर्य्यप्रभा।

चतुर्थवर्षं। } सुदुर्लभा: सर्व्वमनोरमा गिर:। { ६४ संख्या।

## आवाहनम्।

आयाहि मातरतिदुर्गत-पुत्रवर्गान्
संसर्गदोष-विवशानु-पसर्ग-मुग्धान्।
दुर्गे! त्रिवर्गरहितानपवर्गमार्गे
नैसर्गिक स्वकरुणात इतो नयस्व॥ १

आश्वासयत्यतितरां पुनराश्विनोऽयं
संस्मारयंस्तव शुभागमनस्य वार्त्ताम्।
उत्सङ्गसङ्गजसुखादधिकं जनन्या
आशाप्रदं त्रिभुवने किमिहास्ति जन्तो:॥ २

अस्मिन् कुपुत्रपरिपूरितभारतेऽपि
संवत्सरात् परमहो यदिहाभ्युपैसि।
निष्कारणात्र करुणा नियता जनन्या
नोचेत्तवाहुतिविधावपि के वयं स्म:॥ ३

आगत्य पश्य सदये! तनयास्तवास्मिन्
कीदृग्-विपत्तिपतिता हृतसर्व्ववित्ता:।
दुर्भिक्षदावदहनै: सततं विदग्धा:
मूर्खास्तु सन्तु कति वा विकला विदग्धा:॥ ४

दुर्भिक्षदु:खमयि किं कथयामि मात:
पश्य स्वयं प्रतिगृहं कति वाऽतिनिस्वा:।
एकाशनानशनजै: परितापजातै:
कार्श्यं परं प्रतिदिनं कथमाविशन्ति॥ ५

आबालवृद्धवनिता: कति वा विपन्ना:
पथ्योदरान्नचयने समयेऽसमर्थाः।
दुष्पाच्यशाककदलीतरुमूलकादीन्
भुक्त्वा क्षुधातिविहता: समयं नयन्ति ॥ ६
तद्भोजनस्य च फलादचिराज्जनौघा:
रोगेऽतिदु:सहतरे निपतन्ति तेन।
केचित् कृतान्तनिलयातिथितां लभन्ते
जीवन्ति ये चिरमहो न च तेऽपि सुस्था: ॥ ७
पश्य क्वचित् शिशुगणान् रुदत: क्षुधार्त्तान्
अस्तीति नास्ति च गृहे गणनानभिज्ञान्।
चेलाञ्चलं प्रतिपलं दधतो जनन्या:
किञ्चिच्च भक्ष्यमसकृद्दत याचमानान् ॥ ८
तद्दानशक्तिविरहा हतभागधेया
रोरुद्यमानवदना जननी तदानीम्।
कीदृग्-दशामनुभवेदिति लोकयन्त्या:
पाषाणनन्दिनि! गलेद्-हृदयं तवापि ॥ ९
इत्थञ्च दु:खमनिशं न च सोढुमर्हा
उद्बन्धनादिभिरहो मरणं जनन्य:।
प्रायो व्रजन्ति शरणं किमत:परं वा
दु:खं बतास्ति भुवने यदिहाभ्युपैति ॥ १०
वर्षाजलैरभिहता जनताऽपरत्र
संलुप्तसर्व्वविभवा भवनैश्च हीना।
कीदृक् सुदु:सहदशापतितेति पश्य
तद्दर्शनेन हृदयं विगलेन्न कस्य ॥ ११
तत्प्लावनस्य समये यदहृश्यदृश्यं
सम्पन्नमत्र किमु तत् परिवर्णयामि।

स्रस्तं मनोऽतिविकलं परिकम्प्यमानं
नो लेखनी प्रसरति स्वयमायसापि ॥ १२
आस्तां समस्तमपि तवन्हि दुःखजातैः
संक्षोभयामि हृदयं सदयं तवान्यैः ।
संदृश्य हृष्यतु मनः कथमिङ्गितैस्ते
तद्दुःखिरक्षणविधौ सुजना यतस्ते ॥ १३
एकत्र धन्यधनिनो धनमर्पयन्ति
तत्संग्रहार्पणविधौ निरतास्तथान्ये ।
कायैश्च छात्रनिचयाः समतीव यत्नैः
सोत्साहमत्र विषमाण्यपि साधयन्ति ॥ १४
कर्म्मेश्वराजपुरुषाः करुणावताराः
व्यग्राः समग्रविषये कृतदृष्टिपाताः ।
नानाविधोपकरणैरुचितं चरन्ति
सम्यङ्न शाम्यति तथाप्यतितीव्रदुःखम् ॥ १५
सन्तापसन्ततियुता अपि भारतीया
विस्मृत्य सर्वमचिरादिव नव्यभावाः ।
मातस्तवागमनवासरमास्मरन्त
उद्ग्रीवभावमनुभूय सदा वसन्ति ॥ १६
आगच्छ दुर्गतिहरे! हर नो विषादं
सन्दर्श्य रूपममलं वरदाभिरामम् ।
अस्मादृशाः परवशा न च सन्ति दुःखै-
र्भव्येषु याति करुणा स च कः प्रसादः ॥ १७
आर्य्यप्रभा तव पदे चिरमर्पितेयं
त्वत्पादपद्मविभवाद्बुधसद्ममध्ये ।
निर्भीतितो भ्रमतु किं न च तेऽङ्घ्रिसङ्गा-
न्निर्म्माल्यतां व्रजति गन्धविहीन-पुष्पम् ॥ १८

# प्राप्तग्रन्थानां संक्षिप्तसमालोचनम् ।

१। सुभद्राहरणम्। संस्कृतभाषामयं काव्यम्। कायस्थ-कुलभूषणेन श्रीमता हेमचन्द्रराय (एम, ए,) कविभूषणेन प्रणीतम्। इतःपूर्व्वमुदीयमानस्यास्य कवेः रुक्मिणीहरणादि काव्यजातं विरचयितुः परिचयोऽस्माभिः आर्य्यप्रभाग्राहकेभ्योः निवेदितः। रुक्मिणीहरणादि-काव्येषु अस्य सुमहद्रचनापाण्डित्यमस्माभिरधिगतम्। इदानीं सुभद्राहरणे तस्य ततोऽपि प्रकर्षं अधिगम्य नितरां आनन्दिता वयं कवेरस्य दीर्घजीवनमाशास्महे। स्थाने स्थाने वर्णनानैपुण्यमेवं प्रकटीकृतं, यत् विस्मारयति बलादिव कवेरस्य नवीनताम्। नानाभावसमुज्ज्वलमपि इदं काव्यं प्रसादगुणोपेततया सुभगप्रसरं सहृदयहृदयानां काव्यरसिकानां मनोरञ्जकञ्च जातम्। कवेरस्य दोषराहित्यकरणे अलङ्कारग्रहे च महान् प्रयत्न इति काव्यपाठादधिगम्यते। वयमस्य कृतित्वं प्रशंसन्तः प्रार्थयामहे, यत् सर्व्वैरेव काव्यरसिकैरस्य काव्यप्रणयनोत्साहो वर्द्धयितव्य इति॥

२। हिन्दुसखा। संस्कृतग्रन्थोपेतं वङ्गभाषामयं मासिकपत्रम्। हुगलीजिलान्तर्गत-कैकालास्थानतः श्रीयुक्त-राजकुमार-काव्यस्मृतिवेदतीर्थेन वि, ए, इत्युपाधिक-श्रीयुक्त-माधवदास-भट्टाचार्य्येण च सम्पाद्यमानमिदं प्रकाशते यथानियतम्। पत्रिकेयम् कौमारसीमानमुल्लङ्घ्य षष्ठे वर्षे वर्त्तते। अत्र प्रकाश्यमानाः हिन्दु-धर्म्म-शास्त्रीयग्रन्थाः अनुरुन्धन्ति ग्रहीतुं एकैकखण्डमस्याः सर्व्वान् हिन्दुधर्म्मिणः। एतत् प्रकाश्यमानाः प्रबन्धा अपि खदेरन् धर्म्म-प्राणेभ्यः हिन्दुभ्य इति आशास्महे। मूल्यमस्य वार्षिकं राजतमुद्रामात्रम्। इति शम्॥

३। प्रायश्चित्तपञ्चालिका। वङ्गभाषामयः पद्यैर्ग्रथितः स्मृति-ग्रन्थः। महामहोपाध्यायेन ⁄राधाकृष्ण-सार्वभौमेन साधारण-

बोधाय संगृहीत:। प्रकाशितश्चैष तत्रभवता हिन्दुसखासम्पादकेन राजकुमार-काव्यस्मृति-वेदतीर्थेन हुगली-कैकाला निवासिना। ये संस्कृतभाषामनधिगच्छन्त: इच्छन्ति धर्म्मशास्त्रीयव्यवस्थां परिज्ञातुं तेषां प्रायश्चित्तादिविषयपरिज्ञाने महानयं सुयोग: रचितो वेदतीर्थेन ईदृशं ग्रन्थं प्रकाशयता इत्यसौ धन्यवादार्ह: सर्व्वेषाम्। मूल्यमस्य आणकषट्कमात्रम्। सुयोगोऽयं न परिहार्य्य: धर्म्मप्राणैर्वङ्गीयैरित्यलम्।

---

## प्रतिभा।

( पूर्व्वतोऽनवृत्ता )

एवञ्च येन जन्मनिवारणं भवेत्तत्रैव यतितव्यं, यातनानुत्पादप्रार्थनशीलै: पुरुषार्थिभि:। विशेषतस्तु पश्य स्वस्य मरणेन मृतानां भर्तृपुत्रादीनां कोऽप्युपकार: साधितो न भवेत्, परन्तु यदि जीवित्वैव वेदादिविहितकर्म्मानुष्ठानादिना कथमपि तेषां पारलौकिकं मङ्गलं साधयितुं शक्नुयुस्तदैव तेषां प्रकृतमुपकारं साधयेयु:। तस्माद्या यथार्थत: पतिगतप्राणा:, पतिप्रीतये यासां चित्तं सन्ततमुद्भ्रान्तं, स्वयं शतक्लेशमङ्गीकृत्यापि पतिसुखसम्पादनेनैव या: कृतार्था:, सार्थकजीवितानां तासां सतीनां पत्युर्म्मरणेऽपि तदनुगमनचेष्टां विहाय शिष्टानुशिष्ट-सत्कर्म्मानुष्ठानादिना तस्य पारलौकिकं मङ्गलं सम्पादयितुं पवित्रचरित्रतया च जगत्त्रयं पवित्रयितुं यत्न: करणीय:। अनेन च त्वामपि मात:! सनिर्व्वन्धमनुरुन्धे, त्वं मरणवासनामपास्य धर्म्मे वर्त्तनि वर्त्तमाना आर्त्तशुश्रूषणादिसदनुष्ठाननिरता मर्त्त्यभूमौ पुन: सत्यमाविष्कृत्य पवित्रतयादर्शचरित्रा भव। एवं सारगर्भं युक्तियुक्तमुक्त्वा विरते च तस्मिन्, सरलापि सर्व्वान्त:करणेन तदनुमोद्य निगद्य च स्वस्वपरिचयं तत्प्राप्तिवृत्तान्तादिकमप्यामूलत: कथयित्वा बहु सान्त्वयामास। तत्सान्त्व-

नेन च कथञ्चित् प्रशान्तमानसापि सा वचसा किमपि प्रकाशयितु-मशक्ता दौर्ब्बल्यप्राबल्येन शय्यातलमेवाविलम्बं पुनराललम्बे।

ततः सदानन्दाज्ञया सरलया समानीतं तत्कालावस्थोचितं किमपि भोजनीयमनिच्छयापि तद्वाक्यमर्य्यादारक्षार्थमिव सा किञ्चिदभक्षयत्। एवं गते च किञ्चित्काले तज्जीविते सञ्जातप्रत्याशया सानन्दः सदानन्दः पुनरपि तां बह्वपदिश्य सरलामिन्दुप्रभाञ्च सावधानां विधाय तद्‌गृहान्निर्ययौ। गते च तस्मिन् सरला कथ-ञ्चिद्विश्रम्भालापप्रसङ्गेन तस्याः "प्रतिभे"ति नाममात्रं विज्ञायैव श्रान्तिदर्शनेन तां विश्रमितुमादिदेश। इन्दुप्रभा तु अप्रतिभेव किमिव स्वान्ते चिन्तयन्ती विगलिताजस्रास्रधारासहस्रा किमपि न व्याजहार, केवलमेकदृष्ट्या तामेव दृष्टवती समतिष्ठत। तद्‌दृष्ट्वा च विस्मयाविष्टचित्तया सरलया पृष्टापि निह्नुवानेवान्तर्निविष्टं भावं किमपि स्पष्टं नाचचक्षे। किन्तु तस्याश्चित्तं किमिवालभ्यं विचिन्व-दिव किमपि विस्मृतं स्मारयदिव समतीव पर्य्याकूलितमित्याकृत्यै-वानुमाय अधीरतावृद्धिशङ्कया सरलापि वक्तुं पुनर्नाजग्राह। परन्तु प्रतिभेन्दुप्रभयोः प्रकृततत्त्वजिज्ञासातिशय्येन तच्चिन्तयैव तस्याः प्रभाता रजनी। तत्प्रभातेन सहैव च प्रतिभाया अवस्थां परिज्ञातुं बहव एव पूर्व्वदिननिवृत्ताः सदानन्दनिलयमाजग्मुः। आगत्य च तस्याश्चैतन्यवृत्तान्तमवगत्यैव सञ्जातानन्दप्रवाहा अपि सर्व्वं परि-चयादिकमवगन्तुं समुत्कण्ठिता बभूवुः। किन्तु तदानीमपि सर्व्वेषा-मेवाविदिततया न तदवगतिसुयोगो जनानां समजनि। सुतरा-मनवगत्यैवागत्या भग्नमानसाः क्रमशः सर्व्व एव स्वस्वकार्य्याय प्रस्थिताः। ततो वर्द्धमानायां वेलायां सरलयानुरुध्यमाना प्रतिभा इन्दुप्रभा च सह तया कथञ्चिन्निवर्त्तितनित्यक्रिया भोजनादिकं सम्पाद्य एकासन एव सर्व्वाः समुपाविविशुः। ततः प्रचलितेषु पर-स्परविश्रम्भालापेषु सरला प्रतिभाया जलनिमज्जनान्तं सर्व्वं वृत्तान्त-जातं श्रोतुं सञ्जातस्पृहा समवोचत्। अयि प्रतिभे! यदि चित्ते

नान्यथा मन्यसे तदाशुश्रूषे तव जलनिमज्जनान्तमाजन्मत: सर्वं वृत्तान्तजातं, नोचेदन्तरायस्तदाभिधीयतामिति। तत् श्रुत्वा च प्रतिभा समुद्वेलिताश्रुप्रवाहा युगपत् स्मृतञ्च सर्व्वं दु:खजातं पुनर्नवीभावापन्नमिव सोढ़ुमक्षुवन्ती भीतेव चकितेव च इतस्ततो विलोकयन्ती सर्वत: स्थगितमिव अन्धकारमयमिव शून्यमिव जगन्मन्यमाना कथमप्यात्मानं धारयितुमसमर्था सञ्जातवेपथु: प्रबलवाताहतिच्छिन्नलतेव पतितुमारेभे, तदालोक्य च सरला सव्यग्रं बाहू प्रसार्य्य पतन्तीं तां धृतवती सापराधेव पुनर्यथोचितं परिचचार। इन्दुप्रभापि जलेन चक्षुषी प्रक्षाल्य व्यजनानिलेन गात्रं शीतलीकृत्य मस्तकोपरि-फुत्कारेण च वायुं प्रशमय्य तच्चैतन्यप्रतीक्षाञ्चक्रे। एवं परिचर्य्याफलेन कियत्कालपरमेव तां लब्धचैतन्यामवलोक्य सरला पुनर्जीवितमिवासाद्या ब्रवीत्, अयि प्रतिभे! अयथा ते पुनर्दु:खोज्जृम्भणस्य कारणमहमस्मि मन्दभागिनी, फुत्कारितवह्नेरिव स्मारितदु:खस्य पुनर्ज्वलनं जानन्त्यापि अविविचयन्त्या मया सर्व्वथा अकार्य्यमिदमनुष्ठितं, तद्विरम्यताम्। तत् श्रुत्वा च सर्व्वथाप्रतिपद्यमानचैतन्या प्रतिभा पुन: प्रत्यभाषत—"अयि परदु:खाकारितहृदये! क्लेशबहुला मे जीवनप्रवृत्तिर्दु:खप्रदा जीवलोकस्य विशेषत आत्मीयजनानाम्। मम पुनरायसकर्कशमानसाया: सन्ततमनुभवन्त्या एव जीवनं न बहिर्गतं किं भवेत् कथनेन? सर्व्वथा वज्रविघटितमिव मे शरीरं सहस्रश: शोकावेगघातप्रतिघाताभ्यामपि न व्याहन्येत। मन्ये मादृशं क्लेशबहुलं जीवनं जगति नास्ति द्वितीयम्, एकत्र सर्व्वविधं दु:खमनुभावयितुमिव निर्म्मितमिदं शरीरम्। श्रुतमात्मीयसन्निधाने दु:खनिवेदने ह्रासो भवेद्दु:खस्य, किन्तु समस्तात्मीयविगमेन तदवसरोऽपि न प्रसारमलभत मे मन्दभागिन्या:। नो जाने किमभिप्रायेण मरणप्रस्तुतापि पुनरात्मीयतया युष्मानहं प्रापिता? ममेति कृत्वा यमहं पश्यामि, तमेव संसारादपसारयति संहाररूपी शङ्कर इति समतीव शङ्कातङ्कितं मे हृदयमात्मीयतायां बिभेति।

किन्त्वनिच्छन्त्याऽपि बलादिवात्मीयभावो युष्मासु समुदेति, तस्मा-दाशङ्के युष्माकं कोमलहृदयमाकूलयितुं मे क्लेशबहुलेन जीवन-वृत्तान्तेन, तथापि यद्याग्रहस्तदा श्रूयतामित्युक्त्वा सा सगद्गद-मवादीत्—

अस्ति विन्ध्याचलतलगतमन्दाकिनीतीरे सुवर्णपुरं नाम नाति-समृद्धं नगरम्। तत्र शिवाराधनतत्परो लब्धशिवप्रसाद इव शिव-प्रसादनामा कश्चिदैश्यवरः प्रतिवसति स्म। तस्य गुणग्रामेण तद्-ग्रामवासिनो निवारितपरस्परसंग्रामाः सुखमन्ववात्सुः। यस्य दयया तत्रत्या दीना अपि दुर्भिक्षादि दुःखं नानुबभूवुः। यस्य मिष्टवाक्या-दिना विशिष्टाः शिष्टा अपि सदा सन्तुष्टा अतिष्ठन्त। यस्य अदम्याध्य-वसायेन व्याघ्रादयः प्रायस्तत्र नाध्यासिताः। यस्य च कुत्रापि न शत्रुः, परन्तु पितृभावेनैव यः सर्वदा तत्प्रान्तवासिभिर्लोकैर्व्यलोकि। तत्र ग्रामस्याधिनायक इव स एव मे मन्दभागिन्या जनकः। माता च मे मत्प्रसववेदनायैव हृतचेतना हतभाग्याया मे मुखं निरीक्षितुमनभिलषन्तीव पुनरलब्धचैतन्या बहुचिकित्सितापि मज्जन्मदिन एव दुःखातिभारं संसारं विहाय स्वर्गलोकमगात्। मत्पूर्व्वञ्च मे एका भगिनी समजनि, सा च सौष्ठवगरिष्ठा षष्ठवर्षदेशीया तस्मिन्नेव वर्षे पवित्रप्रयागक्षेत्रवासिनः सुप्रसिद्धशौर्य्य-वीर्य्यगाम्भीर्य्यादिसम्पन्नस्य प्रथितान्ववायस्य परमधर्म्मप्राणस्य धर्म्मेश्वरनाम्नो वैश्यवर्य्यस्य सर्व्वगुणसम्पन्नाय एकमात्रपुत्राय सारम्बड़ं दत्ता श्वशुरालयात् प्रथमानयनकाल एव प्रबलवाताभि-हतया नौकया सह समुत्तालतरङ्गे गङ्गासलिले विलयङ्गता सहस्रानु-सन्धानेनापि नाधिगता। सर्व्वस्नेहाधारभूतायास्तस्याः शोकेनैव नितरामभिभूतौ पितरौ, माता तु तद्दुर्व्विसहशोकावेगमसहमानेव दुस्तराद्दुःखसागरादुत्ततार। तातः पुनरुभयोर्गुरुतरशोकाभिहतो-ऽपि विवेकबुद्ध्या जगतामसारतां बुद्ध्वा कथञ्चिद्धैर्य्यमाललम्बे।

( क्रमशः )

## एभिः पादाकुलकम् ॥ ४७ ॥

एषां पञ्चानां मध्ये यैः कैश्चिदपि चतुर्भिः पादैः पादाकुलकं नाम। मात्रासमकविश्लोकवानवासिकोपचित्राणां पादैः उदाहरणम्—

ल० गु०
१ २ ३ । ४ ५।६ ७ ८ ९ १० ११ १२ १३।१४ १५।१६
अ लि वा चा लि त वि क सि त चू ते

ल० ल० गु०
१।२ ३।४ ५ ६ ७ ८ ९ ।१० ११ १२ १३।१४ १५।१६
का ले म द न स मा ग म दू ते

ल० ल० गु०
१।२ ३।४ ५।६ ७।८ ९ १० ११ १२ १३।१४ १५।१६
स्मृ त्वा का न्तां प रि हृ त सा र्थः

गु०
१।२ ३।४ ५ ६ ७।८ ९।१० ११ १२ १३।१४ १५।१६
पा दा कु ल कं धा व ति पा न्थः॥

तथा विश्लोकोपचित्रामात्रासमकोपचित्राणां पादैः पादाकुलकम्॥ तत्रोदाहरणम्—

ल० ल० गु०
१।२ ३।४ ५ ६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
पुं स्को कि ल कृ त शो भ न गी ते

गु०
१।२ ३ ४ ५ ६ ७।८ ९।१० ११ १२ १३।१४ १५।१६
द क्षि ण प व न प्रे रि त शी ते।

४१। দর্শিত পাঁচ প্রকারের যে কোন চারিপাদে নিবদ্ধ ছন্দকে "পাদাকুলক" বলে।

गु०

१ २ ३ ४ ५।६ ७।८ ९ १० ११।१२ १३।१४ १५।१६

म धु स म ये भ्रिन् क्त त वि श्लो कः

गु०

१।२ ३।४ ५ ६ ७।८ ९।१० ११ १२ १३।१४ १५।१६

पा दा कु ल कं नृ त्य ति लो कः॥

मात्रासमकस्य एकेन पादेन, द्वाभ्यामुपचित्रायाः, विश्लोकस्य एकेन पादाकुलकम्॥ तत्रोदाहरणम्—

ल० गु०

१।२ ३।४ ५।६ ७।८ ९ १० ११।१२ १३।१४ १५।१६

चि त्तं भ्रा म्य त्य न व स्था नं

गु०

१।२ ३।४ ५ ६ ७।८ ९।१० ११ १२ १३।१४ १५।१६

पा दा कु ल क श्लो क स मा नम्।

गु०

१।२ ३।४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६

का यः का य ति या य ति य श्चि-

ल० ल० गु०

१ २ ३ ४ ५ ६ ७ ८ ९।१० ११।१२ १३।१४ १५।१६

त्त द पि न म म प र लो के भ क्तिः॥

यथा पादाकुलकनाम्नः श्लोकस्य पादेषु अस्थिरता तथेत्यर्थः॥

उपचित्रापादेनैकेन, वानवासिकापादेन, पुनः उपचित्रापादाभ्यां पादाकुलकम्॥ तत्रोदाहरणम्—

गु०

१ २ ३ ४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६

प रि हृ त स र्व प रि ग्र ह लो कः

লং লং গুং

১ ২ ৩ ৪ ৫।৬ ৭ ৮ ৯ ১০ ১১ ১২ ১৩।১৪ ১৫।১৬
প্র তি দি ন ব র্দ্ধি ত গু রু ত র শো কঃ।

গুং

১।২ ৩ ৪ ৫।৬ ৭ ৮ ৯।১০ ১১ ১২ ১৩।১৪ ১৫।১৬
দুঃ খ বি ব র্দ্ধি ত লো চ ন বা রিঃ

গুং

১।২ ৩।৪ ৫ ৬ ৭।৮ ৯।১০ ১১ ১২ ১৩।১৪ ১৫।১৬
পা দা কু ল কং যা তি ত বা রিঃ ॥ ৪৭ ॥

ইতি মাত্রাসমকাধিকারঃ।

## গীত্যার্য্যা লঃ ॥ ৪৮ ॥

যত্র পাদে দ্বিবর্দ্ধ্বঃ, ষোড়শলকারা ভবন্তি, সা গীত্যার্য্যা নাম জাতিঃ। লঃ ইত্যনুবর্ত্তমানে পুনর্লগ্রহণং দ্বিমাত্রিক-নিবৃত্ত্যর্থম্॥ তত্রোদাহরণম্—

১ ২ ৩ ৪ ৫ ৬ ৭ ৮ ৯ ১০ ১১ ১২ ১৩ ১৪ ১৫ ১৬
ম দ ক ল খ গ কু ল ক ল র ব মু খ রি ণি

১ ২ ৩ ৪ ৫ ৬ ৭ ৮ ৯ ১০ ১১ ১২ ১৩ ১৪ ১৫ ১৬
বি ক সি ত স র সি জ প রি ম ল সু র ভি ণি।

১ ২ ৩ ৪ ৫ ৬ ৭ ৮ ৯ ১০ ১১ ১২ ১৩ ১৪ ১৫ ১৬
গি রি ব র প রি স র স র সি ম হ তি খ লু

---

৪৮। যাহার প্রত্যেক পাদে কেবল ষোলটি লঘুবর্ণ থাকিবে, তাহাকে "গীত্যার্য্যা" নামক জাতি বলে। ল অধিকার সত্ত্বেও এস্থানে পুনরায় ল গ্রহণ দিয়া জানাইতেছেন যে, পূর্ব্বে যেমন একটি গুরুবর্ণ দ্বারা দুইটি লকার বিকল্প হইয়াছে, এস্থানে সেরূপ হইবে না।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
र ति र ति श य य मि ह म म ह दि वि ल स ति ॥

सर्वलघुच्छन्दसि गीत्यार्य्याशब्दस्य प्रवेशयितुमशक्यत्वात्तन्नाम नोक्तम् ॥ ४८ ॥

## शिखा विपर्य्यस्तार्द्धा ॥ ४९ ॥

स एव गीत्यार्य्या विपर्य्यस्तार्द्धा यदा भवति तदा शिखाख्यां लभते । अयमर्थः—यत्रार्द्धं सर्वलघु भवति, अर्द्धञ्च सर्वगुरु इति । एवं तस्या एव विन्यासभेदेन सञ्ज्ञाद्वयमाह ॥ ४९ ॥

## लः पूर्वश्चेज्ज्योतिः ॥ ५० ॥

पूर्वश्चेदर्द्धभागः, सर्वलघुः द्वात्रिंशत् लकारो भवति, उत्तरश्च सर्वगुरुः, षोड़शगकारः, तदा ज्योतिर्नाम शिखा भवति ॥ तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
य दि सु ख म नु प म म प र म भि ल ष सि
१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२
प रि ह र यु व ति षु र ति म ति श य मि ह ।

१ २ ३ ४ ५ ६ ७ ८
आ त्म ज्यो ति र्यो गा भ्या सात्
९ १० ११ १२ १३ १४ १५ १६
ह त्वा दुः ख च्छे दं कु र्य्याः ॥ ५० ॥

---

४९। সেই গীত্যার্য্যা যদি বিপর্য্যস্তার্দ্ধ হয়, অর্থাৎ এক অর্দ্ধ ভাগ বত্রিশটি লঘুবর্ণ দ্বারা নিবদ্ধ হইয়া, এক অর্দ্ধ ভাগ ষোলটি গুরুবর্ণ দ্বারা নিবদ্ধ হয়, তবে তাহাকে "শিখা" বলে।

৫০। শিখার মধ্যে আবার বিশেষ এই যে, যাহার পূর্ব্ব ভাগ বত্রিশটি লঘুবর্ণ দ্বারা নিবদ্ধ হইয়া শেষ ভাগ ষোলটি গুরুবর্ণ দ্বারা নিবদ্ধ হয়, তাহাকে "জ্যোতি" নামক শিখা বলে।

## गश्चेत् सौम्या ॥ ५१ ॥

तस्या एव शिखायाः पूर्वार्द्धभागः सर्वगुरुः षोडशगकारश्चेद्-भवति, उत्तरश्च द्वात्रिंशत् लकारः एव, तदा सौम्या नाम शिखा भवति ॥ तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८
सौ म्यां दृ ष्टिं दे हि स्ने हाद्-
९ १० ११ १२ १३ १४ १५ १६
दे हि स्मा कं मा नं मु ञ्चा।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
श श ध र मु खि मु ख मु प न य म म ह दि
१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१
म न सि ज रु ज म प ह र ल घु त र मि ह ॥५१॥

## चूलिकैकोनत्रिंशदेकत्रिंशदन्ते ग् ॥ ५२ ॥

अर्द्धग्रहणमनुवर्त्तते। यत्र प्रथमे अर्द्धे एकोनत्रिंशत् लकारा भवन्ति, द्वितीये च अर्द्धे एकत्रिंशत्, तयोश्च अन्ते, द्वौ लकारौ उन्मूल्य प्रत्येकमेको गुरुः क्रियते, तत् चूलिका नाम छन्दः। अन्ते गिति विशेषोपादानसामर्थ्यात् अन्येषां लघुत्वमुक्तं भवति। तेनाद्ये सप्तविंशतिर्लघवः, अन्ते गुरुरेको भवति। द्वितीयेऽपि एकोनत्रिंशत् लघवः, अन्ते गुरुश्च एको ॥ तत्रोदाहरणम्—

---

(১)। যাহার পূর্ব্বার্দ্ধ ষোলটি গুরুবর্ণ দ্বারা নিবদ্ধ হইয়া শেষার্দ্ধ বত্রিশটি লঘুবর্ণ দ্বারা নিবদ্ধ হয়, তাহাকে "সৌম্যা" নামক শিখা বলে।

(২)। যাহার প্রথমার্দ্ধে সাতাইশটি লঘুবর্ণ ও অন্তে একটি গুরুবর্ণ এই সমুদয়ে উনত্রিশ লকার, এবং শেষার্দ্ধে উনত্রিশটি লঘুবর্ণ ও অন্তে একটি গুরুবর্ণ এই সমুদয়ে একত্রিশ লকার, তাহাকে "চূলিকা" নামক ছন্দ বলে।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४
र ति क र म ल य म क ति शु भ श श-
गु०१
१५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८।२९
म भि ह त हि म म ह सि म धु स म ये।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
प्र व स सि प थि क वि र हि त क थ मि ह तु
गु०१
१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३०।३१
प रि ह्र त यु व ति र ति च प ल त या॥

अन्यैः पुनः अन्यथैवेदं सूत्रमधीयते, चूलिकार्द्धमेकोनत्रिंशत् अन्ते गिति। तेषाम् उभयोश्चाप्यर्द्धयोरेकोनत्रिंशन्मात्राः गुर्वन्ताः भवन्ति॥ तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४
घ न प रि म ल मि ल द लि कु ल मु ख
गु०१
१५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८।२९
रि त नि खि ल क म ल म ल य प व ने।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४
ज न य ति म न सि श शि सु खि मु द म-
गु०१
१५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८।२९
ति श य मि ह म म म धु र य म धु ना॥

---

কেহ এই সূত্রটিকে "চূলিকার্দ্ধ মেকোনত্রিংশদন্তেগ্" এইরূপ পাঠ করে। তাহার মতে চূলিকার প্রত্যেক অর্দ্ধেই ঊনত্রিশটি লঘুবর্ণ ও অন্তে একটি গুরুবর্ণ এই সমষ্টিতে ত্রিশ লকার।

अर्द्धग्रहणादत्र पादव्यवस्था नास्ति ॥ ५२ ॥

इदानीं गणमात्राच्छन्दसां गुरुलघुसङ्ख्यापरिज्ञापनार्थ-मिदमाह—

## सा ग्येन न समा लां ग्ल इति ॥ ५३ ॥

सा गुरुसङ्ख्या वेदितव्या, येन यावद्भिरक्षरैः लां लघूनां मात्राणां, समाः समसङ्ख्याः ग्लः न स्युः, अपितु न्यूनसङ्ख्या एव । ग्लः इति अक्षराणि अभिधीयन्ते, तेषां गुरुलघुरूपत्वात् । अयमभिप्रायः, आर्य्यादिषु शास्त्रे यावन्त्यः मात्रा उपदिष्टाः तावन्त्यक्षराणि यथासङ्ख्यं न पूर्य्यन्ते, सा तत्र गुरुसङ्ख्या वेदितव्या, अवशिष्टा लघुसङ्ख्या । तत्रायमुपयोगः,—कदाचित् पृच्छति, चत्वारिंशदक्षरायामार्य्यायां कति गुरवः सम्भवन्ते, कति वा लघवः इति । तदा सप्तपञ्चाशन्मात्रोपदिष्टायामार्य्यायां मात्रासङ्ख्यायां चत्वारिंशदक्षरसङ्ख्यामपनीय तत्र ये अव शिष्यन्ते, तान् गुरून् उपदिशेत् । ते च सप्तदश एव । शेषान् तु त्रयोविंशतिलघून् उपदिशेत् ॥ तत् यथा—

१ २ ३ ४ ५।६ ७।८ ९।१० ११ १२ १३ १४ १५ १६ १७ १८

। । । । ऽ ऽ ऽ ऽ । ऽ । । ।

स्त न यु ग म स्यु न्ना तं, स मो प त र-

१९।२० २१ २२ २३ २४ २५।२६ २७।२८ २९।३०

ऽ । । । । ऽ ऽ ऽ

व र्त्ति ह्य द य शो का र्त्तः ।

३१ ३२ ३३ ३४ ३५।३६ ३७।३८ ३९।४० ४१।४२ ४३ ४४ ४५

---

५३। সম্প্রতি গণমাত্রা দ্বারা নিবদ্ধ ছন্দের গুরু লঘু সংখ্যাপরিজ্ঞাপনের জন্য এই সূত্রের অবতারণা।

। । । । ऽ ऽ ऽ ऽ । । ।

च र ति वि मु क्ता हा रं, व्र त मि-

४६ ४७ ४८ ४९।५० ५१ ५२।५३ ५४।५५ ५६।५७

। । । ऽ । ऽ ऽ ऽ

व भ व तो रि पु स्त्री णाम् ॥ ५३ ॥

कादम्बरी ।

इति भट्टहलायुधकृतायां पिङ्गलच्छन्दोवृत्तौ
चतुर्थोऽध्यायः ॥ ४ ॥

---

## अथ पञ्चमोऽध्यायः ।

### वृत्तम् ॥ १ ॥

अधिकारोऽयमाशास्त्रपरिसमाप्तेः। यदित ऊर्द्ध्वमनुक्रमिष्यामः तत् वृत्तं वेदितव्यम्। तेन प्राक्तनं लौकिकं छन्दोजातं जातिरित्युच्यते। इतः उत्तरं च वृत्तम्। तथाचोक्तम्—"पद्यं चतुष्पदं तच्च वृत्तं जातिरिति द्विधा।" गायत्र्यादौ छन्दसि वर्त्तते

---

আর্য্যাদি ছন্দের মধ্যে যাহাতে নির্দ্দিষ্ট মাত্রায় সংখ্যা হইতে অক্ষরসংখ্যা কম হইবে, সে গুরু সংখ্যা ও তদ্ভিন্ন লঘু সংখ্যা বলিয়া জ্ঞাতব্য। একটি গুরুবর্ণের দ্বিমাত্রকত্বনিবন্ধন গুরুবর্ণের সন্নিবেশ থাকিলেই মাত্রার সংখ্যা হইতে অক্ষর-সংখ্যা কম হয়, সুতরাং কেবল লঘুবর্ণের সন্নিবেশ থাকিলেই লঘু সংখ্যা হইবে।

পঞ্চম অধ্যায়।

১। শাস্ত্রপরিসমাপ্তি পর্য্যন্ত "বৃত্তং" এইটি অধিকারসূত্র। অর্থাৎ অতঃপর শাস্ত্রপরিসমাপ্তি পর্য্যন্ত যে সমস্ত ছন্দ বলা হইবে, সেই সমস্তই বৃত্তচ্ছন্দ। ছন্দ জাতি এবং বৃত্তভেদে দুই প্রকার। এই অধিকার সূত্রদ্বারা ইহার পরবর্ত্তী ছন্দঃসমূহেরই বৃত্তরূপে নির্দ্দেশনিবন্ধন পূর্ব্বোক্ত লৌকিকছন্দসমূহকেই জাতি বলিয়া বুঝিতে হইবে।

इति वृत्तम् । तत्र स्थिरगुरुलघुक्षरविन्यासमिष्यते । पादेन संयोगात् पद्यम् । यथा आर्य्यादिच्छन्दःसु अपि पादव्यवस्था नास्ति इति पादौ संयुक्ता, वृत्ते पुनः पृथक् भवत इत्यर्थः । संयोगाभावात् तथा चोक्तम्—"एकदेशस्थिता जातिर्वृत्तं गुरुलघुस्थितम्" इति ॥ १ ॥

## सममर्द्धसमं विषमञ्च ॥ २ ॥

समसर्वावयवत्वात् समम् । यस्य चत्वारः पादा एकलक्षणयुक्ताः तत् समं वृत्तम् । शेषं च सञ्ज्ञानुरूपमेव । तत्रार्द्धे समे यस्य तदर्द्धसमम् । सर्वावयवेभ्यः अर्द्धाभ्यां च विगतं समं यस्य तत् विषमम् । एवं त्रिप्रकारमपि वृत्तजातमुक्तम् ॥ २ ॥

## समं तावत्कृत्वःकृतमर्द्धसमम् ॥ ३ ॥

सममिति समवृत्तसङ्ख्या उच्यते । तया एव गुणितं तावत्कृत्वःकृतमुच्यते । एतदुक्तं भवति, समवृत्तसङ्ख्यागुणिते समवृत्तसङ्ख्यायाः पिण्डे या सङ्ख्या निष्पद्यते, तावत्सङ्ख्यमर्द्धसमं वेदितव्यम् । तत्र गायत्रे छन्दसि समवृत्तसङ्ख्या चतुःषष्टिः अष्टमाध्यायसिद्धा । तस्यां चतुःषष्टिसङ्ख्यागुणितायामर्द्धसमवृत्तसङ्ख्या सम्पद्यते । चत्वारि सहस्राणि, षण्णवतिश्च वृत्तानि । अङ्कतोऽपि ৪,০৯৬ ॥ ३ ॥

---

২। এই বৃত্তচ্ছন্দ সম অর্দ্ধসম ও বিষমভেদে তিনপ্রকার। যাহার সমস্ত পাদ সমান অর্থাৎ এক লক্ষণাক্রান্ত তাহার নাম সম, যাহার অর্দ্ধাংশ সমান অর্থাৎ এক লক্ষণাক্রান্ত তাহার নাম অর্দ্ধসম এবং যাহার সমস্ত পাদ বিষম অর্থাৎ বিভিন্ন লক্ষণাক্রান্ত, তাহার নাম বিষম। অন্বর্থযুক্ত নাম দ্বারাই এইরূপ অর্থ কল্পনীয়।

৩। এই সূত্রে "সম" শব্দের অর্থ লক্ষণাদ্বারা সমবৃত্তের সংখ্যা। "তাবৎকৃত্বঃকৃতং" শব্দের অর্থ তাহা দ্বারা গুণিত, সুতরাং সূত্রার্থ হইল, এই যে,

## বিষমস্থ ॥ ৪ ॥

অর্দ্ধসমং তাবত্‌গুণিতং বিষমং ভবতি। এতদুক্তং ভবতি, অর্দ্ধসমবৃত্তসঙ্খ্যা অর্দ্ধসমবৃত্তসঙ্খ্যয়ৈব গুণিতা বিষমবৃত্ত-সঙ্খ্যা সম্পদ্যতে। একা কোটিঃ, সপ্তষষ্টিঃ লক্ষাণি, সপ্তসপ্ততি-সহস্রাণি, দ্বে শতে ষোড়শোত্তরে। অঙ্কতোঽপি ১,৬৭৭৭,২১৬। সমসমার্দ্ধসমোপচিতং, অর্দ্ধসমং বিষমং চ যথাক্রমং সমোপচিতং সমার্দ্ধসমাভ্যাং চ উপচিতং বেদিতব্যম্ ॥ ৪ ॥

## রাশ্যূনম্ ॥ ৫ ॥

তত্ বিষমং বৃত্তমর্দ্ধসমং বা রাশ্যূনং কর্ত্তব্যম্। মূলরাশিঃ সমুদায়াদপনেতব্য ইতি। কোটিঃ একা, সপ্তষষ্টিঃ লক্ষাণি, ত্রিসপ্ততিসহস্রাণি, বিংশত্যুত্তরং শতং, শুদ্ধবিষমবৃত্তস্য সঙ্খ্যা। অঙ্কতঃ ১,৬৭,৭৩,১২০। চত্বারি সহস্রাণি, দ্বাত্রিংশচ্চেতি শুদ্ধার্দ্ধসমসঙ্খ্যা ৪০৩২। উভয়ত্রৈষোঽয়ং রাশ্যূনমিতি ॥ ৫ ॥

---

সমবৃত্তের সংখ্যা দ্বারা সমবৃত্তের সংখ্যাকে গুণ করিলে যে সংখ্যা গুণফল হইবে, তাহাদ্বারা অর্দ্ধসমবৃত্তের সংখ্যা বুঝিতে হইবে। যেমন অষ্টমাধ্যায়ে গায়ত্রী সমবৃত্তের সংখ্যা নির্দ্ধারিত হইবে চৌষট্টি, এই ৬৪ কে ৬৪ দ্বারা গুণ করিলে গুণফল হইবে ৪০৯৬, সুতরাং গায়ত্রী অর্দ্ধসমবৃত্তের সংখ্যা পাওয়া গেল চারি হাজার ছিয়ানব্বই।

৪। অর্দ্ধসমবৃত্ত সংখ্যা দ্বারা অর্দ্ধসমবৃত্ত সংখ্যাকে গুণ করিলে যে সংখ্যা গুণফল হইবে, তাহা দ্বারা বিষমবৃত্তের সংখ্যা নির্দ্ধারিত হইবে। যেমন পূর্ব্বোক্ত ৪০৯৬ অর্দ্ধসমবৃত্ত সংখ্যাকে ৪০৯৬ দ্বারা গুণ করিলে গুণফল সংখ্যা হইবে ১,৬৭,৭৭, ২১৬, সুতরাং বিষম বৃত্তের সংখ্যা পাওয়া গেল এক কোটি, সাতষট্টি লক্ষ, সাতসত্তর হাজার, দুইশত ষোল।

৫। সেই বিষম ও অর্দ্ধসমবৃত্তের সংখ্যা হইতে স্বস্ব মূলরাশি সংখ্যা বাদ দিতে হইবে। অর্থাৎ উক্ত বিষমবৃত্তের সংখ্যা হইতে তাহার মূলরাশি অর্দ্ধ-সমবৃত্তের সংখ্যা ৪০৯৬ বাদ দিলে শুদ্ধ বিষমবৃত্তের সংখ্যা হইবে ১,৬৭৭৩১২০, এক কোটি, সাতষট্টি লক্ষ, তিয়াত্তর হাজার, একশত বিশ। এবং দর্শিত অর্দ্ধ

## ग्लिति समानी ॥ ६ ॥

गकारलकाराभ्यां यत् वृत्तं समाप्येत तत् समानी नाम। पादस्य अनुष्टुब्वक्त्रमित्यतः (५।८) सूत्रात् सिंहावलोकितन्यायेन अनुष्टुब्ग्रहणमनुवर्त्तते। तेनाष्टाक्षरः पादः यावद्भिः गकारलकारैः पूर्य्यते, तावतामेव ग्रहणम्। तत्रोदाहरणम्—

S I S I S I S I S I S I S I S I
वासवोऽपि विक्रमेण यत्समानतां न याति।
S I S I S I S I S I S I S I S I
तस्य वल्लभेश्वरस्य केन तुल्यता क्रियेत ॥

अपिच—

ॐ नमो जनार्दनाय पापसङ्घमोचनाय।
दुष्टदैत्यमर्दनाय पुण्डरीकलोचनाय ॥ ६ ॥

## ल्गिति प्रमाणी ॥ ७ ॥

लकारगकाराभ्यां यत् वृत्तं समाप्येत तत् प्रमाणी नाम। नाराचमित्यपरे ॥ तत्रोदाहरणम्—

I S I S I S I S I S I S I S I S
सरोजयोनिरम्बरे रसातले तथाच्युतः।
I S I S I S I S I S I S I S I S
तव प्रमाणमीक्षितुं क्षमौ न तौ बभूवतुः ॥ ७ ॥

---

সমবৃত্তের সংখ্যা হইতে তাহার মূলরাশি সমবৃত্তের সংখ্যা ৬৪ বাদ দিলে শুদ্ধ সমবৃত্তের সংখ্যা হইবে ৪০৩২ চারি হাজার বত্রিশ।

৬। যেই অষ্টাক্ষরপাদ ছন্দের পূর্ব্ব পূর্ব্ব অক্ষর অর্থাৎ প্রথম, তৃতীয়, পঞ্চম ও সপ্তম অক্ষর গুরু এবং পর পর অক্ষর অর্থাৎ দ্বিতীয়, চতুর্থ, ষষ্ঠ ও অষ্টম অক্ষর লঘু তাহাকে "সমানী" বলে। সিংহাবলোকিত ন্যায়ক্রমে নবম সূত্র হইতে অনুষ্টুভ্ অধিকার করিয়া কেবল অষ্টাক্ষর পাদ ধরা হইল।

৭। যেই অষ্টাক্ষর পাদচ্ছন্দের পূর্ব্ব পূর্ব্ব অক্ষর অর্থাৎ প্রথম, তৃতীয়, পঞ্চম

## वितानमन्यत् ॥ ८ ॥

आभ्यां समानीप्रमाणीभ्यां अन्यदष्टाक्षरपादं छन्दो वितानं नाम ॥

अत्रोदाहरणम्—

S S I I S S I I S S I I S S I I

तृष्णां त्यज धर्मं भज पापे हृदयं मा कुरु ।

S S I I S S I I S S I I S S I I

इष्टा यदि लक्ष्मीस्तव शिष्टानिशं संश्रय ॥

द्वितीयं च—

I I S S I I S S I I S S I I S S

हृदयं यस्य विशालं गगनाभोगसमानम् ।

I I S S I I S S I I S S I I S S

लभतेऽसौ मणिचित्रं नृपतिर्मूर्ध्नि वितानम् ॥

अन्यत् च—

S S I S I S I S S S I S I S I S

कङ्कालमालभारिणं कन्दर्पदर्पहारिणम् ।

S S I S I S I S S S I S I S I S

संसारबन्धमोचनं वन्दामहे त्रिलोचनम् ॥

अपिच—

तस्याः स्मरामि सुन्दरं चन्द्रोपमानमाननम् ।

कन्दर्पचापभङ्गुरभ्रूविभ्रमोपशोभितम् ॥

S I I S I I S S S I I S I I S S

अन्यदतो हि वितानं श्वेतपटेन यदुक्तम् ।

S I I S I I S S S I I S I I S S

छिन्नपदापि च भोगी तेन गतार्थमिवैतत् ॥

---

ও সপ্তম অক্ষর লঘু, এবং পর পর অক্ষর অর্থাৎ দ্বিতীয়, চতুর্থ, ষষ্ঠ ও অষ্টম অক্ষর গুরু, তাহাকে "প্রমাণী" বলে। কেহ ইহার নাম "নারাচ"ও বলিয়া থাকে।

किन्तु—वितानमन्यदिति ब्रुवन् सूत्रकारः वितानस्यानेक-प्रकारतां दर्शयति । अन्यथा वितानं भौगौ इत्येव विदध्यात् ॥ ८ ॥

## पादस्यानुष्टुब्वक्त्रम् ॥ ९ ॥

पादस्येत्ययमधिकारः आसप्तमाध्यायसमाप्तेः । अनुष्टुब्वक्त्र मिति च प्राक् पदचतुरूर्द्ध्वादधिकृतं वेदितव्यम् ॥ ९ ॥

## न प्रथमात् स्नौ ॥ १० ॥

प्रतिषेधार्थसूत्रमिदम् । अत्र वक्त्रजातौ पादस्य प्रथमात् वर्णादूर्द्ध्वं सगणनगणौ न कार्य्यौ ॥ १० ॥

## द्वितीयचतुर्थयो रश्च ॥ ११ ॥

द्वितीयचतुर्थयोश्च पादयोः प्रथमादूर्द्ध्वं रेफोऽपि न कर्त्तव्य इत्युपदेशः ॥ ११ ॥

## वान्यत् ॥ १२ ॥

सगणनगणाभ्यामन्यत् मगणादित्रिकषट्कमध्ये यत् किञ्चित् त्रिकान्तरं वा कर्त्तव्यम् ॥ १२ ॥

---

৮। সমানী ও প্রমাণী ভিন্ন অষ্টাক্ষরপাদ ছন্দকে "বিতান" বলে।

৯। এইটি অধিকারসূত্র সপ্তম অধ্যায় সমাপ্তি পর্য্যন্ত "পাদস্য" এবং এই অধ্যায়ের বিশ সূত্রের পূর্ব্ব পর্য্যন্ত "অনুষ্টুভ বক্ত্র" অধিকৃত হইবে।

১০। এইটি নিষেধসূত্র। এই বক্ত্রজাতিতে পাদের প্রথম বর্ণের উর্দ্ধে সগণ ( ।।ऽ ) ও নগণ ( ।।। ) বিন্যস্ত হইবে না।

১১। দ্বিতীয় এবং চতুর্থ পাদে প্রথম বর্ণের উর্দ্ধে রগণ ( ऽ।ऽ ) বিন্যস্ত হইবে না।

১২। সগণ ও নগণ ভিন্ন মকারাদি ছয়টি ত্রিকগণের মধ্যে যে কোন একটি ত্রিকগণ বিন্যস্ত থাকা আবশ্যক।

## य चतुर्थात् ॥ १३ ॥

य इति लुप्तविभक्तिको निर्देशः। पादस्य चतुर्थादक्षरादूर्द्धं यकारः प्रयोक्तव्यः ॥ सर्वेषामुदाहरणम्—

ल० १ यगणः यगणः ल० ल० १ यगणः यगणः गु०
। । ऽ ऽ । ऽ ऽ । । । ऽ ऽ । ऽ ऽ ऽ
नवधाराम्बुसंसिक्तवसुधामन्धिनिःश्वासम् ।
गु० १ जगणः यगणः गु० ल ० १ नगणः यगणः गु०
ऽ । ऽ । ऽ ऽ ऽ । ऽ ऽ । । ऽ ऽ ऽ
किञ्चिदुन्नतघोणाग्रं मही कामयते वक्त्रम् ॥

अन्यैरप्युक्तम्—

गु० १ भगणः यगणः ल० ल० १ मगणः यगणः गु०
ऽ ऽ । । । ऽ ऽ । । ऽ ऽ ऽ । ऽ ऽ ऽ
नीलोत्पलवनेष्वद्य चरन्त्यस्थाक्तसंरावाः ।
गु० १ मगणः यगणः गु० ल० १ मगणः यगणः गु०
ऽ ऽ ऽ ऽ । ऽ ऽ ऽ । ऽ ऽ ऽ । ऽ ऽ ऽ
रामाः कौशेयसंवीताः प्रनृत्यन्त्यत्र कादम्बाः

तथा—

गु० १ रगणः यगणः गु० गु० १ भगणः यगणः गु०
ऽ ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ । । । ऽ ऽ ऽ
दुर्भाषितेऽपि सौभाग्यं प्रायः प्रकुरुते प्रीतिः ।
गु० १ रगणः यगणः ल० गु० १ मगणः यगणः गु०
ऽ ऽ । ऽ । ऽ ऽ । ऽ ऽ ऽ ऽ । ऽ ऽ ऽ
मातुर्मनो हरत्येव दौर्ललित्योक्तिभिर्बालाः ॥
इत्यादि ॥ १३ ॥

---

১৩। পাদের চতুর্থ অক্ষরের ঊর্দ্ধে যগণ ( । ऽ ऽ ) থাকা আবশ্যক।

## पथ्या युजो ज् ॥ १४ ॥

चतुर्थादिति वर्त्तते। यत्र वक्त्रे युजः पादस्य चतुर्थादक्षरात् ऊर्द्ध्वं जकारः प्रयुज्यते, तत् वक्त्रं पथ्या नाम। यस्यापवादः॥ अत्रोदाहरणम्—

गु०१ तगणः यगणः ल० गु०१ मगणः जगणः ल०

S S S I I S S I S S S S I S I I

नित्यं नीतिनिषण्णस्य राज्ञो राष्ट्रं न सीदति।

ल०१ यगणः यगणः गु० गु०१ मगणः जगणः गु०

I I S S I S S S S S S S I S I S

न हि पथ्याशिनः काये जायन्ते व्याधिवेदनाः ॥ १४ ॥

## विपरीतैकीयम् ॥ १५ ॥

उक्तलक्षणात् विपरीतलक्षणा एकीयमते पथ्या भवति ॥ यथा—

गु०१ यगणः जगणः गु० गु०१ मगणः यगणः गु०

S I S S I S I S S S S S I S S S

भर्त्तुराज्ञानुवर्त्तिनी या स्त्री स्यात् सा स्थिरा लक्ष्मीः।

गु०१ यगणः जगणः गु० ल०१ यगणः यगणः गु०

S I S S I S I S I I S S I S S S

स्वप्रभुत्वाभिमानिनी विपरीता परित्याज्या ॥ १५ ॥

## चपलाऽयुजो न् ॥ १६ ॥

अयुक्पादस्य यदा चतुर्थादूर्द्ध्वं नकारो भवति, युक्पादे यः एवावतिष्ठते, तदा चपला नाम सा अनुष्टुब्वक्त्रम् ॥ अत्रोदाहरणम्—

---

১৪। যেই বক্ত্রের যুক্‌পাদে অর্থাৎ দ্বিতীয় ও চতুর্থপাদে চতুর্থ বর্ণের উর্দ্ধে জগণ ( । ऽ । ) থাকিবে, তাহাকে পথ্যা বলে। এইটি ১৩ সূত্রের অপবাদ।

১৫। উক্ত লক্ষণের বিপরীত ( অর্থাৎ যাহার প্রথম ও তৃতীয় পাদে চতুর্থ বর্ণের উর্দ্ধে জগণ ( । ऽ । ) বিন্যস্ত থাকে ) বক্ত্রকেও কোন মতে পথ্যা বলে।

गु०१ यगण: नगण: गु०गु०१ यगण: यगण: गु०

S । S S । । । S S । S S । S S S

क्षीयमाणाग्रदशना वक्त्रनिर्मांसनासाग्रा ।

गु०१ यगण: नगण: गु० ल०१ यगण: यगण: गु०

S । S S । । । S । । S S । S S S

कन्यका वाक्यचपला भवति धूर्त्तसौभाग्यम् ॥ १६ ॥

## विपुला युग्लः सप्तमः ॥ १७ ॥

अधिकारोऽयम्। यः चतुर्थादित्यमेन सर्वत्र यकारे प्राप्ते यदा युक्पादे सप्तमो वर्णो लघुर्भवति, तदा विपुला नाम:। ननु पथ्यालक्षणान्तर्भूतत्वात् पुनरुक्तमेतत्। न एवम्। विपुलावर्गस्येदानीमारभ्यमाणत्वात् तद्विनानुपपत्तेः। युक्पादे सप्तमेन लघुनावश्यमेव भवितव्यम्। प्रथमतृतीययोश्च एतावता यकारस्यापवादः। तथा च वक्ष्यति, सर्वतः सैतवस्येत्यादिना। पथ्यायां तु यकारः एवावतिष्ठते ॥ १७ ॥

## सर्वतः सैतवस्य ॥ १८ ॥

सैतवस्याचार्य्यस्य मतेन युक्पादे अयुक्पादे च सप्तमो लकारः एव कर्त्तव्यः ॥ अत्रोदाहरणम्—

---

১৬। যাহার অযুক্পাদে (প্রথমও তৃতীয় পাদে) চতুর্থ বর্ণের উর্দ্ধে নগণ (।।।) থাকিবে এবং যুক্পাদে (দ্বিতীয় ও চতুর্থপাদে) চতুর্থ বর্ণের উর্দ্ধে যগণই থাকিবে, সেই অনুষ্টুভ্ বক্ত্রকে "চপলা" বলে।

১৭। এইটিও অধিকারসূত্র। যাহার দ্বিতীয় ও চতুর্থপাদে সপ্তম অক্ষর লঘু হইবে, তাহার নাম বিপুলা। ১৯ সূত্রের সহিত একযোগে বিপুলার লক্ষণ নিষ্পন্ন হইবে। পথ্যাতে প্রথম ও তৃতীয়পাদে চতুর্থ বর্ণের উর্দ্ধে যগণের আবশ্যকতা, বিপুলাতে যগণের পরিবর্ত্তে ভগণ রগণ বা নগণের আবশ্যকতা, ইহাই পথ্যা ও বিপুলার প্রভেদ।

गु०१ जगणः ज० (ल०७) गु० गु०१ भगणः ज० (ल०७) गु०

S I S I I S I S  S S  I I I S I S

सैतवेन पयार्णवं तीर्णो दशरथात्मजः।

गु०१ भगणः ज० (ल०७) गु०ल०१ मगणः ज० (ल०७) गु०

S S I I I S I S I S S S I S I S

रक्षःक्षयकरीं पुनः प्रतिज्ञां स्वेन बाहुना॥ १८॥

## भ्रौ न्तौ च॥ १९॥

सर्वतः सैवतस्येति निवृत्तम्। चपला अयुजः नित्यस्मादयुग्-ग्रहणमनुवर्त्तते। विपुला युग्लः सप्तमः इति सर्वमनुवर्त्तनीयम्। अयुक्पादे यदा चतुर्थादक्षरात् परतः यकारं बाधित्वा भकार-रेफनकारतकारा विकल्पेन भवन्ति, तदासौ विपुला नाम॥ तत्र भकारेण विपुलोदाहरणम्—

ल० १ रगणःभ० (ल०७) गु० ल०१ मगणः ज० (ल०७) गु०

I S I S S I I S  I S S S  I S I S

इयं सखे चन्द्रमुखी स्मितज्योत्स्ना च मानिनी।

गु०१ रगणः भ०(ल०७)गु०गु०१ जगणः ज० (ल०७) गु०

S S I S S I I S S I S I I S I S

इन्दीवराक्षी हृदयं दन्दहीति तथापि मे॥

अयुज इति जातिपक्षे द्वयोरपि पादयोर्ग्रहणम्। व्यक्तिपक्षे पुनरेकस्य। एकपक्षे पुनः प्रथमस्य तृतीयस्य वा। तथाच महा-कवीनां प्रयोगाः—

ल०१ रगणः भगणः गु०गु०१ यगणः ज० (ल०७) गु०

I S I S S I I S S I S S I S I S

वटे वटे वैश्रवणश्चत्वरे चत्वरे शिवः।

---

১৮। সৈবত আচার্য্যের মতে যুক্পাদে ও অযুক্পাদে সর্ব্বত্রই সপ্তম বর্ণ লঘু হইবে।

गु० १ यगणः यगणः गु० गु०१ भगणः ज० (ल०७) गु०

S I S S I S S S S S I I I S I S

पर्वते पर्वते रामः सर्वत्र मधुसूदनः ॥

गु०१ भगणः यगणः गु० गु० १ यगणः ज० (ल०७) गु०

S S I I I S S S S I S S I S I S

देवः स जयति श्रीमान् दण्डधारी महीपतिः ।

गु०१ रगणः भ० (ल०७) गु० गु०१ जगणः ज० (ल०७) ल०

S S I S S I I S S I S I I S I I

यस्य प्रसादाद्भुवनं शाश्वते पथि तिष्ठति ॥

ल०१ रगणः भ० (ल०७) गु० ल०१ तगणः ज०(ल०७) गु०

I S I S S I I S I S S I I S I S

उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता ।

गु०१ रगणः भ० (ल०७) गु० गु०१ तगणः ज० (ल०७) गु०

S S I S S I I S S S S I I S I S

नारायणं स्तौमि सदा भक्तानां भयनाशनम् ॥

इत्यादि । इदानीं रेफविपुलोदाहरणम्—

गु०१ रगणः रगणः गु० ल०१ भगणः ज० (ल०७) गु०

S S I S S I S S I S I I I S I S

लक्ष्मीपतिं लोकनाथं रथाङ्गधरमीश्वरम् ।

गु०१ रगणः रगणः गु०ल०१ यगणः ज० (ल०७) गु०

S S I S S I S S I I S S I S I S

यज्ञेश्वरं शार्ङ्गपाणिं प्रणमामि त्रयीं तनुम् ॥

व्यक्तिपक्षे प्रथमे पादे—

ल०१ रगणः रगणः गु० गु०१ मगणः ज० (ल०) गु०

I S I S S I S S S S S S I S I S

महाकविं कालिदासं वन्दे वाग्देवतागुरुम् ।

गु०१ मगणः यगणः ल० गु०१ जगणःज० (ल०७) गु०

S S S S I S S I S I S I I S I S

यज्ज्ञाने विश्वमाभाति दर्पणे प्रतिबिम्बवत् ॥

तृतीये पादे—

गु० १ यगणः यगणः गु० गु०१ तगणः ज० ( ल० ७ ) गु०

S I S S I S S S S S S I I S I S

कामिनीभिः सह प्रीतिः कस्मै नाम न रोचते ।

ल०१ यगणः रगणः ल० गु० १ जगणः ज० ( ल०७ ) गु०

I I S S S I S I S I S I I S I S

यदि न स्याद्वारिवीचिचञ्चलं हतजीवितम् ॥

इदानीं नकारविपुलोदाहरणम्—

गु० १ रगणः नगणः गु० गु० १ यगणः जगणः ( ल०७ ) गु०

S S I S I I I S S I S S I S I S

यस्या विभाति विपुला मन्मथस्थानपिण्डिका ।

गु० १ यगणः नगणः गु० गु० १ तगणः जगणः ( ल०७ ) गु०

S I S S I I I S S S S I I S I S

या चतुःषष्टिचतुरा सा स्त्री स्यान्नृपवल्लभा ॥

तथैव भारविः—

ल०१ मगणः नगणः गु० ल० १ तगणः ( ल० ७ ) गु०

I S S S I I I S I S S I I S I S

युयुत्सुनेव कवचं किमामुक्तमिदं त्वया ।

ल० १ रगणः नगणः गु० गु० १ जगणः ज० ( ल० ७ ) गु०

I S I S I I I S S I S I I S I S

तपस्विनो हि वसते केवलाजिनवल्कले ॥

व्यक्तिपक्षे कालिदासः—

ल० १ मगणः नगणः गु० गु० १ ममणः ज० ( ल० ७ ) गु०

। S S S । । । S S S S S । S । S

अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः ।

गु० १ जगणः यगणः गु० गु० १ तमगः जमगः ( ल०७ ) गु०

S । S । । S S S S S S । । S । S

तस्य धर्मरतेरासीद्-वृद्धत्वं जरसा विना ॥

तथाच—

ल० १ जगणः यगणः गु० गु० १ तगणः ज० ( ल० १ ) गु०

। । S । । S S S S S S । । S । S

तव मन्त्रकृतो मन्त्रैर्दूरात् संशमितारिभिः ।

गु० १ मगणः नगणः गु० गु० १ जगणः (ल० ७) गु०

S S S S । । । S S । S । । S । S

प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥

इदानीं तकारविपुलोदाहरणम्—

गु०१ मगणः तगणः गु० ल०१ भगणः ज० (ल०७) गु०

S S S S S S । S । S । । । S । S

वन्दे देवं सोमेश्वरं जटामुकुटमण्डितम् ।

गु०१ भगणः तगणः गु० ल०१ भगणः ज० (ल०७) गु०

S S । । S S । S । S । । । S । S

खट्वाङ्गधरं चन्द्रमःशिखामणिविभूषितम् ॥

व्यक्तिपक्षे—

गु०१ रगणः तगणः गु० गु०१ ज० जगणः (ल०७) गु०

S S । S S S । S S । S । । S । S

वन्दे कविं श्रीभारविं लोकसन्तमसच्छिदम् ।

ल०१ मगणः यगणः ल० गु०१ तगणः ज० (ल०७) गु०

I S S S I S S I S S S I I S I S

दिवादीपा इवाभान्ति यस्याग्रे कवयोऽपरे ॥

तथान्येषामपि प्रयोगः—

गु०१ जगणः यगणः गु० गु०१ यगणः ज० (ल०७) गु०

S I S I I S S S S I S S I S I S

लोकवत् प्रतिपत्तव्यो लौकिकोऽर्थः परीक्षकैः

गु०१ भगणः तगणः ल०ल०१ यगणः ज० (ल०७) गु०

S S I I S S I I I I S S I S I S

लोकव्यवहारं प्रति सदृशौ बालपण्डितौ ॥

इदानीं चकाराकृष्टं मकारविपुलोदाहरणम्—

गु०१ रगणः मगणः गु० गु०१ यगणः ज० (ल०७) गु०१

S S I S S S S S S I S S I S I S

सर्वातिरिक्तं लावण्यं बिभ्रती चारुविभ्रमा।

गु०१ रगणः मगणः ल० गु०१ भगणः ज० (ल०७) गु०

S S I S S S S I S S S S I S I S

स्त्रीलोकसृष्टिस्त्वन्यैव निःसामान्यस्य वेधसः ॥

व्यक्तिपक्षे श्रीकालिदासः—

ल०१ रगणः मगणः गु० ल०१ यगणः ज०(ल०७) गु०

I S I S S S S S I I S S I S I S

मनोऽभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः।

गु०१ यगणः यगणः गु० ल०१ मगणः (ल०७) गु०

S I S S I S S S I S S S I S I S

षड्जसंवादिनीः केका द्विधाभिन्नाः शिखण्डिभिः

ल०१ रगणः मगणः गु० गु०१ तगणः जगणः (ल०७) गु०

I S I S S S S S S S S I I S I S

अथ प्रदोषे दोषज्ञः संवेशाय विशाम्पतिम्।

गु०१ तगणः यगणः गु० ल०१ यगणः जगणः (ल०७) गु०

S S S I I S S S I I S S I S I S

सूनुः सूनृतवाक् स्रष्टुर्विससर्जोर्जितश्रियम् ॥

तृतीयपादे—

ल०१ रगणः यगणः गु० गु०१ भगणः जगणः (ल०७) गु०

I S I S I S S S S S I I I S I S

अदूरवर्त्तिनीं सिद्धिं राजन् विगणयात्मनः ।

ल०१ रगणः मगणः गु० गु०१ जगणः ज० (ल०) गु०

I S I S S S S S S I S I I S I S

उपस्थितेयं कल्याणी नाम्नि कीर्त्तित एव यत् ॥

ग०१ मगणः यगणः गु० ग०१ मगणः ज० (ल०७) गु०

S S S S I S S S S S S S I S I S

श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः ।

ल०१ रगणः मगणः गु० गु०१ यगणः जगणः (ल०७)गु०

I S I S S S S S S I S S I S I S

अनन्यजानेस्तस्यासीत् सैव जाया हिरण्मयी ॥

सकारेणापि क्वचिद्विपुला दृश्यते । यथा—

ल०१ भगणः यगणः गु० ल०१ तगणः ज० (ल०७) गु०

I S I I I S S S I S S I I S I S

जिते तु लभते लक्ष्मीं मृते चापि वराङ्गनाः ।

ल०१ यगणः सगणः गु० गु०१ तगणः ज० (ल०७) गु०

I I S S I I S S S S S I I S I S

क्षणविध्वंसिनि काये का चिन्ता मरणे रणे ॥

सङ्कीर्णाश्च विपुलाप्रकारा दृश्यन्ते । तथा च भारविणोक्तम्—

ल०१ मगणः मगणः गु० ल०१ यगणः ज० (ल०७) गु०

I S S S I I I S I I S S I S I S

क्वचित्काले प्रसरता क्वचिदापत्य-विघ्नता ॥

ल०१ रगणः भगणः गु० ल०१ मगणः ज० (ल०७) गु०

। S । S S । । S । S S S । S । S

मुनेव सारङ्गकुलं त्वया भिन्नं द्विषां कुलम् ॥

इत्यादयो विपुला विकल्पाः सङ्कीर्णाश्चानुकोटिशः काव्येषु दृश्यन्ते । सर्वासां विपुलानां चतुर्थो वर्णः प्रायेण गुरुर्भवतीत्याम्नायः ॥ १८ ॥

## प्रतिपादं चतुर्वृद्ध्या पदचतुरूर्द्धम् ॥ २० ॥

चतुर्णामक्षराणां वृद्धिश्चतुर्वृद्धिः । अनुष्टुभः पादादूर्द्ध्वं प्रतिपादं चतुरक्षरवृद्ध्या यत् वृत्तं निष्पद्यते तत् पदचतुरूर्द्ध्वं नाम ॥ तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४

तस्याः कटाक्षविक्षेपैः, कम्पिततनुकुटिलैरतिदीर्घैः ।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४

तक्षकदष्ट इवेन्द्रियशून्यः हतचैतन्यः

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १ २ ३ ४

पदचतुरूर्द्ध्वं न चलति पुरुषः पतति सहसैव ॥ अत्र गुरुलघुविभागो नेष्यते ॥ २० ॥

---

১৯। যাহার যুক্পাদে সপ্তম বর্ণ লঘু এবং অযুক্পাদে চতুর্থ অক্ষরের ঊর্দ্ধে ( যগণকে বাধা করিয়া ) ভগণ, রগণ, নগণ বা তগণ থাকিবে, তাহাকে "বিপুলা" বলে।

২০। অনুষ্টুভের পাদ হইতে প্রতিপাদে চাইর চাইর অক্ষর বৃদ্ধি হইলে ( অর্থাৎ প্রথম পাদে আট অক্ষর, দ্বিতীয়পাদে বার অক্ষর, তৃতীয়পাদে ষোল অক্ষর ও চতুর্থপাদে বিশ অক্ষর হইলে) যে ছন্দ নিষ্পন্ন হয়, তাহাকে "পদচতুরূর্দ্ধ" বলে। এই ছন্দে অক্ষরের গুরুলঘু বিষয়ে কোনও নিয়ম নাই।

## गावन्त आपीड़ः ॥ २१ ॥

गकारौ द्वौ अन्ते चेद्भवतः चतुर्णामपि पादानां, तत् पदचतुरूर्द्ध्वमापीड़्सञ्ज्ञकं भवति। अन्ते गुरुद्वयग्रहणादत्र शेषाणां लघुत्वमभ्यनुज्ञातं सूत्रकारेणेति मन्यामहे॥ तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८, १ २ ३ ४ ५ ६ ७ ८, १ २ ३ ४
कुसुमितसहकारे, हतहिमसमहिमस्थ, चित्रशाङ्के।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४
विकसितकमलसरसि मधुसमयेऽस्मिन्,
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १ २ ३ ४
प्रवससि पथिक! हतक! यदि भवति तव विपत्तिः ॥२१॥

## आदौ चेत् प्रत्यापीड़ः ॥ २२ ॥

गकारौ द्वौ आदौ चेद्भवतः चतुर्णां पादानां, तदा तत् पदचतुरूर्द्ध्वं प्रत्यापीड़सञ्ज्ञं भवति। अत्रापि पूर्ववत् शेषाणां लघुत्वमेव॥ तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४
चित्तं मम रमयति, कान्तं वनमिदमुपगिरिनदि।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४
कूजन्मधुकरकलरवकृत- जनधृति,
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १ २ ३ ४
पुंस्कोकिलमुखरितसुरभिकुसुमचित तरुतति॥ २२ ॥

---

২১। উক্ত পদচতুরূর্দ্ধের প্রত্যেক পাদের শেষ দুইটি অক্ষর যদি গুরু হয়, তবে তাহাকে "আপীড়" বলে। শেষ দুই বর্ণের গুরুত্ববিধান দ্বারা অন্য বর্ণগুলি লঘু থাকিবে, ইহাই সূত্রকারের অভিমত।

২২। উক্তপদ চতুরূর্দ্ধের প্রত্যেক পাদের আদি দুইটি অক্ষর যদি গুরু হয়, তবে তাহাকে "প্রত্যাপীড়" বলে। এস্থলেও অন্যবর্ণগুলি পূর্ব্ববৎ লঘু থাকাই অভিপ্রেত।

## प्रत्यापीड़ो गावादौ च ॥ २३ ॥

चकारोऽत्र इति समुच्चयार्थः । तस्यैव पदचतुरूर्द्धस्य अन्ते आदौ च यदि गकारौ भवतस्तदा प्रत्यापीड़ एव भवति ॥ तत्रोदाहरणम्—

१ २ ३४५६७८ १२ ३४५६७८ १२३ ४
का न्ता व द न स रो जं, हृ द्यं घ न सु र भि म धु र सा ढ्यम् ।
१ २ ३४ ५६ ७८९१० ११ १२ १२ ३४
पा तुं र ह सि स त त म भि ल ष ति म नो मे ॥
१ २ ३४ ५ ६७८९१० ११ १२ १३ १४ १५ १६ १२ ३ ४
कि ञ्चि न्मु कु लि त न य न म वि र त म णि त र म णी यम् ॥

तदेवं द्विप्रकारः प्रत्यापीड़ो भवति ॥ २३ ॥

## प्रथमस्य विपर्य्यासे मञ्जरीलवल्यमृतधाराः ॥ २४ ॥

आपीड़ग्रहणं निवृत्तम् । तेनैव समं लघुचराण्यनुवृत्तानि । तदेव पदचतुरूर्द्धं प्रथमस्य विपर्य्यासे मञ्जरीलवल्यमृतधाराभिधानं भवति । प्रथमस्य पादस्य द्वितीयेन विपर्य्यासे मञ्जरी । प्रथमस्य तृतीयेन विपर्य्यासे लवली । प्रथमस्य चतुर्थेन विपर्य्यासेऽमृतधारा । तत्र मञ्जर्य्युदाहरणम्—

१२३ ४ ५६ ७ ८ १ २३४ १ २ ३ ४५ ६ ७ ८
ज न य ति म ह तीं प्री तिं हृ द ये का मि नां चू त म ञ्ज री ।
१ २३ ४५ ६ ७८ ९ १० ११ १२ १२ ३४
मि ल द लि च क्र च म्बु प रि चु म्बि त के स रा,
१ २ ३ ४ ५ ६ ७८९१० ११ १२ १३ १४ १५ १६ १ २ ३ ४
को म ल म ल य वा न प रि न र्त्ति त त रु शि ख र स्थि ता ॥

---

২৩। উক্ত পদচতুরূর্দ্ধের প্রত্যেক পাদের আদি দুই অক্ষর এবং অন্ত দুই অক্ষর যদি গুরু হয়, তবে তাহাকেও "প্রত্যাপীড়" বলে। সুতরাং প্রত্যাপীড় দুই প্রকার হইল।

लवल्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४
वि र ह वि धु र त रु णा ङ्ग ना क पो लो प मं,

१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४
प रि ण ति ध वं पी त पा ण्डु च्छ वि।

१ २ ३ ४ ५ ६ ७ ८
ल व ली फ लं नि दा घे,

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १ २ ३ ४
भ व ति ज ग ति हि म क र शी त ल म ति स्वा दु ष्णा ह रम्॥

अमृतधारोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १ २ ३ ४
प रि वा ञ्छ सि क र्णं र सा य नं स त त म मृ त धा रा भिः,

१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४
य दि ह दि वा प र मा न न्द र सम्।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४
चे तः स्पृ श ध र णी ध र! वा णी म मृ त म यीं,

१ २ ३ ४ ५ ६ ७ ८
तत् का व्य गु ण भू ष णाम्॥

केचिदापीडादिष्वपि पादविपर्य्यासे सति मञ्जर्य्यादि नामानि इच्छन्ति॥ २४॥

इति पदचतुरूर्द्ध्वाधिकारः॥

২৪। দ্বিতীয়াদি পাদের সহিত প্রথম পাদের বিপর্য্যাস হইলে সেই পদচতুরূর্দ্ধ যথাক্রমে "মঞ্জরী" "লবলী" ও "অমৃতধারা" নামে অভিহিত হয়। অর্থাৎ প্রথম পাদের স্থানে দ্বিতীয়পাদ ও দ্বিতীয় পাদের স্থানে প্রথম পাদ হইলে "মঞ্জরী", প্রথম পাদের স্থানে তৃতীয়পাদ ও তৃতীয় পাদের স্থানে প্রথম পাদ হইলে "লবলী", এবং প্রথমপাদের স্থানে চতুর্থপাদ ও চতুর্থপাদের স্থানে প্রথম পাদ হইলে "অমৃতধারা" নাম হইবে। কেহ আপীড়াদি ছন্দেরও এইরূপ পাদবিপর্য্যাসে মঞ্জরী প্রভৃতি সংজ্ঞা স্বীকার করেন। (এই স্থানেই পদ চতুরূর্দ্ধাধিকার সমাপ্ত হইল)।

## उद्गतामेकतः सजौ सलौ नसौ जगौ भनौ जलौ ग सजौ सजौ ग ॥ २५ ॥

पाद इति प्रकृतमनुवर्त्तते। यत्र प्रथमे पादे सकारजकारसकारलकारैः दशाक्षराणि भवन्ति, द्वितीये पादे नकारसकारजकारगकारैर्दशैव, तृतीये पादे भकारनकारजकारलकारगकारैरेकादशैव, चतुर्थे पादे सकारजकारसकारजकारगकारैस्त्रयोदशैव तद्वृत्तमुद्गता नाम ॥

तत्रोदाहरणम्—

सगणः जगणः सगणः ल० नगणः सगणः जगणः गु०

।।S ।S। ।।S । ।।।।।S ।S। S

मृगलोचना शशिमुखी च रुचिरदशना नितम्बिनी ।

भगणः नगणः जगणः ल० गु० सगणः जगणः सगणः जगणः गु०

S।। ।।। ।S। । S ।।S ।S। ।।S ।S। S

हंसललितगमना ललना, परिणीयते यदि भवेत् कुलोन्नता ॥

यत्र सूत्रे गकारो लकारो वा श्रूयते, तत्र तेनैव वृत्तस्य पादः समाप्यते। उद्गतामिति कर्मविभक्तिश्रवणात् पठेदित्यध्याहार्य्यम्। एकत इति प्रथमं पादं द्वितीयेन सहाविलम्बेन पठेदित्यर्थः। उपस्थितप्रलुपितं पृथगाख्यमित्यतः सिंहावलोकितन्यायेनाख्याग्रहणमनुवर्त्तनीयम्। तेनाख्यमेव पादमेकतः पठेत्। एकत इति ल्यब्लोपे पञ्चमी ॥ २५ ॥

---

২৫। যাহার প্রথম পাদে যথাক্রমে সগণ, জগণ, সগণ ও একটি লঘুবর্ণ দ্বারা মোট ১০ অক্ষর, দ্বিতীয় পাদে নগণ, সগণ, জগণ ও একটি গুরুবর্ণ দ্বারা মোট ১০ অক্ষর, তৃতীয়পাদে ভগণ, নগণ, জগণ, একটি লঘুবর্ণ ও একটি গুরুবর্ণ দ্বারা মোট ১১ অক্ষর, এবং চতুর্থপাদে সগণ, জগণ, সগণ, জগণ ও একটি গুরুবর্ণ দ্বারা মোট ১৩ অক্ষর, সেই বৃত্তকে "উদ্গতা" বলে। এস্থলে ইহাও জ্ঞাতব্য যে, এই ছন্দের প্রথম পাদ দ্বিতীয় পাদের সহিত (একতঃ) অবিলম্বে পড়িতেহইবে।

## तृतीयस्य सौरभकं र्नौ भ्गौ ॥ २६ ॥

तृतीयस्येति ग्रहणात् तस्या उद्गताया एवान्ये त्रयः पादा गृह्यन्ते। तृतीयपादे तु विशेषः। तृतीये पादे रेफनकारभकारगकारै-र्दशाक्षराणि भवन्ति, तत् सौरभकं नाम ॥ तत्रोदाहरणम्—

सगणः जगणः सगणः ल० नगणः सगणः जगणः गु०

। । ऽ । ऽ । । । ऽ । । । । । । ऽ । ऽ । ऽ

विनिवारितोऽपि नयनेन, तदपि किमिहागतो भवान् ।

रगणः नगणः भगणः गु० सगणः जगणः सगणः जगणः गु०

ऽ । ऽ । । । ऽ । । ऽ । । ऽ । ऽ । । । ऽ । ऽ । ऽ

एतदेव तव सौरभकं, यदुदीरितार्थमपि नावबुध्यते ॥ २६ ॥

## ललितं नौ सौ ॥ २७ ॥

तस्या एव उद्गतायास्तृतीयपादस्थाने यदा नौ सौ भवतस्तदा ललितं नाम वृत्तम् ॥ तत्रोदाहरणम्—

सगणः जगणः सगणः ल० नगणः सगणः जगणः गु०

। । ऽ । ऽ । । । ऽ । । । । । ऽ । ऽ । ऽ

सततं प्रियंवदमनूनममलहृदयं गुणोत्तरम् ।

नगणः नगणः सगणः सगणः सगणः जगणः सगणः जगणः गु०

। । । । । । ऽ । । ऽ । । ऽ । ऽ । । । ऽ । ऽ । ऽ

सुललितमतिकमनीयतनुं पुरुषं त्यजन्ति न तु जातु योषितः ॥२७॥

---

২৬। যাহার তৃতীয়পাদে যথাক্রমে রগণ, নগণ, ভগণ ও একটি গুরুবর্ণ দ্বারা মোট ১০ অক্ষর এবং অন্য তিন পাদ দর্শিত উদ্গতা ছন্দের লক্ষণাক্রান্ত, তাহাকে "সৌরভক" বলে।

২৭। যাহার তৃতীয়পাদে যথাক্রমে দুইটি নগণ ও দুইটি সগণ দ্বারা মোট ১২ অক্ষর ও অন্য তিন পাদ দর্শিত উদ্গতালক্ষণাক্রান্ত তাহাকে "ললিত" নামক বৃত্ত বলে।

उपस्थितप्रचुपितं पृथगाद्यं म्सौ ज्भौ गौ
स्नौ ज्रौ ग् नौ स् नौ न् ज्यौ ॥ २८ ॥

यस्य प्रथमे पादे मकारसकारजकारभकाराः गकारौ च भवतः, द्वितीये सकारनकारजकाररेफाः गकारश्च, तृतीये नकारौ सकारश्च, चतुर्थे त्रयो नकाराः जकारयकारौ च, तदुपस्थितप्रचुपितं नाम वृत्तं भवति ॥

तत्रोदाहरणम्—

मगणः सगणः जगणः भगणः गु० गु० सगणः नगणः जगणः रगणः गु०

S S S I I S I S I S I I S S I I S I I I I S I S I S S

रामाकामकरेणुका मृगायतनेत्रा, हृदयं हरति पयोधरावनम्रा ।

नगणः नगणः सगणः नगणः नगणः नगणः जगणः यगणः

I I I I I I I S I I I I I I I I I S I I S S

इयमतिशयसुभगा, बहुविधनिधुवनकुशला ललिताङ्गी ॥

पृथगाद्यमितोद्गतानेकतः पठेदिति अनुवृत्तिनिरासार्थम् । अत्र तृतीयपादव्यवस्था सकारस्य विभज्य पाठलिङ्गात् ॥ २८ ॥

वर्द्धमानं नौ स्नौ न्सौ ॥ २९ ॥

तृतीयस्येति वर्त्तते । तस्मिन्नुपस्थितप्रचुपिते तृतीयस्य पादस्य स्थाने यदा नकारौ सकारनकारौ पुनर्नकारसकारौ च भवतस्तदा वर्द्धमानं नाम वृत्तं भवति । तत्रोदाहरणम्—

---

২৮। যাহার প্রথম পাদে যথাক্রমে মগণ, সগণ, জগণ ও দুইটি গুরুবর্ণ দ্বারা মোট ১৪ অক্ষর, দ্বিতীয় পাদে সগণ, নগণ, জগণ, রগণ ও একটি গুরুবর্ণ দ্বারা মোট ১৩ অক্ষর, তৃতীয় পাদে দুইটি নগণ ও সগণ দ্বারা মোট ৯ অক্ষর, এবং চতুর্থ পাদে তিনটি নগণ, জগণ ও যগণ দ্বারা মোট ১৫ অক্ষর, তাহাকে "উপস্থিত-প্রচুপিত" নামক বৃত্ত বলে। এই সূত্রে "পৃথগাদ্যং" এই অংশ দ্বারা উদ্গতা ছন্দের "একতঃ" অধিকার নিবৃত্ত হইল, অর্থাৎ এই ছন্দে উদ্গতার ন্যায় প্রথম পাদ দ্বিতীয় পাদের সহিত অবিলম্বে পড়িতে হইবে না।

मगणः सगणः जगणः भगणः गु० गु०

S S S । । S । S । S । । S S

विम्बोष्ठी कठिनोन्नतस्तनावनताङ्गी

सगणः भगणः जगणः रगणः गु०

। । S । । । S । S । S S

हरिणीशिशुनयना नितम्बगुर्वी ।

नगणः नगणः सगणः नगणः नगणः सगणः

। । । । । । । S । । । । । । । S

मदकलकरिगमना परिणतशशिवदना

नगणः नगणः नगणः जगणः यगणः

। । । । । । । । । । S । । S S

जनयति मम मनसि मुदं मदिराक्षी ॥ २८ ॥

## शुद्धविराडृषभं तज्राः ॥ ३० ॥

तस्मिन्नेवोपस्थितप्रचुपिते यदा तृतीयस्य पादस्य स्थाने तकार-जकाररेफा भवन्ति, तदा शुद्धविराडृषभं नाम वृत्तं भवति ॥

तत्रोदाहरणम्—

मगणः सगणः जगणः भगणः गु०गु०:सगणः नगणः जगणः रगणः गु०

S S S । । S । S । S । । S S, । । S । । । । S । S । S S

कन्येयं कनकोज्ज्वला मनोहरदोभिः शशिनिर्मलवदना विशालनेत्रा ।

तगणः जगणः रगणः, नगणः नगणः नगणः जगणः यगणः

S S । । S । S । S, । । । । । । । । । । S । । S S

पीनोरुनितम्बशालिनी, सुखयति हृदयमतिशयं तरुणानाम् ॥

---

২৯। যাহার তৃতীয় পাদে যথাক্রমে দুইটি নগণ, সগণ, নগণ, নগণ ও সগণ দ্বারা মোট ১৮ অক্ষর এবং অন্য তিন পাদ দর্শিত "উপস্থিতপ্রচুপিত" ছন্দের লক্ষণাক্রান্ত তাহাকে "বর্দ্ধমান" নামক বৃত্ত বলে।

उपस्थितप्रचुपितादीनामस्मिन् प्रवेशयितुं न शक्यन्ते संज्ञाः, इति नोक्ताः ॥ ३० ॥

अर्द्धे ॥ ३१ ॥

पूर्वमुच्चावचानि छन्दांसि उक्तानि, इदानीं नियमेनोच्यन्ते । अर्द्धे इत्यधिकारोऽयमाध्यायपरिसमाप्तेः, यदितः ऊर्द्धमनुक्रमिष्यामः, अर्द्धे एव तत् वेदितव्यम् ॥ ३१ ॥

उपचित्रकं सौ स्लौ ग्, भौ भ्गौ ग् ॥ ३२ ॥

यस्य प्रथमे पादे सकारास्त्रयो लकारगकारौ च क्रमेण, द्वितीये भकारास्त्रयो गकारौ च भवतस्तदुपचित्रकं नाम वृत्तम् । अर्द्धशब्दस्य समप्रविभागवचनत्वात् द्वितीयमप्यर्द्धं तादृशमेव ॥ तत्रोदाहरणम्—

सगणः सगणः सगणः ल० गु०, भगणः भगणः भगणः भगणः गु०गु०

। । S । । S । । S । S, S । । S । । S । । S S

उपचित्रकमत्र विराजते, चूतवनं कुसुमैर्विकसद्भिः ।

सगणः सगणः सगणः ल० गु०, भगणः भगणः भगणः ल० गु०

। । S । । S । । S । S, S । । S । । S । । S S

परपुष्टविघुष्टमनोहरं, मन्मथकेलिनिकेतनमेतत् ॥ ३२ ॥

---

৩০। যাহার তৃতীয় পাদে যথাক্রমে তগণ, জগণ ও রগণ দ্বারা মোট ৯ অক্ষর এবং অন্য তিন পাদ যথোক্ত উপস্থিতপ্রচুপিত ছন্দের লক্ষণাক্রান্ত তাহাকে "শুদ্ধ বিরাড়ৃষভ" নামক বৃত্ত বলে।

৩১। এইটি অধিকার সূত্র। এই অধ্যায় সমাপ্তি পর্য্যন্ত "অর্দ্ধে" এই সূত্রটি অধিকৃত হইবে, অর্থাৎ অতঃপর অধ্যায়সমাপ্তি পর্য্যন্ত যে সকল সূত্র করা হইবে, সে সমস্তই অর্দ্ধের লক্ষণ হইবে।

৩২। যাহার প্রথম পাদে যথাক্রমে তিনটি সগণ একটি লঘুবর্ণ ও একটি গুরুবর্ণ দ্বারা মোট ১১ অক্ষর, দ্বিতীয় পাদে তিনটি ভগণ ও দুইটি গুরুবর্ণ দ্বারা মোট ১১ অক্ষর, এবং (সমপ্রবিভাগবাচী অর্দ্ধ শব্দ দ্বারা) দ্বিতীয়ার্দ্ধ ও এইরূপ অর্থাৎ তৃতীয় পাদ প্রথম পাদের ও চতুর্থ পাদ দ্বিতীয় পাদের লক্ষণাক্রান্ত তাহাকে "উপচিত্রক" নামক বৃত্ত বলে।